THE DEPARTMENT OF PUBLIC INSTRUCTION, BOMBAY.

# ॥ श्रीहर्षचरितमहाकाव्यम् ॥

# BÂṆABHAṬṬA'S BIOGRAPHY

OF

# KING HARSHAVARDHANA OF STHÂṆVÎS'VARA

WITH

## S'AṄKARA'S COMMENTARY, SAṄKETA.

---

EDITED,

WITH CRITICAL NOTES,

BY

A. A. FÜHRER, PHIL. D., M.A.,

*Professor of Indian Languages, Bâle.*

---

1,000 Copies.

---

TEXT AND COMMENTARY.

---

1909.



**Price Rs. 2.**

**Bombay Sanskrit and Prakrit Series, No. LXVI.**

---

**SOLD AT**

GOVERNMENT CENTRAL PRESS, BOMBAY.

To

*THE REVERED MEMORY OF THE LATE HOFRAT*

**Professor Dr. George Johann Bühler, C.I.E.,**

WHOSE EMINENT RESEARCHES INTO THE HISTORY OF
SANSKRIT LITERATURE HAVE GREATLY ADVANCED
OUR KNOWLEDGE,

THIS WORK IS DEDICATED,

*AS A TOKEN OF ADMIRATION AND GRATITUDE,*

BY

HIS FORMER PUPIL,

THE EDITOR.

# PREFACE.

The present critical edition of Bâṇabhaṭṭa's S'rî-Harsha-charita is based on the following eight trustworthy and complete manuscripts :—

(*a*) Ms. A., containing 4,200 *granthas*, and written in beautiful old Devanâgarî characters on 154 leaves, à 10 lines, à 40-42 *aksharas*; belonging to S'â-trî Raṇçhoḍ Nîlkaṇṭh of Ahmadâbâd. It is a fairly correct copy of Bâṇa's text, and a fine specimen of Indian medieval calligraphy.

(*b*) Ms. B., written in the Devanâgarî characters on 165 leaves, à 10 lines, à 38-40 *aksharas*, dated *Samvat* 1701, *mârghaśîrsha-sudi* 15, *budhe*; belonging to the late Bâpudeva S'âstrî of the Banâras Sanskrit College. This manuscript was copied, according to a colophon, in A. D. 1643 at Sûrath from an ancient palm-leaf manuscript in the possession of one Keśav, Nâgar Brâhman, and brought to Banâras (Vârâṇasî).

(*c*) Ms. D., being an apograph of an old Devanâgarî manuscript, dated Samvat 1520, made by Prof. Dr. Bühler at Banâras, in 1874. Unfortunately, the text of this manuscript breaks up near the end of the second chapter, and shows a *hiatus valde deplorandus* of 98 folios, continuing again with about the middle of the seventh chapter.

(*d*) Ms. K., Dekkhan College, Pûnâ, Collection of 1875-76, No. 220, a very old manuscript, written in S'âradâ characters on 281 old leaves, à 12-13 lines, à 16-18 *aksharas*, and 11 new

leaves (7 inlying and 4 at the end), à 22 lines, à 18-20 *aksharas*.

(*e*) Ms. $K_1$., Dekkhan College, Pûnâ, Collection of 1875-76, No. 221, written in S'âradâ characters on 164 leaves, à 17 lines, à 22-24 *aksharas*.

(*f*) Ms. $K_2$., Dekkhan College, Pûnâ, Collection of 1875-76, No. 219, written in Devanâgarî characters on 120 leaves, à 28 lines, à 20-22 *aksharas*.

Mss. K., $K_1$., and $K_2$., which are of great importance in settling the original readings of Bâṇa, were obtained by Prof. Dr. Bühler during his Kâśmîr tour in 1875.

(*g*) Ms. $K_3$., written in S'âradâ characters on 133 leaves, à 24 lines, à 23-25 *aksharas*, and dated *Laukika-Samvat* 55, having been purchased by Dr. M. Aurel Stein at S'rînagar in 1889.

At the same time, Dr. Stein obtained a valuable fragment of an old S'âradâ manuscript (ff. 104-111, à 23 lines, à 26-28 *aksharas*, comprising the end-portion of chapter VIII), dated S'âke 1526.

(*h*) Ms. T., written in Grantha characters on 88 leaves, à 31 lines, now preserved in the India Office Library at London, being a transcript of Ms. No. 10213 in the Tanjore Palace Library.

The two Mss. preserved at Tanjore (Nos. 10213 and 10214) extend only as far as those described by Dr. F. E. Hall in the Preface to his *Vâsavadattâ*, pp. 12 ff., *see* "Classified Index" by Dr. A. C. Burnell, p. 163A.

Mss. A. B. D. and T. belong to one and the same family, and are derived from one Indian *codex archetypus*; whilst the four Kâśmîr Mss. present in many places

somewhat different versions of the text, on which also Saṅkara's *ṭippaṇa*, styled Saṅketa, is based. The full collection of the *variae lectiones*, given under the text, which are found in the eight Mss., with the exception of palpable mistakes of the copyists, makes it superflu us to enter on a discussion of the details.

The text of S'aṅkara's Commentary is based on the following three manuscripts :—

(1) Ms. $C_1$, Dekkhan College, Pûnâ, Collection of 1875-76, No. 222, containing 2550 *granthas*, and written in Devanâgarî characters on 47 leaves, à 15-16 lines, à 58-60 *aksharas*. This manuscript has been corrected *secunda manu* in many passages with the help of a much older and more reliable manuscript ; it was obtained by Prof. Dr. Bühler in 1875 during his Kâśmîr tour.

(2) Ms. $C_2$., written in Devanâgarî characters on 71 leaves, à 12 lines, à 46-48 *aksharas*. The manuscript shows many *lacunae* and has been carelessly copied. It was obtained by the late Prof. Dr. P. Peterson at S'rînagar in 1884.

(3) Ms. $C_3$., being an apograph of an old Devanâgarî manuscript, dated Samvat 1520, made at Banâras by Prof. Dr. Bühler in 1874. Unfortunately this Ms. breaks up near the end of the second chapter, and shows a *hiatus valde deplorandus* of 159 folios, continuing again near the end of the eighth chapter. Full extracts from this manuscript have been given in the foot-notes to

the text, as it differs widely from the established readings of S'aṅkara's *Tippaṇa.*

The S'rî-Harshacharita has been published at Calcutta in 1876, at Jambû in Kâśmîr in 1878, and at Bombay in 1892. The Calcutta issue, "edited with modifications" by Pandit Jîbânand Vidyâsâgar, is perfectly useless, as it is based on a single faulty manuscript (probably Paṇḍit Îśvara Chandra's Kâśmîr copy), and as the editor has corrected Bâṇa's text very freely, without marking his conjectures as such. The Jambû edition is based on more reliable materials, and besides is accompanied by S'aṅkara's Commentary; its readings mostly agree with those of Mss. K. and $C_1$. It was published, Samvat 1936, under the auspices of Mahârâjâ Raṇ Bîr Sinh Bahâdurjî, the ruler of "Jambû, Kâśmîr, and Tibbat." The Bombay print of 1892, prepared by Kâśînâth Pâṇḍurang Parab and S'âstrî Dhuṇḍi Paraśurâm Vajhe, is, like all other publications of the "Nirṇayasâgar Press," a faithful reproduction of Bâṇa's and S'aṅkara's texts as preserved in Kâśmîr; its readings agree almost entirely with those of Mss. $K_3$. and $C_1$., and are probably based on Dr. Bhâu Dâjî's two manuscripts, which he obtained from Kâśmîr in 1871.

The materials for this edition were sent to the press in 1885, and were printed off as far as page 224 at the end of 1887; but, owing to my multifarious duties in connection with the Archaeological Survey of India and the Lakhnau Provincial Museum, I was unable to resume the work of editing, until my return to Europe lately.

BÂLE (Suisse), A. A. F.

*15th April 1901.*

# ॥ अथ श्रीहर्षचरितकाव्यं प्रारभ्यते ॥

## ओं श्रीगणेशाय नमः। ओं स्वस्ति[1] ॥



इच्छादिशक्तिनिचय[2]प्रसरक्रमेण
विश्वावभासनविधौ प्रथितप्रभावा।
याध्यायिनां हृदयकोकनदप्रतिष्ठा
रूपं प्रकाशयति नौमि सरस्वतीं ताम्[3] ॥ १ ॥
न[4]मस्तुङ्गशिरश्चुम्बिचन्द्रचामर[5]चारवे।
त्रैलोक्यनगरारम्भमू[6]लस्तम्भाय शम्भवे ॥ २ ॥

ओं स्वस्ति श्रीगणेशाय नमः ॥ ओं श्चोतन्मदाम्बुभरनिर्भरचण्डगण्डशुण्डाग्रशौण्डपरिमण्डितभूरिभृङ्गान्। विघ्नानि वानवरतं चलगण्डतालैरुत्सारयञ्जयति जातघृणो गणेशः। शङ्करनामा कश्चिच्छ्रीमत्पुण्याकरात्मजो व्यलिखत्। शिष्टोपरोधवशात: सङ्केतं हर्षचरितस्य। सर्वकर्माणि कुर्वीत प्रणिपत्येष्टदेवतामिति शिष्टाचारमनुपालयन्। अपारे काव्यसंसारे कविरेव प्रजापतिः। यथास्मै रोचते विश्वं तथेदं परिवर्तते। इति काव्यलक्षणामपूर्वां सृष्टिं स्थिरां प्रवर्तयन्नेष कविः शिवं बहुशक्तियुतमपि नियतशक्त्यात्मकमेव स्तौति ॥ १ ॥

नमस्तुङ्गेत्यादिना। न क्वचित्प्रणतो यो मूर्धा तत्स्पर्शी चन्द्र एव सितवालतुल्यप्रभाप्रसरतया स्वेदादिविनाशाद्विशिष्टस्थानस्थितश्च चामरम्। त्रैलोक्यमेव नानाभङ्गिशोभित्वान्नगरम्। तदारम्भे मूलस्तम्भः। नगरारम्भे हि मूलस्तम्भो भवति। तत्र[7] च पट्टबन्धादिवर्दुत्क्षेपणानन्तरमुन्नते[8] पृ[9]ष्ठदेशे

---

१. ओं नमः सर्वज्ञाय A. B. D. ओं श्रीसरस्वत्यै नमः K 1. K2. Jambû ed. २. प्रचय K 1. K2. Jambû ed. ३. A. B. D. T. omit this s'loka. ४. नम इति। एकत्र न क्वचित्प्रणतम् C3. ५. चामर इति। केशायमानप्रसरात्किरणस्वात् C3. ६. मूलस्तम्भेति। नगरारम्भमूलस्तम्भे हि पट्टबन्धादिवच्चामरं बध्यत इति स्थितिः C3. ७. °अत्र° C2. Jambû ed. ८. °उत्प्रेक्षण°C1. C2. Jambû ed. ९. पृष्ट° C2.

हरकण्ठग्रहानन्दमीलिताक्षीं नमाम्युमाम् ।
कालकूटविषस्पर्शजातमूर्च्छागमामिव ॥ ३ ॥
नमः सर्वविदे तस्मै व्यासाय कविवेधसे ।
चक्रे पुण्यं सरस्वत्या यो वर्षमिव भारतम् ॥ ४ ॥

चन्द्रतुल्यं श्वेतं चामरं क्रियत इति स्थितिः । केचित्पुनस्त्रैलोक्यनगरस्यारम्भे मूलं मूलकारणं परमाणवस्तेषामुपाश्रयेण मूलकारणत्वात्स्तम्भ इव । ते हि तद्वशात्कार्यमारभन्ते तस्य निमित्तकारणत्वादित्याहुः । स्वयम्भूः शम्भुरादित्य इति नाम सहस्रे दृष्टत्वाद्धरेः । शम्भूब्रह्मत्रिलोचनावित्यभिधाकोशदर्शनाच्च ब्रह्मणोपि नमस्कारोयमित्यन्ये वदन्ति । व्याकुर्वते च हरिपक्षे त्रैलोक्याक्रमणकाले । यद्वा । यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ मही इत्यभिप्रायेण तुङ्गमुच्छ्रितं द्युलक्षणं यच्छिरस्तच्चुम्बिचन्द्र एव चामरं तेन चारवे । ब्रह्मपक्षे । चन्द्रः स्वर्णं तन्मयं चामरमिव चामरं केशकलापः । हिरण्यकेशो हि ब्रह्मा । त्रैलोक्यादीनि सर्वत्र तुल्यमिति ॥ २ ॥

हरेत्यादिना । प्रियं प्रतिगाढस्नेहादि सौकुमार्यं चोपमयोच्यते । कालकूटविषेति प्रशंसार्थः सामान्यपदप्रयोगो मेरुमहीधरचूतवृक्षादिवत् । आगमः प्रारम्भः ॥ ३ ॥

संप्रत्युत्कृष्टकवित्वाभिमानेन तादृशमेव कविवरं स्तौति । नमः सर्वेत्यादिना । सर्वा वेदाधिका विद्या गीतादि कलाश्च वेत्ति यस्तस्मै । तदुक्तम् । नासौ शब्दो न तद्वाच्यं न सा विद्या न सा कला । जायते यन्न काव्याङ्गमहोभारो महाकवेरिति । कविरेव वेधाः । उक्तं च । अपारे काव्यसंसारे कविरेव प्रजापतिः । कवीनां वेधाः । कविशब्दोत्रोपचारात्कविबुद्धिषु वर्तते । तेन कविबुद्धीनां श्रेष्ठ इत्यर्थः । तथा चाह मुनिः । इतिहासोत्तमादस्माज्जायन्ते कविबुद्धय इति । यद्वा । व्युत्पत्त्युत्पादनद्वारेण कवय एवं भूताः सन्तः क्रियन्ते मुख्य एव कविशब्दस्यार्थः । यदुक्तम् । इदं कविवरैः सर्वैराख्यानमुपजीव्यत इति । पुण्यं पावनम् । यदुक्तम् । भारताध्ययनात्पु-

१. हरकण्ठाग्रहानम्भन्द् K. २. स्पर्शाञ्जात° B. ३. सर्वविद इति । समस्ताविद्याः कलालोकस्थितीश्च यो वेत्ति सर्वज्ञश्च C3. ४. कविवेध इति । कावेर्वेधा इव C3 ५. सरस्वत्येति । वाण्या नद्या च C3. ६. वर्षमिवेति । भारतेलावृतादिवर्षं C3. ७ चोपमयो° C1. C2. Jambû ed. ८. प्रयोगे C2. Jambû ed. ९. का इशं C1. १०. यत्र C2.

प्रायः कु[1]कवयो लोके रा[2]गाधिष्ठितदृ[3]ष्टयः ।
कोकिला इव जायन्ते वाचालाः का[4]मकारिणः ॥ ५ ॥
सन्ति श्वान इवा[5]संख्या जा[6]तिभाजो गृहे गृहे ।
उ[7]त्पादका न बहवः कवयः शरभा इव ॥ ६ ॥

ण्यादपि पादमधीयतः । अद्दधामस्य पूयन्ते सर्वपापानि देहिन इति । सरस्वती वाणी । तस्या लताया इव पुष्पादिहेतुत्वात् । वर्षे वृष्टिमिव । वर्षं वा स्थानविशेषः । यतोसौ तत्रास्ते । यदुक्तम् । यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित् । भरतानधिकृत्य कृतो ग्रन्थो भारतस्तम् । यद्वा । भारतं वर्षमिव । भरतः कश्चिद्राजा । तस्य निवासं भारतं वर्षं भूभागैकदेशस्तदिव । उक्तं च । स्याद्वृष्ट्यां लोकधात्वंशे वत्सरे वर्षमस्त्रियामिति । यद्वा । भारतवर्षान्तरस्थाभावा मनुष्येषु सुलभास्तद्वन्महाभारतस्था सरस्वती । एतदपि सरस्वत्याख्यया नद्या पुण्यमेव सर्वज्ञतागुणकथनेन कविप्रशंसां कृत्वा काव्यप्रशंसामाह प्राय इत्यादिना ॥ ४ ॥

काव्यमेवं नाम स्वभावसुभगं येनेदृशा अपि कवयः प्रायः प्राचुर्येण कोकिला इव जायन्ते वल्गुवाचः संपद्यन्ते । किं पुनः संविशिष्टा न जायेरन् । केचित्पुनर्भूयसा कुत्सिताः कवयो जायन्त इति कुकविनिन्दैवेयमिति व्याख्यातवन्तः । रागो द्वेषपूर्वकोनर्थाभिनिवेशस्तेनाधिष्ठिता दृष्टिर्बुद्धिर्येषाम् । वाचाला असंबद्धप्रलापिनः । कामेन स्वेच्छया न त्वलङ्कारकृद्दर्शितनीत्या कुर्वन्ति ये ते । कोकिलपक्षे । कुकन्ति गृह्णन्ति चेतांसीति कुकाः । ते च ते वयो मयूरप्रवराः पक्षिणः । रागो लौहित्यं दृष्टिश्चक्षुः । वाचा भारत्या । आला आसमन्ताल्लान्त्यावर्जयन्ति । यतस्तादृशाः सन्तः कामं व्यसनं कुर्वन्ति तच्छीलाः कामोद्दीपनविभावतां यान्तीत्यर्थः । यद्वा । अवाचाला अकारप्रश्लेषोत्र ॥ ५ ॥

सन्तीत्यादि । असंख्या अगणनार्हाः । जातिं स्वरूपवर्णनामात्र रूपां

---

१. कुकवय इति । कोकन्ते चेतांसि गृह्णन्तीति कुकाः । कुकाश्च ते वयः पक्षिणश्च ते कुकवयो मधुरवाचः शकुनयः कुत्सिताश्च कवयः C3. २. रागेति । मत्सरो रक्तत्वं च C3. ३ मूर्तयः K. K1. K2 T. ४. कामचारिणः K2. T. Jambû ed. कामकारिणः । मनस्वेच्छया न त्वलङ्का .....न कुर्वन्तीति कामोद्दीपकाश्च C3. ५. असंख्याः । अगणिताः । परित्यक्तसङ्ख्यामाश्च C3. ६. जातिभाजः । जातिप्र ... ..द्वाः पक्षेलङ्कारश्च C3. ७. उत्पादकाः । नवार्थसं ... ..र्वचरणाश्च C3.

अन्यवर्णपरावृत्त्या बन्धचिह्ननिगूहनैः ।
अनाख्यातः सतां मध्ये कविश्चौरो विभाव्यते ॥ ७ ॥

श्लेषप्रायमुदीच्येषु प्रतीच्येष्वर्थमात्रकम् ।
उत्प्रेक्षा दाक्षिणात्येषु गौडेष्वक्षरडम्बरम् ॥ ८ ॥

वक्रोक्तिशून्यां भजन्ते । गतोस्तमर्को भातीन्दुर्यान्ति वासाय पक्षिण इत्यादिवत् । श्वानोप्यसंख्या । नास्ति संख्यं सङ्ग्रामो येषां ते । जातिशब्देनात्र श्वजातिसमवेता अमेध्यभक्षणादयो गृहीताः । यद्वा । श्वत्वं नाम जातिः । तत्प्रतिपादनं प्रयोजनान्तरशून्यतामावेदयति । उत्पादका नवनिर्माणकारिण ऊर्ध्वपादाश्च । शरभा हि प्राणिभेदाः । अष्टपादा एते श्वजातीया इति केचित् ॥ ६ ॥

अन्येति कविश्चौरः सत्हृदयानां मध्ये नाख्यातः । कथितोपि न ज्ञायते । न आसमन्तात्ख्यातोपि तु किंचित्प्रथितो वा । अन्ये पूर्वकविनिबद्धविलक्षणा ये वर्णा अक्षराणि तेषां रचनेन । बन्धचिन्हं श्रीलक्ष्मीप्रभृतिरचनालिङ्गम् । अन्य तु भाषालङ्कारप्रभृतिबन्धचिह्नमाहुः । अथ च । सतां साधूनां मध्ये चौरो लक्ष्यते । कीदृक् । न ना अना कापुरुषोख्यातोप्रसिद्धः । केन । अन्यः प्राक्तनच्छायाव्यतिरिक्तस्त्रासकृतः पाण्डिमादिर्वर्णः । मुखरागविशेषस्तत्परिवर्तनेन । यद्वा । शूद्रत्वे सति द्विजादिवर्णाश्रयेण । स्वजात्युचितस्य स्वभावस्य त्यक्तुमशक्यत्वाद्भावप्रकटनमवश्यमेव भवति । यतो बन्धः शृङ्खलादिकृतो ग्रन्थिस्तच्चिह्नं त्वग्दूषणादि ॥ ७ ॥

श्लेषेत्यादि । मात्रकपदेन श्लेषयमकाद्यलङ्कारशून्यत्वं दर्शयति । अक्षरेत्यादिना । अर्थविशेषाभावं प्रसादादिगुणगुम्फनाभावं चाख्याति । एतदुक्तं भवति । क्वचित्कश्चिद्गुणोपि भवति स च भवन्नपि न सत्हृदयजनावर्जक इति । अमुनैवाभिप्रायेण नव इत्यादीनि प्रत्येकं विशेषणपदानि वक्ष्यति ॥ ८ ॥

---

१. अन्यवर्णपरावृत्त्या । व .....राणि पक्षे शुक्लादीनि . णादयश्च C?. २. बन्धचिन्हं ।बन्धोर..... नं च पक्षे C3. ३. अनाख्यतः । अनापुरुष आख्यातः प्रसिद्धः C.a. ४. डम्बरः K. T. Jambû ed. ५. नु Jambû ed. ६. चिह्नत्वम् C2. Jambû ed

नवोर्थो जातिरग्राम्या[1] श्लेषोक्लिष्टः स्फुटो रसः ।
विकटाक्षरबन्धश्च[2] कृत्स्नमेकत्र दुष्करम् ॥ ९ ॥

किं कवेस्तस्य काव्येन सर्ववृत्तान्तगामिनी[3] ।
कथेव भारती[4] यस्य न व्याप्नोति[5] जगत्त्रयम्[6] ॥ १० ॥

उच्छ्वासान्तेप्यखिन्नास्ते[7] येषां वक्त्रे[8] सरस्वती ।
कथमाख्यायिकाकारा न ते वन्द्याः कवीश्वराः[9] ॥ ११ ॥

नव इत्यादि । नव आद्यैः कविभिरनिबद्धः । चमत्कारी च । जातिः स्वभावोक्तिः । अग्राम्येति । न तु गतोस्तमर्क इत्यादिरूपा । स धर्मेषु तन्त्रप्रयोगः श्लेषः । अक्लिष्टः सम्यगनेकार्थप्रतिपादनक्षमः । स्फुटो दुर्बोधभङ्ग्यादिभिरदूषितः । रसः शृङ्गारादिः । विकटः । उदारतालक्षणं बन्धगुणयुक्तः । यत्र सति नृत्यन्तीव पदानि प्रतिभासन्ते ॥ ९ ॥

किमित्यादि । वृत्तानि वर्णमात्रागणसमार्ध[10]समविषमरूपाणि । तदन्तगमनं तद्विरचनक्षमत्वम् । भारती वाणी । न व्याप्नोति । अदृष्टमपि दृष्टमिव जगत्त्रयं प्रतिभानवशाद् व्युत्पत्तेश्च तथा तेन प्रकाशयति । यद्वा । जगत्त्रयप्रथिताभवतीति स्फुट एवार्थः । भरतानधिकृत्य प्रथिता भारती कथेव । सापि सर्वे ये वृत्तान्ताः सत्पुरुषचरितान्युपाख्यानानि च तान्गमयति । बोधयति । तथा सर्वत्र ज्ञेयाभवति । तथा च । नारदोश्रावयद्देवानसितो देवलः पितॄन् । गन्धर्वयक्षरक्षांसि श्रावयामास वैशुक इत्युक्तम् ॥ १० ॥

अधुना स्वगुरुतः स्वप्रभृतिभिः कृतानाख्यायिकादीन्काव्यभेदांस्तुवन्नौद्धत्यार्थं सर्वत्र नमस्कारमाह । उच्छ्वासान्त इति । उच्छ्वास इवोच्छ्वासो विश्रान्ति स्थानम् । सर्गादिवत्कथा सन्धिः । तस्यान्तेप्यखिन्नाः । उच्छ्वासा-

---

१. अमास्याः K. K2. २. विकटो° A. B. K1. विकटाक्षरबन्धश्च । उत्कटाक्षरबन्धः C3. ३. वसन्ततिलकादीनि पक्षे वृत्तान्ता इतिहासाः । C3. ४. भारती वाणी पक्षे भरतानां कुरूणां संबन्धिनी भारती C3. ५. न प्राप्नोति दिगन्तरम् K. K2. T. Jambû ed. ६. एकत्र जगत्त्रये प्रथिताभवति । पक्षे नारदेन जगत्त्रय उक्तेति श्रूयते C3. ७. उच्छ्वासः काव्यस्य विच्छेदः प्राणाश्च C3. ८. वक्त्रम् । वृत्तविशेषः C3. ९. ईश्वरो भगवान्कल्पान्तेप्यखिन्नो भवतिवक्त्रे मुखे सरस्वती । यदुक्तम् । सरस्वती वाग्बलमुत्तमोनिल इत्यादि । स चाकिंचित्सर्गादि करोति सर्वस्य वन्द्यः C3. १०. °समार्थ° Jambû ed.

कवीनामगलद्दर्पो नूनं वा[1]सवदत्तया ।
श[2]क्त्येव पाण्डुपु[3]त्राणां गतया क[4]र्णगोचरम् ॥ १२ ॥
प[5]दबन्धोज्ज्वलो हा[6]री कृ[7]तव[8]र्णक्रम[9]स्थितिः ।
भट्टारहरिचन्द्रस्य ग[10]द्य[11]बन्धो नृपायते ॥ १३ ॥

न्तरकरणक्षमाः । अविच्छिन्नप्रतिभाना इति यावत् । गुरुत्वाद्बहुवचनम् । नाद्यान्तोऽयं बुद्धेर्वक्रमिति वक्रलक्षणम् । वक्रे सरस्वती वृत्तविशेषयोगिनीत्यर्थः । एतस्मिन्नाख्यायिकाकृद्भिर्भाविवस्तुसंसूचनाय वाग्विरच्यते । तथा चाह भामहः । वक्त्रं चापरवक्त्रं च काव्ये काव्यार्थशंसिनीति । आख्यायिकाः कुर्वन्तीत्याख्यायिकाकाराः । यद्वा । आ[13]ख्यायिकेवाकारो येषाम् । अथ कविं पुराणमिति न्यायेन कवयश्च ते । ईश्वरा हरिहरब्रह्माणः । उच्छ्वसन्ति भूतान्यस्मिन्नित्युच्छ्वासः कल्पः । तदन्ते संहारेपि ते । अखिन्नाः कल्पान्तरजननोद्योगिनः। तेषां मुखे वागीशी । उक्तं च । सरस्वती वाग्बलमुत्तमोनिल इत्यादि । आख्यायिकाभिराख्यानै[12,14]राकारो येषां सर्वस्य हि शास्त्रागमसमधिगम्याः । न पुनः प्रत्यक्षलक्ष्याः । ते च वन्द्याः सर्वस्य[15] ॥ ११ ॥

कवीनामिति । वासवदत्ता कथा वासवेन शक्रेण दत्ता च । कर्णः श्रवणं राधेयश्च । कवीनां काव्यकर्तॄणां द्रोणादीनां च ॥ १२ ॥

पदेत्यादि । पदानां सुप्तिङन्तानां । बन्धः प्रकृष्टा रचना । रीतिरित्यर्थः स्वमण्डलावष्टम्भश्च । हारी हृद्यो हारयुक्तश्च । अहारीति वा । न कस्यचिदपि यो हरति । कृता वर्णानामक्षराणां । क्रमेण भामहादिप्रदर्शितनीत्या । स्थितिरवस्थानं यत्र । कृतयुगवद्वर्णानां द्विजादीनां क्रमेण मन्वादिस्मृतिकारप्रकाशितमार्गेण स्थितिः पालनं यस्मिन्सतीति च । भट्टारेति पूजावचनम् ॥ १३ ॥

१. कथया । इन्द्रदत्तया च C3. २. शस्त्रविशेषः C3. ३. पुत्रस्य वा पाठः marginally noted in A. ४. श्रोत्रं राधेयश्च C3. ५. पदानि सुप्तिङन्तादीनि राज्यं च C3. The Calc. ed. reads: पद्यबद्धोज्ज्वलोहारिकृतकण्ठकर्मस्थितिः ६. मनोज्ञः । अथ न कस्यचिद्धरतीत्यहरी । हारवानिति च C3. ७. कृतं युगविशेषोपि C3. ८. अक्षराणि ब्राह्मणादयश्च C3. ९. अलङ्कारो. न्यायश्च C3. १०. अवस्थानं . न पालनं च C3. ११. पद्य° Calc. ed. १२. भाव्या° C1. C 2. Jambû ed. १३. आख्यायिकैव° C2. १४. आकारा येषां C 2. १५. The Calc. ed. omits all that precedes the second line of s'loka 11 and prefixes the apocryph one: चतुर्मुखमुखाम्भोजवनहंसवधूर्मम। मानसे रमतां दीर्घं सर्वशुक्ला सरस्वती.

अविनाशिनमग्राम्यमकरोत्सातवाहनः
विशुद्धजातिभिः कोशं रत्नैरिव सुभाषितैः ॥ १४ ॥
कीर्तिः प्रवरसेनस्य प्रयाता कुमुदोज्ज्वला ।
सागरस्य परं पारं कपिसेनेव सेतुना ॥ १५ ॥
सूत्रधारकृतारम्भैर्नाटकैर्बहुभूमिकैः ।
सपताकैर्यशो लेभे भासो देवकुलैरिव ॥ १६ ॥

अविनाशिनमित्यादि । अविनाशिनं प्रसिद्धमनश्वरं च । अग्राम्यं वैदग्ध्ययुक्तमग्रामभवं च । जातिः स्वभावोक्तिरूपोलङ्कारः । कोशः समुच्चयो गञ्जश्च । सुभाषितैः सूक्तिभिः शोभनं च भाषितं प्रभावर्णनं येषां तैः ॥१४॥

कीर्तिरित्यादि । प्रवरसेनः कश्चित्कविः प्रवे प्लुते रसो येषां ते प्रवरसा वानराः । तेषामिनः स्वामी । प्रवरा च सेना यस्य स सुग्रीवश्च । कुमुदवत्कैरववत् । यद्वा । कुर्भूमिस्तस्या मुत्प्रहर्षस्तयेति । कुमुदेन वानरसेनापतिना च । सेतुः प्राकृतकाव्यग्रन्थः सेतुश्च ॥ १५ ॥

सूत्रेत्यादि । सूत्रधारः पूर्वरङ्गस्य प्रवक्ता चार्चिक्यः स्थपतिश्च । भूमिकाः पात्राणि रामाद्यनुकार्यावस्थाभूमयः । उपभोगनिमित्तान्युत्पत्तिस्थानानि । पताका अर्थप्रकृतिः । उक्तं च । बीजं बिन्दुः पताका च प्रकरीकार्यमेव च । अर्थप्रकृतयो ह्येताः पञ्चसर्वप्रयोगगा इति । यद्वृत्तं तु परार्थं स्यात्प्रधानस्योपकारकम् । प्रधानवच्च कल्पेत सा पताकेति कीर्त्यते । वैजयन्ती च पताका ॥ १६ ॥

---

१. कु.विनाशनम् Calc. ed २. A reads orginally शातवाहन which is marginally corrected into शालिवाहन. ३. जातिरलङ्कारो बालबायादिश्चाकरः C3. ४. कोशः समूहो गञ्जश्च C3. ५. प्रवे प्लुतौ रसा येषां ते प्रवरसा वानरास्तेषामिनः स्वामी सुग्रीवः C3. ६. कुमुदः प्रसिद्धो वानरविशेषश्च C3. ७. सूत K. K2. T. सूत्रधारः । रङ्गाचार्यः स्थपतिश्च C3. ८. भूषिकैः K. K1. K2. T. भूमिकाः । प्रसिद्धा नेपथ्यानि च C3. ९. पताका । ध्वजो नायकविशेषश्च C3. १०. भासा K. K1. K2. T. ११. स्थापकः C1. स्थायोसकः C2. Jambû ed.

निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु ।
प्रीतिर्मधुरसार्द्रासु मञ्जरीष्विव जायते ॥ १७ ॥

समुद्दीपितकन्दर्पा कृतगौरीप्रसाधना ।
हरलीलेव नो कस्य विस्मयाय बृहत्कथा ॥ १८ ॥

निर्गतास्विति । निर्गता उच्चारितमात्राः । आस्तां तावदर्थावगतिरापात एव गीतध्वनिवत्किमपि श्रोत्रहारिण्यः । यदुक्तम् । अपर्यालोचितेप्यर्थे बन्धसौन्दर्यसंपदा । गीतवद्धृदयाल्हादं तद्विदां विदधाति यत् । तत्काव्यमित्यादि । तथा । निर्गताः सर्वदेशप्रतीताः । अन्यत्र निर्गता अभिनवोद्भिन्नाः। न वा कस्येत्यनेनैतदुक्तम् । आस्तां तावत्काव्यतत्त्वविदः सहृदया विवेक्तारः। येपि शास्त्राग्रहितबुद्धयो दुरूढमत्सरप्रायास्तेषामपि या हृदयमाल्हादयन्ति। तथा चोक्तम् । अम्नुणि अपरमन्थाणविहरेइ वा आमणं कइन्माणण । आणाणजकुवल अवणं अलद्धगन्धाण विसुहाइ इति । मधुराश्च ताः सार्द्राः सरसाः । अन्यत्र मधुना मकरन्देन किञ्जल्केन रसेन चार्द्राः सुगन्धयः ॥ १७ ॥

समुदित्यादि । बृहत्कथा कस्य न विस्मयायापि तु सर्वस्यैव गर्वविनाशाय भवतीत्यर्थः । अद्भुतकथावर्णनाद्वाश्चर्याय । समुद्दीपितो वृद्धिं नीतः कन्दर्पो यस्यां कामजननानां बहूनां वृत्तान्तानां वर्णनात् । उद्बोधितः स्मरो ययेति वा । काव्यसेवया हि शृङ्गाररसः समुद्भवति । तथा चोक्तम् । ऋतुमाल्यालङ्कारप्रियजनगान्धर्वकाव्यसेवाभिः । उपवनगमनविहारैः शृङ्गाररसः समुद्भवति । यद्वा । समुद्दीपितः प्रकाशितः ख्यातिं नीतः कन्दर्पो नरवाहनदत्तो यस्यामिति । स हि कामांश इत्यागमः । कृतं गौर्याविद्याभेदस्याराधनं यस्याम् । सा हि नरवाहनदत्तेनेशारूपाराधितेति तत्रोक्तम् । यद्वा ।

१. निसर्गसूरवंशस्य Calc. ed. निर्गतासु । उच्चरितमात्रासु नवोद्भिन्नासु च C3. २. सान्द्रासु K. K1. K2. Jambû ed. मधुरसार्द्रासु । मधुरेण शृङ्गारादिना सार्द्रासु सरसासु । यद्वा । मधुरसेन मकरन्दरसेनार्द्रासु C3. ३. समुद्दीपितो वृद्धिं नीतः । सहर्षा हृब्धकामा च C3. ४. कृतपार्वती मण्डना । कथापक्षे मदनमञ्जुकया वत्सराजः पतिर्मे भूयादिति गौरी विद्या प्रसाधिता C3. ५. The Calc. ed. omits this s'loka. ६. दुर्दुरूढा C1. C2. Jambû ed. ७. सान्द्राः C2. Jambû ed. ८. चान्द्राः Jambû ed. ९. कामजनानां Jambû ed.

आ[1]ढ्यराजकृतो[2]त्साहैर्हृदयस्थैः स्मृ[3]तैरपि ।
जिह्वान्तः कृष्यमाणेव न कवित्वे प्रवर्तते ॥ १९ ॥
तथापि नृपतेर्भक्त्या भीतो नि[4]र्वहणाकुलः ।
करोम्याख्यायिकाम्भोधौ जिह्वाप्लु[5]तेनचापलम् ॥ २० ॥

गौरी प्रतिपूरयति गौरीमः । साधनं परिकरबन्धः । यथा प्रस्तावो यस्यां गौरीप्रेरितेन हि हरेण तथा तस्यां परिकरबन्धः कृतो यथा सातीव पिप्रिये । हरलीलापि समुत्सहर्षा दग्धकामा च । कृतं गौर्याः प्रसाधनं मण्डनं यस्यां । क्व कामं प्रति तादृग्द्वेषः क्व च कान्तां प्रति प्रसाधनमिति कृत्वा विस्मयमाश्चर्यम् ॥ १८ ॥

आढ्येति । आढ्यराजःकश्चित्कविः । उत्साहो नृत्ते तालविशेषः । उदीर्यमाणगीत्याधारभूतपदोपचारात्काव्यमप्युत्साह इति केचित् । यत्र पूर्वं श्लोकेनार्थ उपक्षिप्यते पश्चात्स एव गद्येन वितन्यते मध्ये वृत्तनिबन्धश्च भवति सपरिसमाप्तार्थ उत्साह उच्यत इत्यन्ये । अपिः समुच्चये । यद्वा । आढ्यराजहृदयस्था अप्यन्तर्जिव्हां नाकर्षयन्ति तत्कथं त एव स्मृता इत्यपि शब्दार्थः ॥ १९ ॥

एवमनौद्धत्यमुक्त्वाह । तथेत्यादि । तथा पीत्थं जानन्नपि । जिव्हाप्लवनलक्षणं चापलं करोमि । यतो नृपतेर्भक्त्या । अहमभि । इतः । समन्तायुक्तः । निर्वहणे समाप्तावाकुलः । जिव्हा च । अग्धावकालवातस्तत्र वहन्त्यां कश्चिद्यथा प्लवनरूपं चापलं करोति । अत्र पक्षे । अभीतोत्रस्तः । निर्वहणं पारप्राप्तिः । कृ[6]त्यक इति णत्वम् ॥ २० ॥

---

१. आद्य° A. K1. K2. T. २. कृतोच्छ्वासैः Calc. ed. उत्साहैः । अत्र पूर्वं श्लोकेनार्थ उच्यते पश्चात्स एवार्थो गद्येन वितन्यते मध्ये वृत्तनिबन्धश्च भवति सपरिसमाप्तार्थ उत्साह उच्यते C3. ३. यः किल स्मर्यते शरणाय तक्षणं मनसि चिन्त्यते स न कर्षति पादादौ धृत्वाक्षिपतीत्यपि C3. ४. निर्वहणं । समाप्तिः पारप्राप्तिश्च C3. ५. प्लवनं । वचनव्यापारः सरणं च C3. ६. कृत्य च Jambû ed.

सुखप्रबोधललिता सुवर्णघटनोज्ज्वलैः ।
शब्दैराख्यायिका भाति शय्येव प्रतिपादकैः ॥ २१ ॥

जयति ज्वलत्प्रतापज्वलनप्राकारकृतजगद्रक्षः ।
सकलप्रणयिमनोरथसिद्धिश्रीपर्वतो हर्षः ॥ २२ ॥

सुखेत्यादि । सुखेन जायासम्मितत्वेन । हृदयाह्लादनपूर्वं न तु वेदेतिहासादिवद्यः । प्रबोधः प्रकृष्टं बोधनं । धर्मादिसाधनव्युत्पत्तिः । उक्तं च । कटुकौषधिवत्काव्यमविद्याव्याधिभेषजं । आह्लाद्यमृतवत्काव्यमविवेकगदापहमिति । सुवर्णरचना शोभनाक्षरघटना । प्रतिपादकैर्विवक्षिताभिधायकैः । शय्यापक्षे । सुखं यः प्रबोधः स्वापादुत्थानं । सुवर्णघटना हेमयोजना । प्रतिपादकैः खट्वाया उन्नामकैः । तदा पादानां प्रतिच्छन्दाः प्रतिपादकाः पुरुषयत्नोत्थापिताः पादमुद्रास्तैरत्र च शोभनो वर्णोलक्तादिकृतः ॥ २१ ॥

इदानीं यमुद्दिश्येयमाख्यायिका क्रियते तस्य । तथापि नृपतेर्भक्त्येति । अनेन नृपतिशब्देन सामान्येन निर्देशं कृत्वा विशेषेणाह । जयतीत्यादि । ज्वलन्दीप्रतया प्रसरन् । प्रताप एव ज्वलनः । तं प्रतिपूरयति य आकारस्तेन कृता जगतिरक्षा येन सः । सकलानां प्रणयिनां ये मनोरथास्तत्सिद्धौ श्रियां पर्वतो गिरिः । श्रियस्तत्र कूटीभूता इव स्थिता इति यावत् । यद्वा । यथा पर्वतस्थः कश्चिद्दुरभिभवस्तद्वद्धर्षस्तथा श्रीरिति । अथ च । श्रीपर्वताख्यो गिरिरीदृगेव । तथा च । ज्वलत्प्रकृष्टतापो यो ज्वलनो जठराग्निः स एव निषेधकत्वात्प्राकारः सालस्तेन कृता मुक्तेर्विघ्नहेतुतया जगतो भूलोकस्य रक्षा

१. प्रबोधः । प्रबोधो ज्ञानं निद्रान्तश्च C3. २. सुवर्णं । सुवर्णं कनकमक्षरघटना च C3. ३. °घटनोज्ज्वला Calc. ed. घटिनोज्ज्वलाः K. K2. ४. प्रतिपादकैः । अर्थगमकैः खट्वाङ्गैश्च पादलक्षणैः C3. ५. The Calc. ed. has after this the interpolated verse: दर्शयन्ती मुखे खेदं प्रस्खलन्ती पदे पदे । कथं चिन्नीयते शय्यां कथा नववधूरिव । ६. जयत्युज्ज्वलत्प्र° D. जयज्ज्वलत्प्र° Calc. ed. ७. ज्वलत्प्रतापज्वलनः । एकत्र प्रसरत्प्रताप एव वह्निः स एव प्राकारः । अन्यत्र दीप्यमानः प्रकृष्टतापो वह्निस्तस्य प्राकारः C3. ८. प्रकारः K. K1. T. ९. श्रीपर्वतः । श्रीपर्वते हि यदा त्रिपुरदाहे विघ्नमकरोद्गणेशस्तदा हरेण लोकरक्षार्थे ज्वलनमयो वप्रश्चक्र इति । मनोरथसिद्धौ श्रीणां राशिः श्रीपर्वताभिधश्च गिरिः । तत्र सिद्धिः कामानां सिद्धयः स्युरिति C3. १०. पुरुषा यत्नोत्थ° C1. C2. Jambû ed. ११. यमुद्दिश्ये° C1. १२. तद्धर्षे C2. Jambû ed.

एवमनुश्रूयते । पुरा किल भगवान्स्वलोकमधितिष्ठन्परमेष्ठी विकासिनि पद्मविष्टरे[1] समुपविष्टः सुनासीरप्रमुखैर्गीर्वाणगणैः[2][3] परिवृतो ब्रह्मोद्याः[4] कथाः कुर्वन्नन्याश्च निरवद्याविद्यागोष्ठीर्भावयन्कदाचिदासां चक्रे । तथासीनां च तं त्रिभुवनप्रतीक्ष्यं[5] सर्वे मनुदक्षचाक्षुषप्रभृतयः

येन सः । अन्यत्रोत्सादनं तद्यावत् । अन्ये तु । त्रिपुरदाहे यो विघ्नमकरोद्गणेशस्तदा हरेण ज्वलत्प्रकृष्टतापो ज्वलनप्राकारो निर्मितः । तेन च तत्र रक्षा विधीयतेत्याहुः । ज्वलत्प्रतापो ज्वलनप्राकारश्च ह्रौ मुद्रारूपौ मन्त्रविशेषौ स्तः । ताभ्यां कृतजगद्रक्ष इति केचित् । प्रणयिनः सिद्धिकामाः । हर्षः कथानायकः । इतरत्र हर्षकारितया हर्षः । सर्वत्र च परमार्थतो हर्ष एव जयति । तस्यैवाभिलषणीयत्वात् । स एव काव्येन क्रियत इति ध्वनति ॥२२॥

एवमिति । अनुश्रूयते पारं पर्येणाकर्ण्यते । किलेत्यत एवागमसूचनाय । भगवानिति केवलनिर्देश उल्लुण्ठनपरिहारार्थं । ब्रह्मलोकमित्युक्ते सत्युत्कर्षदायिन्यात्मीयता प्रतिपत्तिर्न स्यादिति स्वग्रहणं साभिप्रायं । अधितिष्ठन्बहुमानेन तद्योगक्षेमादिकमुद्वहन् । परमे पदे तिष्ठतीति परमेष्ठी । विकासिनीति नित्ययोग इति । विष्टरमासनम् । सुनासीर इन्द्रः । गिरः स्तुतिरूपावणन्ति भजन्तीति गीर्वाणा देवाः । गीरेव वाणः शरो येषामिति वा । परिवृतश्चतुर्दिक्कं वृतः । परिवलितः । तस्य चतुर्मुखत्वात् । ब्रह्म वदन्तीति ब्रह्मोद्याः। वदः स्वपि क्यप् च । ब्रह्मणा वेदेन ब्रह्मणि परमात्मनि वा वेदितव्या ब्रह्मोद्याः । उक्तं च । ब्रह्मोद्याः सा कथा यस्यामुच्यते ब्रह्मशाश्वतमिति । सामान्यविशेषभावेन । उष्ट्रासिकामासत इतिवत् । ब्रह्मवदनरूपा वा । कथास्तासां वक्ष्यमाणगोष्ठ्यभिप्रायेण प्राधान्यात्स्वयं करणम् । निरवद्या दोषरहिताः । तथा च वात्स्यायनः । या गोष्ठी लोकविद्विष्टा या च स्वैरविसर्पिणी । परहिंसात्मिका या च न तामवतरेद्बुधः । लोकचित्तानुवर्तिन्या क्रीडामात्रैककार्यः । या गोष्ठ्यासहचरन्विद्वांल्लोकसिद्धिं नियच्छतीति । समानविद्याविवत्तशीलबुद्धिवयसामनुरूपैरालापैः । एकत्रासनबन्धो गोष्ठी ।

---

१. पद्मविष्टरे । कमलासने C3. २. सुनासीरमुखैः । इन्द्राद्यैः C3. शुनासीरः K. K1. K2. T. Jambû ed. Calc. ed ३. गीर्वाणैः K. .K1. K2. T. Jambû ed. Calc. ed. ४. ब्रह्मोदिता Calc. ed. ५. त्रिभुवनप्रतीक्ष्यं । त्रिभुवनस्तुत्यं C3.

प्रजापतयः सर्वे च सप्तर्षिपुरःसरा[1] महामुनयः सिषेविरे । केचिदृचः स्तुतिचतुराःसमुदचारयन् । केचिदपचितिभाञ्जि[2] यजूंष्यपठन् । केचित्प्रशंसा सामानि[3] सामानि जगुः । अपरे विवृतक्रतुक्रियातन्त्रान्मन्त्रा[4]न्व्याचचक्षिरे । विद्याविसंवादकृताश्च[5] तत्र तेषामन्योन्यस्य विवादाः प्रादुरभवन् । अथातिरोषणः प्रकृत्या । महातपा मुनिरत्रेस्तनयस्तारापतेर्भ्राता नाम्ना दुर्वासा । द्वितीयेनोपमन्युना[6] नाम्ना मुनिना सह कलहायमानः सामगायन्[7] क्रोधान्धो विस्वरमकरोत् ॥

सर्वेषु च तेषु शापभयात्प्रतिपन्नमौनेषु[8] मुनिष्वन्यालापलीलया चावधीरयति[9] कमलसंभवे भगवती कुमारी किंचिदुन्मुक्तबालभावे भूषितनवयौवने वयसि[10] वर्तमाना । गृहीतचामरप्रचलद्भुजलता पिताम-

प्रतीक्ष्यः पूज्यः । सम्यगुदात्तादित्रैस्वर्यादि प्राधान्यादुदाचरञ्जगुः । अपचितिः पूजा । सामानि जगुरिति साम्नां गानमेवोचितं । विद्याविसंवादकृता इति न तु मात्सर्यादिना । प्रादुरभवन्नित्यनौचित्यशङ्कया तत्कर्तृत्वपरिहारः । प्रकृत्येत्यन्यथा ब्रह्मसन्निधानेन कथमीदृगाक्षेपः । कथमीदृशोवकाश इत्याह । महातपा इति । मुनिरित्यनेनास्य ज्ञानप्राधान्यात्तुल्यतोद्भासनमतीवापकारः । अत्रेस्तनय इति न केवलं महातपस्त्वेन यावदत्रितनयत्वेन ब्रह्मलोकप्राप्तिरस्य । अतस्तारापतेरित्यादिना तथा भूतपरमप्रजापतिसंबन्धयोग्यत्वमस्याख्यायते । द्वितीयेनेति तत्समत्वमुच्यते । कथं सामगानेप्यनवहित इत्याह । क्रोधान्ध इति ।

सर्वेष्वित्यादौ । देवी सरस्वती श्रुत्वा जहासेति क्रिया । अप्रतिपत्तिरस्य मा भूदित्युत्तमप्रकृतित्वादन्येत्याद्युक्तं । अन्येन सहालापलीला कथा क्रीडया । कुमारीति कुमारीत्वेनास्याहास्यादिकं नानुचितमिति दर्शयति । भूषितेत्यनेन दर्शनीयत्वमाह । पितामहमिति सर्वप्राधान्यमनेनोक्तम् ।

---

१. सरा महर्षयः K. K1. T. Jambû ed. २. अपचितिभाञ्जि । पूजायुञ्जि C3. अपि विभाञ्जि D. ३. D. K. K1. Jambû ed. omit the second सामानि. ४. विततक्रतु.° D. T. ५. विद्याविवादाः K. K1. T. Jambû ed. ६. मन्दK. K1 . K2. मन्दपाल T. Jambû ed. मन्दु Calc. ed; the best Mss. read उपमन्यु. ७. सामगायः K. K1. T. ८. शापभयम °K. K1. K2. T. Jambû ed. ९. अवधीरयति K. T. Jambû ed. १०. नवे वयसि K. K1. T. Jambû ed.

हमुपवीजयन्ती निर्भर्त्सनताडनजातरागाभ्यामिव स्व[1]भावारुणाभ्यां पादपल्लवाभ्यां समुद्भासमाना शिष्यद्वयेनेव प[2]दक्रममुखरेण नूपुरयुगलेन वाचालित[3]चरणयुगला धर्मनगरतोरणस्तम्भविभ्रमं बिभ्राणा जङ्घाद्वि[4]तीयम् ।

सलीलमुत्ककलहंसकु[5]लकलप्रलापिनि मेखलाधा[6]म्नि विन्यस्तवामहस्तकिसलया । विद्वन्मानसनिवासलग्नेन गुणकलापेनेवां[7]सावलम्बिना [8]ब्रह्मसूत्रेण पवित्रीकृतकाया । भा[9]स्वन्मध्यनायकमनेकमु[10]क्तानुयातमपवर्गमार्गमिव हा[11]रमुद्वहन्ती । वदनप्रविष्टसर्वविद्याचरणालक्तकरसपाटले[12]नेव स्फुरता दशनच्छदेन विराजमाना । संक्रान्तकमलासन-

निर्भर्त्सनं ताडनं । तेन तदर्थं वा यत्ताडनं रोषाद्भूमिहननं तद्वशाच्च जातरागाभ्यामिव पादपल्लवाभ्यामित्यनेनारुणत्वं कौमार्यं चाह । अत एव गाढताडनेन रक्तत्वमुत्प्रेक्षितं ताडितो वा । अयं ताडितस्तत्तुल्यो रागो जातो ययोरिति व्याख्येयं । पदक्रमं पादन्यासपरिपाटी । अन्यत्र । पदानि च क्रमश्च तत्पदक्रमं । चरणौ पादौ चरणाश्च । विशिष्टशाखा पाठकता । वाचालिताः क्षोभिता ययेति ।

उत्का उत्सुकाः । मेखलाधाम्नि रशनागुणे । मानसं चित्तं सरो विशेषश्च । गुणा अपि । भास्वान्दीप्तो मध्यनायकः पदकं यत्र तत् । अथ च । भास्वतो मध्यं तेन नयति सः । यदुक्तं । परिव्राड्योगयुक्तश्च शूरश्चाभिमुखं हतः । द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनाविति । मुक्ता मौक्तिकानि मोक्षगा-

---

१. स्वभावारुणपाद° K. K1. K2. T. २. पदक्रममुखरेण । पदक्रमो गमनपरिपाटी । पदं च विच्छिद्यपाठः । क्रमश्च संहितपदयोरेकीभावेनाध्ययनमिति पक्षान्तरे C3. ३. चरणयुगला । चरणशब्दः शाखानिमित्तकः पुरुषेषु वर्तत इति C3. °चरणा मदननगरस्तोरण° K1. K2. Jambû ed °चरणा मनोरसधर्मन° K. T. A marginal gloss in A inserts after चरणयुगला । दिव्यचामीकरभूप्रदेशविरचितवेदिकायां । अतिसुकुमारचरणतलांछतया स्पर्शमसहमानेव । परितः प्रसृतनखमणिमयूखप्रभाप्रतानैः पल्लवविभागानाच्छाद्यस्थितेव लक्ष्यमाणा । सह जारुणि मौद्गारभरितेनातिलोहनपिण्डालक्तरसरञ्जितेन नवपार्ष्णिद्वयशोभमाना गुल्फप्रदेशा । ४. द्वितयं B. K. Jambû ed. ५. कुलकलापप्र° T. Jambû ed. कुलाकलालापप्र° K. K1. ६. °दाम्नि A. B. ७. °नेवांशाव° D. ८. सहजब्रह्म° marginally noted in A. ब्रह्मसूत्रं । उपवीतं C3. ९. भास्वन् । भास्वांस्तत्रसूर्यश्च C3. १०. मुक्तः । मौक्तिकानि सत्कर्माणश्च C3. ११. हारमुरसा समुद्व° marginally noted in A. Calc. ed. १२. °पाटलेनेव च K. K1. Jambû ed. A marginal gloss in A. inserts after °पाटलेनेव । काठिन्यतया विद्रुमलतां भगमुपसत्ता सहजकोमलारुणेन ।

कृष्णाजिनप्रतिमां [1]सममधुरगीताकर्णनावतीर्णशशिहरिणीमिव कपोलस्थलीं दधाना । तिर्यक्[2]सावज्ञमुन्नमितैकभ्रूलता । श्रोत्रमेकं विस्वरश्रवणकलुषितं प्रक्षालयन्तीवाङ्गवि [3]निर्गतेन लोच[4]नाश्रुजलप्रवाहेणेतरश्रवणेन च विकसित[5]सिन्दुवारमञ्जरीजुषा हसतेव प्रकटितविद्यामदा[6] । [7]श्रुतिप्रणयिभिः प्रणवैरिव कर्णावतं[8]समधुकरकुलैरुपास्यमाना । [9]सूक्ष्मविमलेन प्रज्ञाप्रतानेनेवांशुकेनाच्छादितत[10]नुलता । वाङ्मयमिव च निर्मलं दिक्षु दशनज्योत्स्नालोकं वि[11]किरन्ती । देवी सरस्वती श्रुत्वा जहास ॥

दृष्ट्वा च तां तथा हसन्तीं स मुनिराः पापकारिणि दुर्गृहीतविद्यालवावलेपदुर्विदग्धे मामुपहससीत्युक्त्वा शिरःकम्पविशीर्यमाणबन्ध-

मिनश्च । हारं मुक्ताकलापश्च । अपवर्गमपि हरसंबन्धिनं तत्प्रसादप्राप्यत्वात् । अलक्तकरसेनेव पाटलेनेति वा पाठः । स्फुरतेति रोषात् । भगवती कपोले शशिहरिणस्यैवावतारः संभाव्यत इति शशिपदं । अत्र हि कपोले ब्रह्मकृष्णाजिनसंक्रान्तिस्तत्र कामसंभावना । सामान्यहरिणस्यावतरणे । कलुषितं प्रक्षालयन्तीवेति । सलिलस्य क्षालनमेव युक्तमिति समुचितेयमुक्तिः । श्रुतिप्रणयिभिरिति । श्रूयत इति श्रुतिः । ध्वनितया प्रणयः प्रशंसातिशयो येषां तैः । यद्वा । श्रती श्रोत्रे तत्कर्तृकः प्रणयः प्रार्थनामधुरध्वनित्वाद्येषां तैः । कर्णसंबन्धैरिति । तु व्याख्याने कर्णावतंसेत्यादिना पौनरुक्त्यमपरिहार्यं । श्रुतिर्वेदोपि । सूक्ष्मार्थदर्शितत्वात् । सूक्ष्मस्तीक्ष्णो विमलस्तत्त्वग्राही । अन्यत्र सूक्ष्मं तनु । विमलं शुक्लं । प्रतानः प्रसरः ।

दृष्ट्वेत्यादौ । स मुनिस्तां तथा हसन्तीं दृष्ट्वा शापजलं जग्राहेति संबन्धः । तथेति पादताडनभ्रूक्षेपादि पूर्वं स मुनिरिति प्राग्वर्णितस्वरूपः । आ इत्यक्षमायां । मामिति योहं त्रैलोक्यप्रख्यातरोषणत्वः । तत्रेति समीप एव

१. सम° B. wanting in K. $K_1$. $K_2$. Jambû ed. प्रतिबिम्बां मधु° Calc. ed. २. °सावर्णमु° K. $K_1$. ३. °निगतेन K. $K_1$. $K_2$. T. Jambû ed. ४. लोचनानामश्रु K. $K_1$. T. ५. सिन्धु° K. T. Jambû ed. ६. After this a marginal gloss in A inserts: लवदिव्यां मुखरमुखारविन्दा. ७. श्रुतिप्रणयिभिः । श्रुतिः कर्णौ वेदश्च $C_3$. ८. ससक्तमधु° gloss in A. सकुसुममधु T. Jambû ed. After this is marginally noted in A. पितामहसेवा समासन्न मन्दमन्दवहमानपवमानतरलितकेशकलापसंयमनाय मुहुर्मुहुस्तरलिताङ्गुलिकपल्लवा । ९ सूक्ष्मविमलेन। सूक्ष्मार्थदर्शितया तीक्ष्णस्तनु च तत्त्वग्राही सितं च $C_3$. १०. शरीरा K. T.Jambû ed T. ११. किरन्ती D. T. $K_2$

विशरा[१]रोरुन्मिषत्पिङ्गललिम्नो जटासञ्चयस्य[२] शोचिषा सिञ्चन्निव रोषदहनं द्रवे[३]ण दशदिशः कृतकालसन्निधानामिवा[४]न्धकारितल[५]लाटाष्टापदामन्त[६]कमण्डनपत्त्रभङ्गमकरिकां भृकुटिमाबध्नन्नतिलोहितेन चक्षुषा स्वरुधिरोपहारमिवामर्षदेवतायै प्रयच्छन् । निर्दयदष्टदशनच्छदो दन्तांशुच्छलेन भ[७]यपलायमानां वाचमिव निरुन्धन् ॥

[८]अंसस्रंसिनः शापशासनपट्टस्येव ग्रथ्नन्ग्रन्थिमन्यथा कृष्णाजिनस्य [९]स्वेदप्रतिबिम्बितैः [१०]शापशङ्काशरणागतैरिव सुरासुरमुनिभिः प्रति-

विशीर्यते तच्छीलो विशरारुरित्यामुतश्च । अत एवोन्मिषत्पिङ्गलिमारोचिषा दीप्त्यारोषदहनो द्रवो रस इव । द्रवत्वं च यद्यपि विशिष्टस्यैव तेजसः [११]सुवर्णादेः संभवति तथाप्यत्रोपचारात्सादृश्यं । कालः कृष्णो गुणो यमश्च । अन्धकारितं सङ्कुचितत्वाददर्शनीयमेव । चकितं ललाटपट्टमेवाष्टापदं यथा प्रतिपङ्क्तिरष्टौ पदान्यस्येत्यष्टापदं चतुरङ्गफलकं । अत एवानेन भ्रूसमुन्नमनमव्यक्तीकृतरेखवत्तया विस्पष्टव्यलीकमेतत् । ललाटमुपगीयते भ्रुवोर्मूलसमुत्क्षेपाद्भृकुटिं परिचक्षते । सुशब्दः सुतरां नैरपेक्ष्यसूचनाय । वाचो भयसम्बन्धः ।

अंसस्रंसिन इति संरम्भात् । शासनपट्टः शुक्लत्वाल्लिपिकार्ष्ण्याच्च सितासितवर्णसंवलितमध्यः पर्यन्तशुक्लश्च भवति । अत एव तं[१२] बिन्दु चित्रत्वादुपान्तशुक्लत्वाच्च कृष्णाजिनमुत्प्रेक्षते । यथा शासनपट्टे सति क्वचिद्ग्रामादावधिकारो भवति । तद्वच्च जनसमूहः प्रार्थनां करोति । सहस्तपादादि-

---

१. विशरः । विशरणं स्वभावस्य C3. २ जटाकलापस्य K. K1. T. Jambû ed. ३. द्रवेण । सेचनौचित्येन रोषदहनस्य द्रवत्वं निरूपितम् C3. ४. अन्धकारित्त° । रेखोत्कीर्णत्वाददर्शनं नीतं । अथ च श्यामीकृतमिति प्रतीतिः । तत्र शब्दच्छलेन निमित्तोत्प्रेक्षा । तत्र कालशब्देन कृष्णवर्णयमयोर्वाच्यत्वात् C3. ५. ललाटपट्टा° K1. K2. T. Jambû ed. ६. °कान्तःपुरमण्ड° K. K1. K2. T. Jambû ed. ७. भयपलायमानां । सरस्वती पक्षपातन—वाचो भयसंभवः C3. ८. अंसावस्रंसिनः K. K1. K2. T. Jambû ed. स्रंसिनः । शापवशात् C3. ९. स्वेदकणप्रति° K. K1. Jambû ed. १०. शापभयाच्छरण T. Calc. ed. ११. सुवर्णादि Jambû ed. १२. तेत्र C2.

पक्ष्मसर्वावयवः कोपकम्पतरलिताङ्गुलिना करेण [1]प्रसादनलभ्यामक्षरमालां विक्षिप्य कामण्डलवेन वारिणा [2]समुपस्पृश्य शापजलं जग्राह॥

अत्रान्तरे स्वयंभुवो[3]ऽभ्याशे समुपविष्टा [4]देवी मूर्तिमती [10]पीयूषफेनपटलपाण्डुरं कल्पद्रुम[5]दुकूलवल्कलं वसाना[6]बिसतन्तुमयेनांशुकेनोन्नस्तनमध्यबद्ध[7]गात्रिका ग्रन्थिस्तपो[8]निर्जितत्रिभुवनजयपताकाभिरिव तिसृभिर्भस्मपुण्ड्रकराजिभिर्विराजितललाटाजिरा[9]स्कन्धावलम्बिना फेनधवलेन तपःप्रभावकुण्डलीकृतेन [11]गगणगङ्गास्रोतसेव योगपट्टकेन विरचित[12]वैकक्षकासव्येन ब्रह्मोत्पत्तिपुण्डरीकमुकुलमिव [13]स्फुटिककमण्डलुं करेण कलयन्ती । दक्षिणमक्षमालाकृत[14]परिक्षेपं कम्बुनिर्मितो-

के सर्वस्मिन्नङ्गे गलति । कोपेत्यादौ कम्पग्रहणं रोषः शरीरं बाधत इति यावत् सन्निवेशसाधर्म्यादुक्तं । अक्षरमालामिवेति सरस्वती संबन्धतया चोक्तं । प्रसादनलभ्यामिवेति विक्षिप्यते यश्च विरुद्धपक्षः प्रसादयति स विक्षिप्यते तिरस्क्रियते । कामण्डलवेन मुनिकरकभवेन । समुपस्पृश्याचम्य ।

अत्रान्तर इत्यादौ । मूर्तैश्चतुर्भिर्वेदैः सह सावित्री समुत्तस्थाविति संबन्धः। अभ्याशे समीपे । गात्रिकाग्रन्थिर्ग्रन्थिविशेषः स्वस्तिकाकारः स्त्रीणामुत्तरीयस्य स्तनोद्देशे भवति । तिलकं पुण्ड्रकं । स्कन्धौ त्वंसौ । वायुस्थानानि स्कन्धाः । फेनैस्तद्वच्च धवलेन । तिर्यग्वक्षसि विक्षिप्तं [15]वैकक्षकमुदाहृतं । सव्येन वामेन । पुण्डरीकमुकुलं मुकुलितं पद्मं । कलयन्ती क्षिपन्ती धारयन्ती वा । परिक्षेपः परिवलनं । कम्बुः शङ्खः । ऊर्मिका बालिका ।

१. प्रसादन° । अनुनयः C3. प्रसादनलभ्यामक्षरमालामिवाक्षमालामाक्षिप्य K. K1. K2. T. Jambû ed. प्रसादनलभ्यामक्षरावलिकामिवाक्षमालां Calc. ed. २. ससमुप° T. Jambû ed. ३. अभ्यासे A. B. D. ४. देवो । सावित्री C3. ५. °दुगूल° K. K1. K2. T. Jambû ed. ६. विश° A. B. ७. गात्रिका । बन्धविशेषः । अङ्गस्थकमिति—द्धिः C3. ८. वलनिर्जित° K. K1. K2. T. Jambû ed. ९. स्कन्धावलम्बिना । स्कन्धोऽङ्गविशेषो वायुस्थानं च C3. १०. सुधाफेन° K. K1. K2. T. Jambû ed. ११. गगण omit K. T. Jambû ed. गङ्गाशुभ्रस्रोत° marginally noted in A. °स्रोत° A. B. १२. वैकक्ष्यका K. K. K2. T. Jambû ed. वैकक्षा सव्येन D. वैकक्षेति । उत्तरासङ्गः । उपवीतं—येन क्रियते C3. १३. स्फुरि° A. १४. परिक्षेपेति । वेष्टनमित्यर्थः C3. १५. वैकक्ष्यकम् C1. C2.

मिकादन्तुरं[1] तर्जनतरङ्गिततर्जनीकमुत्क्षिपन्तीं करं[2]। आः पाप क्रोधोपहत दुरात्मन्[3]नात्मज्ञ ब्रह्मबन्धो[4] मुनिखेट[5] निराकृत[6] कथमात्मस्खलितविलक्षः सुरासुरमुनिमनुजमाननीयं[7] त्रिभुवनमातरं भगवतीं सरस्वतीं शप्तुमभिलषसीत्यभिदधाना रोषाविमुक्तवेत्रासनैरोंकारमुखरमु[8]खैराक्षेप[9]दोलायमानजटाभारभरित[10]दिग्भिः। परिकरबन्धभ्रामितकृष्णाजिना[11]टोपच्छायाश्यामायमानदिवसैरमर्षनिश्वासदोलाप्रेङ्खोलितब्रह्मलोकैः सोमरसमिव स्वेदविसरव्याजेन स्रवद्भिरग्निहोत्रपवित्रभस्मस्मेरललाटैः कुशतन्तु[12]चामरचीरचीवरिभिराषा[13]ढिभिः प्रहरणीकृत-

दन्तुर इव व्याप्तस्तं। तर्जनं निर्भर्त्सनम्। तरङ्गिता तर्जिता। चलिता। तर्जनी प्रदेशिनी। अङ्गुष्ठनिकटाङ्गुलिः। क्रोधोपहतेत्यात्मविनाशायैव ते क्रोध इत्युक्तं भवति। ब्रह्मबन्धो निकृष्टब्राह्मणः। खेटोपसदो नीचः। निराकृतोस्वाध्यायः। विलक्षो लज्जितः। सुरासुरमनुजाश्च परस्परविरुद्धानुष्ठानाः। अत्र पुनरीदृशामपि न विप्रतिपत्तिरिति भावः। अभिलषसीति। इच्छामात्रकमपीदं महत्साहसमित्यर्थः। ओंकार एव मुखरितं मुखं येषां तैः। परिकरबन्धः पर्यङ्कबन्धः। स चोत्थितस्यापि संरम्भभाजो भवति। आटोपो वक्षःप्रदेशे श्यामायमानो रात्रिरिवाचरत्। दिवसो यैर्हेतुभिरित्यर्थः। अमर्षनिःश्वासैर्दोलावत्प्रेङ्खोलितश्चलितो ब्रह्मलोको यैः। कुशतन्तूनां चामरमिव चामरं गुच्छः कुशतन्तुचामरं दर्भपिञ्जूरं। चीरचीवर वृक्षत्वग्वस्त्रं ते विद्येते येषां तैः। आषाढसंज्ञो दण्डस्तु पालाशो व्रतचारिणां।

१. दन्तुरितं K. K1. K2. T. Jambû ed. २. After करं a marginal gloss in A inserts: प्रत्यषेधयत्। मामेवमलं व्याक्रोशीभिर्जन्मन एव रौद्रप्रक्षतिरुद्रांशत्वाद्दूरे नमस्योयमिति वादिनी वाग्देवीमनाकलय्यसंभ्रमोच्छ्रितैः [संभ्रमोत्थितैः D.] ३ दुरात्मन्नज्ञानात्मज्ञ K. K1. T. Jambû ed. ४. ब्रह्मबन्ध इति। ब्रह्मबन्धुर्द्विजाधम इत्यर्थ· C3. ५. खेटापसदनिराकृत K2. T. Jambû ed. खेटेति। अपशदेत्यर्थः C3. ६. निराकृते A. B. निराकृतेति। वेदहीनो निराकृतः C3. ७. °मनुजवृन्दवन्दनीयां K. K1. K2. T. Jambû ed. ८. °मुखरित° K. K1. K2. T. Jambû ed. ९. मुखैरुत्क्षेप° K. K1. T. Jambû ed. १०. भरितशिरोभिः Calc. ed. ११. कृष्णाजिनपटच्छ° A. B. K. K1. T. १२. कुशतन्तुचारुचामर° K. K1. K2. T. Jambû ed. १३. A marginal gloss in A inserts after आषाढिभिः स्वशिष्यैः। आषाढिभिरिति। पालाशो दण्ड आषाढः C3.

कमण्डलुमण्डलैर्मूर्तैश्चतुर्भिर्वेदैः सह [1]वृसीमपहाय सावित्रीं समुत्तस्थौ । ततो मर्षय भगवन्नभूमिरेषा शापस्येत्य[2]नुनाथ्यमानोपि विबुधैरुपाध्यायस्खलितमेकं क्षमस्वेति बद्धाञ्जलिपुटैः प्रसाद्यमानोपि स्वशिष्यैः पुत्रमाकृथास्तपसः प्रत्यूहमिति निवार्यमाणोप्यत्रिणा रोषावेशविवशो दुर्वासा दुर्विनीते व्यपनयामि ते विद्याजनितामुन्नतिमिमामधस्ताद्गच्छ मर्त्यलोकमित्युक्त्वा तच्छापोदकं विससर्ज । प्रति[3]शापदानोद्यतां च सावित्रीं सखिसंहर[4]रुषामसंस्कृतमतयोपि ज्ञात्यैव द्विजन्मानो माननीया इत्य[5]भिदधती सरस्वत्येव न्यवारयत् । अथ तां तथा शप्तां सरस्वतीं दृष्ट्वा भगवान्पितामहः कमलोत्पत्तिलग्न[6]मृणालामिव ध[7]वलयज्ञोपवीतिनीं तनुमुद्वहन्नुद्गच्छदच्छाङ्गुलीयकमरकतमयूखलताकलापेन त्रिभुवनोपप्लव[8]प्रशमनाय[9]कुशापीडधारिणेव द[10]क्षिणकरेण निवार्य शापकलकलमतिविमलदीर्घैर्भाविकृतयुगारम्भसूत्रपातमिव दिक्षु पातयन्दशनकिरणैः सरस्वती प्रस्थानम[11]ङ्गलपटहेनेव पूरयन्नाशाः स्वरेण सुधीरमुवाच । ब्रह्मन्न खलु

तत इत्यादौ । शापोदकं जग्राहेति विससर्जेति संबन्धः । मर्षय क्षमस्व । अनुनाथ्यमानः प्रार्थ्यमानः । प्रत्यूहं विघ्नं । उ[12]न्नतिमिति । उच्चदेशस्थश्चाधस्तान्नीयत इति समुचितेयमुक्तिः । असंस्कृतमतयः संस्काररहिताः । अथेत्यादौ । भगवान्पितामहः सुधीरमुवाचेति संबन्धः । तथेति तेन प्रकारेण । निरपराधां सरस्वतीमित्यर्थः । धवलयज्ञोपवीतिनीमिति प्रशंसायां नित्ययोगे वा मत्वर्थीयः । विसकिसलयच्छेदपाथेयवन्त इतिवत् । अन्यथा कर्मधारये कृते मत्वर्थीय एकबुद्ध्यनुमितौ बहुव्रीहौ प्रतिपत्तिर्भवतीति । इतरत्र तु बुद्धिद्वयमिति लघुत्वात्प्रक्रमस्येत्युक्तं । उद्ग-

---

१. आसनं marginally noted in B. २. याच्यमानोपि marginal gloss in B. ३. प्रतिशापोद्यतां सावित्रीं $K_2$. T. Jambû ed. ४. °रोषम° K. $K_1$. $K_2$. T Jambû ed. ५ अभिदधाना K. $K_1$. $K_2$. T. Jambû ed. ६. मृणालसूत्रामिव K. $K_1$. $K_2$. T. Jambû ed. Calc. ed. ७. सहजधवल° marginally noted in A. ८. °प्रशमकुशा° K. $K_1$. $K_2$. T. Jambû ed. ९. आपीडेति । आपीडमङ्गुलीयकम् $C_3$. १०. दक्षिणेन करेण K. $K_1$. $K_2$. T. Jambû ed. ११. °पटहेन B. D. १२. उन्नतमिति $C_1$. $C_2$.

साधुसेवितोयं पन्था येनासि प्रवृत्तो विहन्त्येष[1]पुरस्तादुद्दामप्रसृते[2]-
न्द्रियाश्वसमुत्थापितं हि रजः कलुषयति दृष्टि[3]मनक्ष[4]जितां किय-
द्दूरं वा चक्षुरीक्षते । विशुद्धया हि धिया पश्यन्ति कृतबुद्धयः
सर्वानर्थानसतः सतो वा निसर्गविरोधिनी चेयं पयः पावकयो[5]-
रिवैकत्र धर्मक्रोधयोर्वृत्तिः । आलोकमपहाय कथं तमसि[6] निमज्जसि ।
क्षमा हि मूलं सर्वतपसां । परदोषदर्शनदक्षा दृष्टिरिवोत्कुपिता[7] न ते
बुद्धिरात्मरागदोषं पश्यति । क्वं[9] महातपो भारवैवं[10]धिकत्वं क्व पुरोभागि-
त्वम् । अतिरोषणश्चक्षु[11]ष्मानप्यन्ध एव जनः। न हि खलु कोपकलुषिता

च्छन्नच्छाङ्गुलीयमरकतस्य मयूखलताकलापो यस्य । तेन करेण । आ-
पीडः समूहः । पातं विन्यासं । पातयन्कुर्वन् । अत्र हि धात्वर्थ-
गतानुष्ठानामात्रवृत्तिः क्रिया । यथा संवस्ते क्षालिते वस्त्र इति । पन्था
व्यवहारो मार्गश्च । प्रसृतानि गन्तुं प्रवृत्तानि । प्रसृता च जङ्घा । रजो
रागो धूलिश्च । कलुषयति कार्याकार्यदर्शनासमर्थां करोति च । दृष्टिं
बुद्धिं नेत्रं च । अक्षाणीन्द्रियाणि रथाङ्गं चाक्षस्तेन च रथो लक्ष्यते । कृतबु-
द्धयः संस्कृतमतयः । असदविद्यमानं । निसर्गः स्वभावः । आलोको विवे-
कः प्रकाशश्च । तमोज्ञानमपि । दोषाः सव्यमण्डलत्वादीनि च । उत्कुपिता
क्रुद्धा धातुवैषम्यदूषिता च । आत्मरागदोषमिति । आत्मभूतगुणदर्शनं-
लौहित्यलक्षणं च । विकारं वोढाभारस्य धीमद्भिर्जनैर्वैवधिकः स्मृतः ।

---

१. निहन्त्येष° K. K1. K2. T. Jambû ed. विहन्ति । अनर्थे पातयन्ति C8.
२. प्रसृतेति । स्वैरं प्रवृत्तानि जङ्घा च प्रसृता स्मृता C3. ३. दृष्टीति । दृष्टिर्बुद्धिर्नेत्रं
च C3. ४. अनक्षेति । अक्षो रथावयवस्तेन लक्ष्यते ततोपरिशीलितरथ—ध्यानामपि
C3. ५. पावकयोरिव धर्मक्रोधयोरेकत्र वृत्तिः K. K1. K2. T. Jambû ed. ६.
तमसि । तिमिरेज्ञाने च C3. ७. दृष्टिरिव कुपिता बुद्धिर्न त आत्म° K. K1. K2. T.
Jambû ed. उत्कुपिता । कोपमाप्ता धातुदोषरूषिता [°भूषिता] च C3. ८. आत्मरा-
गदोषं । आत्मन्यभूतगुणदर्शन स्वस्यरक्तत्वं च तल्लक्षणं दोषं C3. ९. द्युमहा° A,
marginally corrected into दिव्यमहा° १०. वैवधिकता K. K1. K2. T. Jambû
ed. वैभवाधिकता marginally noted in A. वैवधिकत्वं । भा वाहकत्वं । अथ च
भारवाहकस्य दुर्घटमग्रस्थायित्वम् C3. ११. °चक्षुष्मानन्धः K. K1. K2. T.
Jambû ed.

विमृशति[1] मतिः कर्तव्यमकर्तव्यं वा । कुपितस्य हि प्रथममन्धकारी भवति विद्या ततो भ्रूकुटिः । आदाविन्द्रियाधिष्ठानं[2] रागः समास्कन्दति चरमं[3] चक्षुः । आरम्भे तापो गलति पश्चात्स्वेदसलिलं पूर्वमयशः स्फुरत्यनन्तरमधरः । कथं[4] विषपादपस्येव ते लोकविनाशाय जटावल्कलानि[5] जातानि । अनुचिता खल्वस्य ते मुनिवेषस्य[6] हारयष्टिरिव वृत्तमुक्ताचित्तवृत्तिः[7] । शैलूष[8] इव वृथा वहसि कृत्रिममुपशमशून्येन चेतसा तापसाकल्पम्[9] । स्वल्पमपि[10] न ते पश्यामि कुशलजातम् । अनेनातिलघिम्नाद्याप्युपर्येव[11] प्लवसे ज्ञानोदन्वतः । न खल्वनेडमूका[12] एडा[13] जडा[14] वा सर्व एवैते[15] महर्षयो रोषदोषनिषद्ये[16] स्वहृदये निग्राह्ये किमर्थमसि निगृहीतवान्[17]नागसं[18] सरस्वतीम् । एतानि तान्यात्मप्रसादस्खलितवैलक्ष्याणि यैर्याति[19] वाच्यतामविदग्धो जन इत्युक्त्वा पुनराह ।

दोषैकग्राहिहृदयः । पुरोभागी निगद्यते[20] । राग इति । अभूतगुणादिनन्दनं रक्तता त्र । जटा शिखा मूलानि च । वल्कलानि मुनिवस्त्राणि त्वचश्च । वृत्तमुक्ता शीलेन त्यक्ता परिवर्तुलमौक्तिका च जायोपजीवी हि जनैः[21] । शैलूषः कथितो बुधैः । आकल्पो वेषः । जातं प्रकारः । अतिलघिमानुपादेयता तुच्छतमं । उपर्येवेत्यन्तः प्रवेशाभावात् । लघुश्च जलोपरि प्लवते । कथिता अनेडमूकाः श्रोतुं वक्तुं च खलु ये न शक्ताः । एडास्तु श्रुतिहीनाः । जटा मूर्खा बुधैः प्रोक्ताः । रोष एव दोषस्तस्य निषद्या नियमेनावस्थितिर्यत्र तस्मिन् । स्वहृदये ते । यद्वा । रोष-

१. विमृषति K. K1. T. Jambû ed. २ इन्द्रियाणि K. K1 K2. T. Jambû ed. इन्द्रियाधिष्ठानं मनः C3. ३ चरमं । पश्चात् C3. ४. कथं लोकविनाशाय ते विषपादस्येव K. K1. K2. T. Jambû ed. ५. जटेति । जटाः प्रसिद्धा मूलानि च C3. ६. °वेशम्य K. K1. K2. T. Jambû ed. ७. वृत्तमुक्तेति । वृत्तं शीलं मुक्तं त्यक्तं यया सा चेतो वृत्तिः । पक्षे वृत्ता वर्तुला मुक्ता मौक्तिकानि यस्यां सेत्यर्थः C3. ८ शैलूषः । नटः C3. ९. तापसाकल्पमिति । वेषमित्यर्थः C3. १०. अल्पमपि K. K1. K2. T. Jambû ed. ११ अतिलघिम्नेति । तुच्छत्वेन भाररहितत्वेन चेत्यर्थः C3. १२. अनेल K. K1. K2. T. C2. Jambû ed. अनेडमूकाः । श्रोतुं वक्तुं चाकुशला जनाः C3. १३. एडाः । बधिराः C3. १४. जडाः । मूकाः C3. १५. एते K. K1. K2. T. Jambû ed. १६. निषद्येति । आपणेत्यर्थः C3. The original निषद्ये in A. marginally corrected into निश्र्ये. १७. निगृहीतवान् । शप्तवान् C3. १८. अनागसमिति । यद्यपराधोस्याः स्यात्तदैते महर्षयोपि कुर्युरिति भावः । अत एवानागसमत्र शब्दः C3. १९. वैव्याण्यतां याति K. K1. K2. T. Jambû ed. २०. विगद्यते C3. २१. जनैः C2.

वत्से सरस्वति[1] मागा विषादमेषा त्वामनुयास्यति सावित्री विनोदयिष्यति चास्मद्विरहदुःखितामात्मजमुखकमलविलोकनावधिश्च ते शापोयं भविष्यतीत्येतदभिधाय विसर्जितसुरासुरमुनि[3]मण्डलः ससंभ्रमोपगतनारदस्कन्धविन्यस्तहस्त[4]: समुचिताह्निककरणायोदतिष्ठत् । सरस्वत्यपि शप्ता किंचिदधोमुखी धवलकृष्णशारां[5] कृष्णाजिन[6]लेखामिव तपसे दृष्टिमुरसि पातयन्ती सुरभिनिःश्वास[7]परिमललग्नैर्मूर्तैः शापाक्षरैरिव षट्चरण[8]कदम्बकैराकृष्यमाणा शोकशिथिलहस्ता[9]धोमुखीभूते[10]नोपदिश्यमानमर्त्यलोकावतरणमार्गेणेव[11] नखमयूखजालकेन नूपुरव्याहाराहूतैर्भवनकलहंसकुलैर्ब्रह्मलोकनिवासि[12]लोकहृदयैरिवानुगम्यमाना समं सावित्र्या गृहमगात् ॥

दोषस्य निषद्या आपणस्त्वं तस्या मन्त्रणं हे रोषदोषनिषद्य इति व्याख्येयं । निगृहीतवान्प्राप्तवान् । आगः पापापराधयोः । वैलक्ष्यं लज्जितं ॥ वाच्यो[13] गर्ह्यः । पुनराहेति । अविश्रान्तेप्युक्तिक्रमे पुनरित्युपादानं वाच्यतापरिहारार्थं । वत्स इति प्रसादाविष्करणार्थं । एषेति । या तवैव स्निग्धा । विनोदयिष्यति सुखयिष्यति । सरस्वतीत्यादौ । सरस्वत्यपि शप्ता गृहमगादिति संबन्धः । शारशबलां धवलकृष्णामित्येव वक्तव्ये शारग्रहणं संवलितवर्णद्वयप्रतीत्यर्थः । अधोमुखीभूतेनेति । योधिकरणवशादनिष्टमुपदिशति स लज्जादिनावश्यमधोमुखी भवति । जालकं समूहो व्याहार उक्तिः ।

---

१. सरस्वति विषादं मागा एषा K. K1. K2. T. Jambû ed. २. एतावित् K. K1. K2. Jambû ed. ३. °मुनिमनुजमण्डलः K. K1. K2. T. Jambû ed. ४. °विन्यस्तवामहस्तः marginally noted in A. Jambû ed. ५. धवलकृष्णशारां इति । धवला च कृष्णा चात एव शारा कर्बुरामित्यर्थः C3. °सारां A. B. ६. कृष्णेति । यज्ञो ह देवेभ्योपचक्राम । स कृष्णो भूत्वा चचारेत्यादिवेदवाक्यात्कृष्णशब्देन कृष्णसारोभिधीयते C3. ७. निश्वास° K. K1. K2. T. ८. षट्चरणचक्रैरा° K. K1. K2. T. Jambû ed. ९. शापशोकशिथिलितह° K. K1. K2. T. Jambû ed. १०. अधोमुखीभूतेनेति । योपाविष्टमुपदिशति सोपि लज्जयाधोमुखीभवतीति भावः C3. ११.° मार्गेव D. K. K1. K2. T. Jambû ed. १२. निवासिहृदयैरिव° K. K1. K2. T. Jambû ed. १३. वाच्यो C1. C2.

अत्रान्तरे सरस्वत्यवतरणवार्तामिव [1]कथयितुमवततार मध्यमं लोकमंशुमाली । क्रमेण च मन्दायमाने मुकुलितविसिनी विसरव्यसनविषण्णसरसि वासरे मधुमदनमुदितकामिनी[3]कोपकुटिलकटाक्षक्षिप्यमाण इ[4]व क्षेपीयः क्षितिधरशिखरमवतरति तरुणतरक[5]पिलपनलोहिते लोकै[6]कचक्षुषि [7]प्रस्तुतमखर्माहेयी पृथक्सरत्क्षीर[9]धाराधवलितेष्वासन्न[10]चन्द्रोदयोद्दाम[11]क्षीरोदक्षालितेष्विव दिव्या[12]श्रमोपशल्येषु । अपराह्णप्रचारचलिते चामरिणि चामीकरतटताडना[13]रुणितरदने [14]रदति । सुरस्रवन्ती रोधांसि स्वैरमैरावते प्रसृतानेकविद्याधरा[15]भिसारिकासहस्रचरणालक्तका[16]नुलिप्त इव [17]प्रकटयति पाटलतां तारापथे तारा-

मध्यं लोकं भूमिं । अंशुमाली रविः । क्रमेणेत्यादौ । अस्मिन्सति सावित्री सरस्वतीमवादीदिति संबन्धः । विसरशब्द औणादिकः षण्डपर्यायः । मुदिताः संजातमन्मथाः । कामिन्यः शृङ्गारिण्यः । संभोगान्तराय कारो कथमयमद्यापि नास्तमेतीत्यतः कोपः । क्षिप्यमानश्चातित्वरितं पतति । क्षेपीयस्तूर्णतरं । लपनं वदनं । लोकेत्यादिना । संभोगविघ्नकारित्वमेव प्रकाश्यते । माहेयी गौः । उद्दामः प्रवृद्धिं गतः । उपशल्यं समीपं । चामीकर सुवर्णं । रदना दन्ताः । रदति विलिखति । सुरस्रवन्ती गङ्गा । रोधस्तट । स्वैरं स्वेच्छं । या दूतिका गमनकालमपारयन्ती सोढुं स्मरज्वरभरार्तिपिपासितेव निर्याति वल्लभजनाधरपानलोभात्सा कथ्यते कविवरैरभिसारिकेति । तारापथो नभः ।

---

१. कथयितु मध्यमं लोकमवततारांशुमाली K1. K2. T. Jambû ed. २. कामिनीति । संजातमन्मथेत्यर्थः C3. ३. कोपेति । सभोगान्तराय कारीति कोपसभव इति भावः C3. ४. क्षेपीयः । शीघ्रतरम् C3. ५. लपन । मुखं C3. The original reading in A. marginally corrected into कपिलतपन°. ६. K. K1. K2. T. Jambû ed. read after चक्षुषि । भगवति, Calc. ed. भगवति सवितरि. ७. प्रसृत K1. K2. T. Jambû ed. प्रस्तुत K. Calc. ed. ८. माहेयी । गौः सौरभेयी. C3. ९. धारा° omitted in K. K1. K2 T. Jambû ed. १०. चन्द्रो योद्दाम° B. ११. क्षीरोदलहरीक्षालिते K. K1. K2. T. Jambû ed. १२. आश्रमशल्येषु । आश्रमसीमासु C3. १३°. तडानरणित° K. K1. K2. T. Jambû ed. १४. रटति T. Jambû ed. १५ अभिसारिकेति । याति या प्रियं सेत्यर्थः । कान्तार्थिनी तु या याति सङ्केतं साभिसारिकेत्यमरः C3. १६. लक्तकरसानु° K. K1. K2. T. Jambû ed. Calc. ed. १७. प्रकटयति च तारापथे पाटलतां तारापथ° K. K1. K2. T. Jambû ed. १८. °अपहरन्ती C2.

पथप्रस्थितसिद्धदत्तदिनकरास्त[1]समयसपर्यावर्जिते रञ्जितककुभि कुसुम्भभासि स्रवति [2]पिनाकपाणिप्रणति मुदित सन्ध्यास्वेदसलिल इव रक्तचन्दनद्रवे वन्दारु[3]मुनिवृन्दारकवृन्द[4]बध्यमान सन्ध्याञ्जलिपुटे ब्रह्मोत्पत्तिकमलसेवागतसकलकमलाकर इव राजनि ब्रह्मलोके समुच्चारिततृतीयसवन[6]व्रतब्रह्मणि ब्रह्मणि ज्वलितवैतान[7]ज्वलनज्वालाजटालाजिरेष्वारब्धधर्मसाधन[8]शिविरे[9]नीराजनेष्विव सप्तर्षिमन्दिरे[10]ष्वघमर्षणमुषितकिल्बिषविष[11]गदोल्लाघलघुषु यतिषु सन्ध्योपासनासीनतपस्विपङ्क्ति[12]पूतपुलिने प्लवमाननलिनयोनियानहंस[13]हास[14]दन्तुरोर्मिणि मन्दाकिनीजले जलदेवतात[15]पत्रे [16]पत्ररथकुलकलत्रान्तःपुरसौधे निजमधु[17]मधुरामोदिनि कृतमधुपमुदि मुमुदिषमाणे कुमुदवने दिवसावसानताम्य-

आवर्जिते प्रकीर्णे। ककुभो दिशः। कुसुम्भं पद्मकं। रक्तचन्दनद्रवे स्रवति सन्तीति योजना। वन्दारु वन्दनशीलं। वृन्दारकशब्दः प्रशंसायां। सवनं प्रातर्मध्याह्ने सायं च सोमयागैकदेशः स्नानमित्यन्ये। व्रतब्रह्म वेदः। वैतानो यज्ञभावः। जटालानि व्याप्तानि। अजिराण्यङ्गनानि। आरब्धे। धर्मसाधने शिविरे पुण्योपकरणस्कन्धावारे। नीराजनाख्यं शान्तिकर्मयेषु। धर्मोपकरणविषये मा दोषाः प्रादुरभवन्निति। शमनं सर्वपापानां जप्यं त्रिस्त्वघमर्षणं। गदो रोगः। उल्लाघं स्वस्थीकरणं। यतयश्चतुर्थाश्रमिणः। सद्यो जलत्यक्तं। तटं पुलिनं। नलिनयो निर्ब्रह्मा। हंसानां हासः शौक्ल्यं हंसा एव वा शुक्लतया हासः। दन्तुरा एव दन्तुरिताः। ये च सहासास्ते च लक्ष्यमाणदन्ततया दन्तुरा इव दृश्यन्ते।

१. दिनकरास्तमयार्घा° K. K1. K2. T. Jambû ed. २. पिनाकिप्रणति K. K1. K2. T. Jambû ed. ३. मुनिवृन्दारकेति। मुनिपूज्येत्यर्थः C3. ४. °वन्द्यमान K1. K2 T. Jambû ed. ५. वने K. K1. K2. T. Jambû ed. Calc. ed. ६. K. K1. K2. T. Jambû ed. omit व्रत. ७. ज्वलनज्वाला B. ८. शिविराः स्कन्धावाराः C3. ९. नीराजनेति। शान्तिकर्मेत्यर्थः C3. १०. अघमर्षणेति। मंत्रविशेषेत्यर्थः C3. ११. उल्लाघेति। व्याधिमोक्षेत्यर्थः C3. १२. पूत K. K1. K2. T. Jambû ed. धूत A. १३. हासेति। लक्षणया विलासेत्यर्थः। सादृश्योपचारलक्षणा वात्र C3. १४. दन्तुरितोर्मिणि K. K1. K2. T. Jambû ed. १५. आतपत्रे पतत् marginal gloss in A. १६. पत्ररथेति पक्षीत्यर्थः C3. १७. °मदिरा° K. K1. K3. T. Jambû ed. १८. °स्कन्दावारे° C1. C2. Jambû ed. १९. marginally corrected into त्रिष्ठाघमर्षणं C2.

त्तामरसमधु[1]रससपीतिभीते सुषुप्सति मृदुमृ[2]णालिकाकाण्डकण्डूयनकुण्डलितकन्धरे धु[3]तपक्षिराजिवीजितराजीवर[4]जसि राजहंसयूथे तटलताकुसुमधूलिधूसरितसरिति सर[5]ति सिद्धपुरपुरन्ध्रि[6]धम्मिल्लमाल्लिकागन्धग्राहिणि सायन्तने तनीयसि निशा निः[7]श्वासनिभे नभ[8]स्वति स्व[9]पतिसङ्को[10]चोदञ्चदुच्चके सरकोटिस[11]ङ्कटकुशे श[12]यकोशकुटीकोटरशायिनि षट्चरणचक्रे । नृत्तोद्धूतधूर्जटिजटाटवीकुटजकुड्मलनिकरनिभे नभस्तलं स्तवकयतितारागणे सन्ध्यानुबन्धताम्रे परिणमत्तालफलत्वक्त्विषि कालमेघमेदुरे मेदिनीं मीलयति नववयसि तमसि तरुणतरतिमिर-

आतपत्रं छत्रं । पत्त्ररथाः पक्षिणः । कलत्रं दाराः । मधु मकरन्दः मद्यं च । मधुपा भ्रमरा मद्यपाश्च । मुमुदिषमाणे विचिक्रिसिषति । अन्यत्र मोदितुमिच्छति । प्रारिप्स्यमानगीतादिगोष्ठीबन्ध इति यावत् । मञ्चाः क्रोशन्तीतिवत् । ताम्यादिति । ताम्यन्ति न तु तान्तानि प्रदोषस्य न तावत्प्रवृत्तत्वात् । मधु मद्यमपि । सपीतिस्तु सहपानं । अनेन तु प्रेमातिशय आवेद्यते । सुषुप्सति निद्रासति । मृद्विति कण्डूयनं । विक्रिया विशेषणं । कुण्डलिता चक्रीकृता । राजीवं पद्मं । राजहंसा इत्यत्रैकशेषः । तटशब्दः प्रत्यासत्त्युपलक्षणार्थः । पुरन्ध्रिरुत्तममहिला धम्मिल्लाः संयताः कचाः । मल्लिका भूपदी । एषा च सायमेवोन्मिषति । सायन्तने दिनान्तभवे । कोशः कुड्मलं । कोटरमभ्यन्तरं । कुटी गेहं । शयनमत्र विश्रमणं । न तु स्वापः पौनरुक्त्यापत्तेः । अटवीति विवक्षित तत्रैवाकृत्रिमकुसुमसम्बन्धात् । कुटजं गिरिमल्लिका । कुड्मलं कलिका । निकरः समूहः । अनुबन्धः संस्कारः । परिणमज्जरतीभवत् । तालस्तृणराजः । मेदुरं घनं । मीलयति स्थगयति । नववयसि प्रत्यग्रे ।

---

१. °समधुरमधुसपीति° K1. K2. T. Jambû ed. °समधुरसपीति° K. समधुररस पीति° marginally noted in A. २. °मृणालकाण्ड° K. K1. K2. T. Jambû ed. ३. °धनुपक्ष° B. ४. °सरसि K1. K2. T. Jambû ed. ५. K1. K2. T. Jambû ed. omit सरति ६. धम्मिल्लेति । केशरचनेत्यर्थः C3. ७. °निःश्वास° K1. K2 Jambû ed. ८. नभस्वाति । वायौ C3. ९. K. K1. K2. T. Jambû ed. omit स्वपति. १०. उदञ्चन् । ऊर्ध्वं गच्छन् C3. ११. सङ्कटकुशे A. १२. कोशकुटीति । तृणगृहेत्यर्थः C3. शयकोटरकुटीशायिनि K. K1. K2. T. Jambû ed.

पटलपाटनपटीयसि समुन्मिषति यामिनी कर्णपूरचम्पककलिका-कदम्बके प्रदीपप्रकरे प्रतनुतुहिनकरकिरणालोकपाण्डुन्याश्यानलीनी-रमुक्तकालिन्दीकूलवालुकापुलिनायमाने शातक्रतवे क्रशयति तिमिरमा-शामुखे खमुचिमेचकितविकचकुवलयसरासि शशधरकरनिकरकचग्रहा-विले विलीयमाने मानिनीमनसीव शर्वरीचिकुरचये चाषत्विषि तमस्यु-दिते भगवत्पुदयगिरिकटककुहरहरिखरनखरनिवहहेतिनिहतनिजहरिण-गलितरुधिरनिचयनिचितमिव लोहितं वपुरुदयरागधरमधरमिव विभाव-रीवध्वा धारयति श्वेतभानावचलच्युतचन्द्रकान्तजलधाराधौत इव ध्वस्ते ध्वान्ते गोलोकगलितदुग्धविसरवाहिनि दन्तमयमकरमुखमहाप्रणाल इव प्रवृत्ते पूरयितुं पयोधिमिन्दुमण्डले स्पष्टे प्रदोषसमये सावित्री शून्यहृद-यामिव किमपि ध्यायन्तीं सास्रां सरस्वतीमवादीत्। सखि त्रिभुवनोप-देशदानदक्षायास्ते पुरो जिह्वा जिह्रेति मे जल्पन्ती। जानास्येव यादृ-

चम्पको हेमपुष्पकः। आश्यानमीषच्छुष्कं। नीरं जलं। कालिन्दी यमुना। नीलिमाभिप्रायेणैतत्पदं। यस्तटभागो वारिणात्यक्तस्तत्पुलिनं। कूलं ततोन्यत्। क्रशयति तनूकुर्वति। खमुचि त्यक्ताकाशे। भूभागमवलम्बमान इत्यर्थः। मेचकितं निर्विभागतां नीतं। शशधरकरैः स्वीकारेण करम्बितेत एव क्षयं गच्छति। अन्यत्र चन्द्ररश्मीनां धारणेन सेवनेन किं कर्तव्यतामूढ एवमधिगलत्यार्द्रतां भजमाने। केशपाशपक्षे तु विस्रंसमनि। चाषः किकीदिविः पक्षी। हरिः सिंहः। नखरा नखाः। हेतिरायुधं। विभावरी रात्रिः। श्वेतभानुश्चन्द्रः। अचलोर्थादुदयाचलः। गोलोको

१. यामिनीकामिनी K. K1. K2. T Jambû ed २. प्रतत° B. प्रतनुतुहिनकिरणलावण्यालोक° K. K1. K2. T. Jambû ed ३. °वाल° K. K1. K2. T. Jambû ed. ४. कृश्यति K. K1. K2. T. Jambû ed. ५. °विकचित° K. K1. K2. Jambû ed. ६. शर्वरीशर्वरीचिकुर° K. K1. K2 T. ७. चाषपक्षन्विषि K. K1. K2. T. Jambû ed. ८. °गिरिशिखर° K. K1. K2. T. Jambû ed. ९. श्वेतभानौ। चन्द्रे C3. १०. रश्या °marginally noted in A. ११. गोलोकः। सुरभिलोकः। पक्षे किरणसमूहः C3. १२. दुग्धेति। पयस्तत्सदृशं लक्षणयामृतं चेत्यर्थः C3. १३. इवापूरयितुं प्रवृत्ते पयो° K. K1. K2. T. Jambû ed. १४. कृश्यति C1. तनूकरोति C2. १५. स्वीकारेण Jambû ed.

त्र्यो विसंस्थुला गुणवत्यपि जने दुर्जनवन्निर्दाक्षिण्याः[1] क्षणभङ्गिन्यो[2] दुरतिक्रमणीया[3] दैवस्य वामा वृत्तयः। निष्कारणा च निकारकणिकापि[4] क्लेशयति[5] मनस्विनो[6] मानसमसदृशजनादापतन्ती। अनवरतनयनजल-[7] सिच्यमानश्च तरुरिव विपल्लवोऽपि[8] सहस्रधा प्ररोहति शोकः[9]। अतिसु-कुमारं च जनं सन्तापपरमाणवोऽपि[10] मालतीकुसुममिव म्लानिमापादय-[11]न्ति। महतां[12] चोपरि निपतन्नणुरपि सृणिरिव[13] करिणां क्लेशः कदर्थनाया-लम्। सहज[14]स्नेहपाशग्रन्थिबन्धनाश्च बान्धवभूता दुस्त्यजा जन्मभूमयः। दारयति[15] दारुणः[16] क्रकचपात इव हृदयं[17] संस्तुतजनविरहः। सा त्वं[18] नार्ह-स्येवं भवितुम्। अभूमिः खल्वसि दुःखक्ष्वेडाङ्कुरप्रभावानाम्[19]। अपि च।

रश्मिः समूहो वा। मकरमुखमिव मुखमग्रमस्येति समासः। विसंस्थुला निर्मर्यादाः। दुर्जनवन्निर्दाक्षिण्याः क्रूराः। क्षणभङ्गिन्य इत्याश्वासनग-र्भेयमुक्तिः। वामाश्च स्त्रियः। ईदृश्य एव। निकारः परिभवः। कणिका लेशः शर्करिका च। क्लेशयति दूषयति कालुष्यं नयति च। मानसं चेतः सरश्च। अनवरतमश्रुणासिच्यमानोऽनवरतं घटसारणीप्रणाल्यादिना। नय-नं प्रापणं यस्य तादृशा जलेनोक्ष्यमाणश्च। विपल्लव आपल्लेशो विगतप-ल्लवश्च। प्ररोहति स्थिरीभवति। तरुपक्षे प्ररोहा विद्यन्ते यस्य स प्ररोहः स इवाचरति प्ररोहतीति व्याख्या। सन्तापः खेद उष्मा च। मालतीकुसुमं सु-मनः पुष्पमतिसुकुमारं। महान्त उत्तमा द्राघीयांसश्च। सृणिरङ्कुशः। मा-तरोऽपि जन्मभूमयः। दारुणो विषमः काष्ठस्य च। क्रकचः करपत्रं। हृदयं

---

१. दुर्जननिर्दाक्षिण्याः A. B दुर्जनेति। दुर्जनवत्क्रूरा इत्यर्थः C3. २. क्षणभङ्गिन्य इति। आश्वासनोक्तिरियमिति भावः C3. ३. दुरतिक्रमणीया न रमणीया दैवस्य K. K1. K2. T. Jambû ed. ४. न्यक्कारकणिकापि B. ५. कलुषयति K. K1. K2. T. Jambû ed. C1. C2. [ कलुषायते ] ६. मनस्विनोऽपि K. K1. K2. T. Jambu ed. ७. अनवरतनयनेति। अनवरतप्रापणं कुल्यादिना। नयनं प्रापणं नेत्रं चेत्यर्थः C3. ८. विपल्लवः। विपदां लवः। पक्षे पल्लवरहितश्च C3. ९. K. K1. K2. T. Jambû ed. omit शोकः १०. K. K1. K2. T. Jambû ed. omit अपि. ११. नयन्ति K. K1. K2. T. Jambû ed. १२. महतां। गरीयसामुन्नतानां च C3. १३. सृणिरिव K. K1. K2. T. Jambû ed. १४. सहस्र° A. B. १५ दारयति च D. १६. दारुणः। रौद्रः पक्षे काष्ठस्य C3. १७. हृदयं। अङ्गविशेषं मध्यं च C3. १८. K. K1. K2. T. Jambu ed. omit त्वं. १९. क्ष्वेडाङ्कुरभूमयः T. Jambû ed. °प्रसवानां K. K1. K2.

पुराकृते[1] बलवति कर्मण्यशुभे शुभे वा फलकृति तिष्ठत्यधिष्ठातरि प्रष्टे[2] पृष्टतश्च कोऽयमपरो विदुषि शुचाम्। इदं च ते त्रिभुवनमङ्गलैकमलममङ्गलभूताः[3] कथमिव मुखमपवित्रयन्त्यश्रुबिन्दवः। तदलमधुना कथय कतमं भुवो भागमलङ्कर्तुमिच्छसि। कस्मिन्नवतितीर्षति[4] ते पुण्यभाजि प्रदेशे हृदयम्। कानि वा तीर्थान्यनुग्रहीतुमभिलषसि। केषु वा धन्येषु तपोवनधामसु[5] तपस्यन्ती स्थातुमिच्छसि। सज्जोऽयमनुचरणचतुरः[6] सहपांसुक्रीडापरिचयपेशलः[7] प्रेयान्सखीजनः[8] क्षितितलावतरणाय। अनन्यशरणा चाद्यैव प्रतिपद्यस्व मनसा वचसा[9] क्रियया च सर्वविद्याविधातारं धातारं[10] स्वश्रेयसे स्वचरणरजः पवित्रितत्रिदशासुरं सुधासूति[11]कला[12]कलिकाकलितकर्णावतंसकं[13] देवदेवं त्रिभुवनगुरुं त्र्यम्बकम्। अल्पीयसैव कालेन सते शापशोकविरतिं वितरिष्यतीत्येवमुक्त्वा[14] च मुक्तमुक्ताफलधवललोललोचनजललवा प्रत्यवादीत्। प्रियसखि त्वया सह विचरन्त्या न मे काञ्चिदपि पीडामुत्पादयिष्यति ब्रह्मलोकविरहः शापशोको वा। केवलं

चित्तं मध्यं च। संस्तुतः परिचितः। सेति सर्वनामपदं जानामीत्यादि पूर्वोक्तार्थगर्भीकारेण। अभूमिरस्थानमक्षेत्रं च। क्ष्वेडो विषं। शुभेऽशुभे वेत्यादि स प्रतिपक्षालोकोक्तिरियं। अव्युत्पन्नमतिः कृतेन न सतानेवासताप्याकुलः। गतासूनगतासूंश्च नानुशोचन्ति पण्डिता इत्यादिवत्। अधिष्ठातरि स्वामिनि। प्रष्टे अग्रगामिनि। अपवित्रतां नयन्ति न तु शोभान्त्याजयन्ति। धामसु स्थानेषु। तपस्यन्ती तपश्चरन्ती। सज्जः प्रगुणः। आज्ञाकार्यमिति दृष्टस्वरूपः। निःसामान्यविस्रम्भभाजनतामभिव्यनक्ति सखीजन-

---

१. पुराकृते कर्मणि बलवति शुभेऽशुभे वा K. K1. K2. T. Jambû ed. २. प्रष्ठपृष्ठतश्च B. ३. °अस्तु K. K1. K2. T. Jambû ed. ४. कस्मिन्नवतरितु तार्षीत marginal gloss of A. ५. °वन° K. K1. K2. T. Jambû ed. ६. अयमुपचरण° K. K1. K2. T. Jambû ed. ७. सहपांशु A. B. D. ८. प्रभृतिप्रति° K. K1. K2. T. Jambû ed. ९. वाचा K. K1. K2. T. Jambû ed. १०. दातारं च श्वःश्रेयसस्य चरणरजः K. K1. K2. T Jambû ed. स्वचरणरजः marginally corrected into शरणरजः in A. ११. सुधामूर्ति.° D. C3. १२. K. K1. K2. T. Jambû ed. omit कला.° १३. K. K1. K2. T. omit सकं. १४. एवमुक्त्वा मुक्तमुक्ताधवललोचनजललवा सरस्वती प्रत्य° K. K1. K2. T. Jambû ed.

कमलासनसेवाम् खमार्द्रयति मे हृदयमपि च त्वमेव वेत्सि भुवि[1] धर्मधामानि समाधिसाधनानि योगयोग्यानि च स्थातुं[2] स्थानानीत्यभिधाय विरराम । रणरणकोपनीतप्रजागराचा[3]मीलितलोचनैव तां नि[4]शामनयत् । अपरे द्युरुदिते भगवति त्रिभुवनशेखरे खणखणायमानखरै[5]रखलीन[6]क्षतनिजतुरगमुखक्ष[7]रैः क्षतजेनेव पाटलितवपुष्युदयाचलचूडामणौ जरत्कृकवाकुचूडारुणे[9]रुणपुरःसरे[10] विरोचनेनातिदूरवर्ती[11] विविच्य पितामह[12]विमानहंसकुलपालः पर्यटन्न[13]परवक्त्रमुच्चैरगायत् ।

तरलयसि दृशं किमुत्सुकाम[14]कलुषमानस वा सलालिते ।
अवतर कलहंसि वापिकां पुनरपि यास्यसि पङ्कजा[15]लयम् ॥

तच्छ्रुत्वा स[16]रस्वत्यचिन्तयत् । अहमिवानेन पर्य[17]नुयुक्ता । भवतु मा[18]नयामि मुनेर्वचनमित्युत्थाय च कृतमही तलाव

शब्दः । स्व[19]श्रेयसे कल्याणाय । सुधासूतिश्चन्द्रः । कलिका तरिका । शापविरतिर्ब्रह्मणैवोक्ता । अतस्तत्र किमन्यापेक्षयेत्याशङ्क्याह । अल्पीयसैव कालेनेति । आर्द्रयति स्नेहयति । धर्मधामानि मध्यदेशादीनि । समाधिश्चित्तैकाग्र्यं । योगे हि तदुक्तं । आदौ समाधिमासीत पश्चाद्योगमुपाचरेदिति । रणरणको दुःखमरतिकृतं । अपरे द्युरपरस्मिन्नहनि । एते च कालाः संख्यादयो व्यवहारा इहत्या ब्रह्मलोक उपचरिताः । शेखर इव शेखरो मुण्डमालकः । खलीनं कविका । क्षतजं रक्तं । कृकवाकुः कुक्कुटः । चूडा मांसमयी शेखरिका । विविच्य विचार्य । विमानपालः स्वप्रस्तावे हंसीं यदाह तेन सरस्वती पर्यनुयोजिते वाभूत् । अपरवक्त्राख्यं वृत्तमाख्या-

---

१. मे भुवि K. K1 K2. T. Jambû ed. २. स्थानानि स्थातुमित्येवमभिधाय K. K1. K2. T. Jambû ed. ३. चानिमीलित° K. K1. K2. T Jambû ed. ४. निशामानयत् B. ५. स्खलत्खलीन° K. K1. K2. T. Jambû ed. ६. खलीनेति । कविकेत्यर्थः । अश्वस्य मुखाकर्षणो लोहमयो यन्त्रविशेषः C3. ७. मुखक्षिप्तेन K. K1. K2. Jambû ed. ८. क्षतजेनेवेति । रुधिरेणेवेत्यर्थः C3 ९. चूडारुणारुण° K. K1. K2. T. Jambû ed. १०. विरोचनेनेति । सूर्येण C3. ११. A. B. omit विविच्य. १२. पितामहवाहनहंस° K. K1. K2. T. Jambû ed. १३. अपरवक्त्रं नौलौगाक्षौ marginally noted in B. १४. अकलुषमानसेति । निर्मलचित्ता ब्रह्मेति यावत् । पक्षे कलुषं मानसं सर इत्यर्थ. C2. १५. पङ्कजालयं । ब्रह्माणं यद्वा पङ्कजमेव गृहम् C3. १६. सरस्वती पुनरचिन्तयत् K. K1. K2. T. Jambû ed. १७. पर्यनुयुक्ता । भाणितिभङ्ग्यामेरिता C3. १८. भवतु मुनेर्वचनं मानयामीत्युक्त्वोत्थाय कृत° K1. K2. T. Jambû ed. १९. स्वःश्रेयसस्य कल्याणस्य दातारं C1. C2.

तरणसंक्रान्ता परित्यज्य वियोगविक्लवं स्वपरिजनं ज्ञातिवर्गमवगणा त्रिः प्रदक्षिणीकृत्य चतुर्मुखं कथमप्यनुनय निवर्तितानुयायि व्रातिव्राता ब्रह्मलोकतः सावित्र्या द्वितीया निर्जगाम ॥

ततः क्रमेण ध्रुवप्रवृत्तां धर्मधेनुमिवाधोधावमानधवलपयोधरामुद्धुरध्वनिर्यन्धकमथनमौलिमालती मालिकामालीयमानवालिखिल्यरुद्धरोधसम्। अरुन्धती धौतताम्रत्वचं तुङ्गतुङ्गतरङ्गतरलिततारकां तापसविकीर्णविरलतिलोदकपुलकितपुलिनाम्। अप्लवनपूतपितामहपानितपितृपि-

यिकासु प्रयोज्यं। तथा चाह भामहः। वक्त्रं चापरवक्त्रं च काव्ये काव्यार्थशंसिनीति। तरलयसीत्यादि। अकलुषं मानसं यस्य स निर्मलचेता ब्रह्मा मानसाख्यं च सरः। लालिता शीलिता। वापिका पुष्करिणी। उप्यन्तेस्यां तानि कर्माणीति वापिका मर्त्यभूमिरपि। पङ्कजमालयो यस्य स ब्रह्म सरश्च। पर्यनुयुक्तोपपत्त्याबोधिता। अवगणा केवला। सावित्री व्यतिरेकेण नान्यपरिवारा। कथमपीति न भृत्यादिवत्। व्रातिव्रातः तपस्विसमूहः। तत इत्यादौ। ईदृशीं मन्दाकिनीमनुसरन्ती सरस्वती मर्त्यलोकमवततारेति सम्बन्धः। ध्रुवं नित्यं वियत्। तस्मात्प्रवृत्तां ध्रुवस्तारकविशेषो ध्रुवाच्चित्यस्थानाद्वा विष्णोर्वा ध्रुवावूरू पश्चाद्भागौ सक्थिनी ध्रुवे वा तयोः प्रकर्षेण वृत्तां परिवर्तुलां वा। अध इति पदेन धावनक्रियासहत्वाज्जलस्य ग्रहणं सूच्यते। अत एव धवला शुक्लाः। पयोधरा मेघा यस्यास्तां। इतरत्राधोधावमानाः पयः पूर्णत्वाल्लम्बमानाः क्षीरस्रुतश्च धवलाःस्तना यस्याः। अधोधावमानं वेगेन प्रसरद्धवलं पयो धारयति या तां। अधोधावमानो धवलो यः पयोधो वत्सस्तं राति ददाति या तां। धवलो वृषस्तस्मै पयोधारयति या तां

---

१. ज्ञातिवर्गमवगण्यावगणा K. $K_1$. $K_2$. T. Jambû ed. अवगणा। एकाकिनी। यतः केवलोवगणो मतः $C_3$. २. ध्रुवप्रवृत्ताम्। एकत्र ध्रुवमाकाशं तारकाभेदो वा ध्रुवस्ततः प्रवृत्ताम्। अन्यत्र ध्रुवयोर्जानुनोरधो भागयोः प्रकर्षेण वृत्ताम् $C_3$. ३. अधोधावमानधवलपयोधराम्। एकत्र भूमिसम्मुखं वेगेन गच्छद्विशदं जलं धारयति। अन्यत्र शरीरस्याधो देशे गतिवशाच्चलन्तो निर्मलाः स्तना यस्याः सा तामित्यर्थः $C_3$. ४. अन्धकमथनेति। ईश्वरेत्यर्थः $C_3$. ५. वालखिल्याः K. $K_1$. $K_2$. T. Jambû ed. $C_1$. $C_2$. ६. त्वङ्गत्तुङ्ग° A. B. K. $K_1$. $K_2$. T. Jambû ed. तङ्गत्तरङ्ग° D. तङ्गदिति। रङ्गत्वङ्गेति मुख्यः पाठः। तत्र त्वङ्गं चलम् $C_3$. त्वङ्गत्तुङ्गतरङ्गतरत्तरलतरतारतारकां K. $K_1$. $K_2$. T. Jambû ed. ७. तापसविकीर्णतरलति° K. $K_1$. $K_2$. T. Jambû ed.

ण्डपाण्डुरितपार्गं पर्यन्तसुप्तसप्तर्षिकुशशयनसूचितसूर्य[1]ग्रहणसूतको-
पवासामाचमनशुचिशचीपतिमुच्यमानार्चनकुसुम[2]शारां शिवपुरपति-
तनिर्माल्यमन्दारदामकामनादरदर्शितमन्दरदरीदृषद[3]मनेकनाकनायकनि-
कायकामिनीकुचकलशविलु[4]लितविग्रहां ग्रहग्राव[5]स्खलनमुखर[6]स्रोतसं सु-
षुम्नास्नुनशशिसुधाशीकरस्तवकनारकितनीरां धिषणाग्निकार्यधूमधूसरि-
सैकता सिद्धविरचितवालुकालिङ्गलङ्घनत्रासविद्रुतविद्याधरां निर्मोकमु-
क्तिमिव गगणोरगस्य लीलाचन्दन[9]ललाटिका[10]मिव त्रिविष्टपविटस्य वि-
क्रयवीथीमिव पुण्यपण्यस्य दन्तार्गला[11]मिव नरकनगरस्य[12]। अंशुकोष्णी-
षपट्टिकामिव सुमेरोः[13]। दुकूल[14]कदलिकामिव कैलासकुञ्जरस्य। पद्धतिमि-
वापवर्गस्य। नेमिमिव कृतयुग[15]चक्रस्य। सप्तसागरराजमहिषीं मन्दा-
किनीमनुसरन्तीं मर्त्यलोकमवततार ॥

वेत्यादिकाः कुल्याख्या एव। उद्धुर उद्भटः। अन्धकमथनः शिवः। आली-
यमानाः श्लिष्यन्तः। वालिखिल्या मुनिभेदाः। रोधस्तटं। तद्वच्चरत्। आ-
प्लवनं स्नानं। पितरो देवविशेषा आज्यपाः सोमपा बर्हिषदश्च। आचमने-
त्यादिना। पितामहत्वे[16]न स्नानादिनिष्ठात्वमस्योच्यते। अत एव शचीपदेन स-
म्भोगासक्तत्वमिव पोषितं। निकायः समूहः। सुषुम्नाख्योमृतमयो रविर-
श्मिः। धिषणो बृहस्पतिः। सिद्धकृतत्वेन लिङ्गेषु भगवत्सन्निधानमावेद्यते।
निर्मोकः सर्पकञ्चुकः। विस्रंसतया शुक्लत्वेन लहरिकावलीत्वेन च निर्मो-
कमुक्तिमित्युत्प्रेक्षा। गगणमिवोरगः कृष्णतया। ललाटिका ललाटाल-
ङ्कारः। विटो भुजङ्गः। उष्णीषं शिरोवेष्टन दिक्षु प्रसिद्धं। दुकूलशब्दो दुगूल-
समानार्थः। पद्धतिर्मार्गः। अपवर्गो मोक्षः। कृतयुगस्य रचितयुगकाष्ठस्य

---

१ सूर्यग्रहसूत° K K1. K2. Jambû ed सूर्यग्रहणोपवासां° D. २. कुसुमनिक-
रशारां K. K1. K2. T. Jambû ed. ३ दरीदृषदं स्नानागत् । अनेक° marginally
noted in A. ४. °विलुलित K. K1. K2. T. Jambû ed. ५. ग्राहग्रावग्रामस्खलन°
K. K1. K2. T. Jambu ed. ६ °मुखरित° K. K1. K2. T. Jambû ed. ७. °श्रोतसं
A.B. ८. सुषुम्नाश्रित° D. सुषुम्नेति। सुषुम्नाख्यां रश्मिरादित्यस्य। येन वर्धते चन्द्रः
C3. ९. K. K1. K2. T. Jambû ed. omit चन्दन. १० ललाटिकामिति। लला-
टिका ललाटस्य मण्डनरखामित्यर्थः। चान्दनी C3. ११. दन्तागालामिव A. १२. न-
करनगरद्वारस्य. K. K1. K2. T. Jambu ed. D. places लीला चन्दन— नकरनग-
रस्य after सुमेरोः १३. सुमेरुनृपस्य K. K1. K2. T. Jambû ed. १४. दुगूल° K.
K1.K2. T. Jambu ed. १५. कृतयुगस्य K.K1.K2.T. Jambu ed. १६. °वस्त्र°C2.

अपरपश्चिमाम्बरतलस्थितमिव हारमिव वरुणस्य । अमृतनिर्झरमिव चन्द्राचलस्य । शशिमणिनिस्यन्दमिव विन्ध्यस्य कर्पूरद्रुमद्रवप्रवाहमिव दण्डकारण्यस्य । लावण्यरसप्रस्रवणमिव दिशां स्फाटिकशिलापट्टशयनमिवाम्बरश्रियः स्वच्छशिशिरसुरसवारिपूर्णं भगवतः पितामहस्यापत्यं हिरण्यबाहुनामानं महानदं यं जनाः शोण इति कथयन्ति । दृष्ट्वा च रमणीयतयाहृतहृदया तस्यैव तीरे वासमरोचयत् । उवाच च सावित्रीम् । सखि मधुरमयूरविरुतयः कुसुमपांसुपटलसिकतिलतरुतलाः पुष्पपरिमलमत्तमधुकरवेणीवीणारणितरमणीया रमयन्ति मां मन्दीकृतमन्दाकिनीद्युतेरस्य महानदस्योपकण्ठभूमयः । पक्षपाति च ममेदं मनः स्थातुमत्रैवेत्यभिनन्दितवचना च तथैवेति तया तस्य पश्चिमे तीरे समवातरत् । एकस्मिंश्च शुचौ शिलातलसनाथे तटतरुलतामण्डपे गृहबुद्धिं बबन्ध । विश्रान्ता च नातिचिरादुत्थाय सावित्र्या सार्धं

रथस्येत्यर्थः । यथा नेमिवशाद्रथग्रहणं तथा तद्वशात्कृताख्यस्य युगस्य । सप्तसागरराजः क्षीरसमुद्रश्चन्द्राख्यः पर्वत इति केचित् । शशिमणिश्चन्द्रकान्तः । पितामहस्येति तद्भक्त्या तदाश्रयणं । सिकता विद्यन्ते यस्य स सिकतिलः । मत्तशब्देन सशब्दत्वं । वेणीपदेन च तन्त्रीसन्निवेशसादृश्यमाह । वेणी पङ्क्तिः । लिङ्गचनेनेनेति लिङ्गमाकारः । पञ्चब्रह्माणि सद्योजातो वामदेवोघोरस्तत्पुरुष ईशानश्चेति । मुद्राबन्धो विशिष्टः कराङ्गुलिसन्निवेशः । ध्रुवाख्या विशिष्टा गीतिः । वनं तोयं । यजमान उग्रः । अष्टौ पुष्पाण्ये-

---

१. चन्द्राचलेति । चन्द्र एवाचलेत्यर्थः C3. २. °निष्यन्दमिव D. निष्पन्दमिव K. K1. K2. T. Jambû ed. ३. स्फुटिक° A. B. ४. श्रियाः K. K1. K2. T. Jambû ed. ५. हिरण्यवाहनामानं K. K1. K2. T. Jambû ed. ६. दृष्ट्वा च तं K. K1. K2. T. Jambû ed. ७. समचरयत् K. K1. K2. T. Jambû ed. ८. K. K1. K2. T. Jambû ed. omit पुष्प. ९. मत्तमधुपवेणी° K. K1. K2 T. Jambû ed. १०. पक्षपाति च हृदयमत्रैव स्थातुं म इत्यभिनन्दित° K. K1. K2. T. Jambû ed. ११. मे मनः D. १२. D. omits च. १३. तथेति K. K1. K2. T. Jambû ed. १४. K. K1. K2. T. Jambû ed. omit तरु. १५. सार्धसमुच्चिता marginally noted in D.

मुच्चितार्चनकुसुमा सस्नौ । पुलिनपृष्ठ[1]प्रतिष्ठापितसैकतशिवलिङ्गा च भक्त्या परमया [2]पञ्चब्रह्मपुरःसरां सम्यङ्मुद्राबन्धविहितपरिकरां ध्रुवागीतिगर्भामवनिपवन[3]वनगगणदहनतपनतुहिनकिरणयजमानमयी मूर्तीरष्टा[4]पि ध्यायन्तीं सुचिरम[5]ष्टपुष्पिकामदात् । अयत्नोपनतेन च[6] फलमूलेनामृतरसमप्यतिशिशायिषमाणेन च स्वादिम्ना शिशिरेण शोणवारिणा शरीरस्थितिमकरोत् । अतिवाहितदिवसा च तस्मिल्लतामण्डपशिलातले कल्पित[8]लतापल्लवशयना सुष्वाप । अन्ये त्वरण्यनेनैव क्रमेण नक्तन्दिनमत्यवाहयत् । [9]एवं समतिक्रामत्सु दिवसेषु गच्छति च काले । [10]कदाचिद्याममात्रोद्गते रवावुत्तरस्यां ककुभि प्रतिशब्दपूरितवनगह्वरं [11]गम्भीरताररतरं तुरगहेषितह्रादमशृणोत् । [12]जातकुतूहला च निर्गत्य लतामण्डपाद्विलोकयन्ती विकचकेतकीगर्भपत्रपाण्डुरं रजःसङ्घातं नातिदवीयसि सम्मुखमापतन्तमपश्यत् । क्रमेण च सामीप्योपजा-

वाष्टपुष्पिका । तत्र प्रभृतिगन्धप्रधानं पार्थिवमर्घस्नानादिकं रसप्रधानमाप्यं । प्रदीपाभरणप्रभादिरूपप्रधानं तैजसं । अनुलेपनप्रभृतिस्पर्शप्रधानं वायवीयं । सुषिरातोद्यगीतादिकं शब्दप्रधानमाकाशीयं । अनुध्यानं मानसं । अस्ति सर्वत्रैवेश्वर इति निश्चयो बौद्धं । अहमेवेश्वर इत्याहङ्कारिकं । यद्वा । आसनवर्गप्रभृतिष्वष्टसु प्रत्येकमष्टपुष्पिका । अतिशेतुमभिभवितुमिच्छता अतिशिशयिषमाणेन । स्वादिम्ना मृष्टत्वेन । शरीरस्थितिमिति न त्वातृप्तिभोजनं । अन्ये त्वुरस्मिन्नहनि । यामः प्रहरः । नक्तन्दिनशब्देन तत्कालानुवर्तनीयं कर्मैव लक्ष्यते । गम्भीरश्चिरकालस्थितः । तारतरो दूरदेशश्रूयमाणः । हेषितमश्वशब्दः । तद्रूपो ह्रादो ध्वनिस्तं । क्रमेणेत्यादावश्ववृन्दं सन्ददर्शेति सम्बन्धः । शफरा मत्स्याः । तदुद्गवत्तैश्च धूसरे । प्रलम्बेत्यादिना

१. प्रतिष्ठित K. K1. K2. T. Jambû ed. २ पञ्चब्रह्मेति । ईशानः सद्योजातो वामदेवोघोरस्तत्पुरुष इति पञ्चब्रह्माणः C3. ३. जल° marginally noted in A. ४. अष्टावपि K. K1. K2. T. Jambû ed. ५. अष्टपुष्पिकाम् । पार्थिवाप्यतैजसवायवीयाकाशीयमानसबौद्धाहङ्कारिकाण्यष्टौ पुष्पाणि । अष्टासु मूर्तिषु चैककं पुष्पम् C3. ६. K. K1. K2. T. Jambû ed. omit च. ७. K. K1. K2. T. Jambû ed. omit लता. ८. पल्लवास्तरणा D. C3. पल्लवास्तरणेति । पल्लवशयनेति मुख्यः पाठः C3. ९. एवमतिक्रामत्सु K. K1. K2. T. Jambû ed. १०. K. K1. K2. T. Jambu ed. omit कदाचित् °मात्रोद्गते च K. K1. K2. T. Jambû ed. ११. गम्भीरतारं A. B. १२. उपजात° K. K1. K2. T. Jambû ed.

यमानाभिव्यक्ति तस्मिन्महति शफरोद्धरधूसरे रजसि पयसीव मकरचक्रं प्लवमानं पुरः प्रधावमानेन प्रलम्बकुटिलकचपल्लवघटितललाटजूटकेन धवलदन्तपत्रिकाद्युतिहसितकपोलभित्तिनापिनद्धकृष्णागुरुपङ्ककल्कच्छुरणकृष्णशबलकाषायकञ्चुकेनोत्तरीयकृतशिरोवेष्टनेन वामप्रकोष्ठनिविष्टस्पष्टहाटककटकेन द्विगुणपट्टपट्टिकागाढग्रन्थिग्रथितासिधेनुना संततव्यायामकृतकर्कशशरीरेण वातहरिणयूथेनेव मुहुर्मुहुः खमुड्डीयमानेन लङ्घितसमविषमावटविटपेन कोणधारिणा च कृपाणपाणिना च सेवागृहीतविविधवनकुसुमफलमूलपर्णेन चल चल याहि याह्यपसर्पापसर्प पुरः प्रयच्छ पन्थानमित्यनवरतकृतकलकलेन युवप्रायेण सहस्रमात्रेण पदातिजनेन सनाथमश्ववृन्दं ददर्श ॥

मध्ये च तस्य सार्धचन्द्रेण मुक्ताफलजालिना विविधरत्नखण्डखचितेन शङ्खक्षीरफेनपिण्डपाण्डुरेण क्षीरोदेनेव स्वयं लक्ष्मीं दातुमागतेन

सज्जत्वमुक्तं । कचाः केशाः सौकुमार्यात्पल्लवानीव । घटितललाटजूटता दाक्षिणात्येषु वेशः। दन्तपत्रिका कर्णाभरणभेदः । पिनद्धो बद्धः । कृष्णागुरुणः पङ्को निर्घृष्टं कृष्णागुरुः। तस्य शुष्कस्य सतः कल्कः चूर्णं तच्छुरणात्कृष्णेन गुणेन शबलं कषायं साधिवासितं । कञ्चुकं वारबाणं यस्य। उत्तरीयेत्यादिना । सन्नद्धतां वर्मादिप्रसङ्गं चाह । वामेत्यनेनाभमिस्वभवावर्णनाशङ्कवारिता चोक्ता । प्रकोष्ठमन्तरं विद्यादरत्निमणिबन्धयोः । हाटकं स्वर्णं । यदेव द्विगुणात एव गाढग्रन्थिसहत्वं । ग्रथितात्रिस्रंसिनी । असिधेनुश्छुरिका । वातहरिणो ये वाताभिमुखं धावन्ति । अवट उन्मार्गः । कोणो लगुडः । मध्य इत्यादौ । तस्य च मध्येऽष्टादशवर्षदेशीयं युवानमद्राक्षीदिति सम्ब-

---

१. °ललाटतटजूटकेन K. K1. K2. T. Jambû ed. २. °कल्प° A. पङ्ककल्केति। पङ्क एव कल्कः कथितरागद्रव्यमित्यर्थः C3. ३. अनवरतव्या° K. K1. K2. T. Jambû ed. ४. °कृश° K. K1. K2. Jambû ed. ५. K1. K2. T. Jambû ed. omit च. ६. पदातिबलेन K. K1. K2. T. Jambû ed. ७ K. K1. K2. T. Jambû ed. omit पिण्ड. ८. शुष्कस्य C1. C2. ९. चूर्णः C1 C3.

गगनगतेनातपत्रेण [1]कृतच्छायं । अथाच्छेनाभरण[2]दीधितीनां निवहेन दि-
शामिव दर्शनानुरागलग्नेन चक्रवालेनानु[3]बध्यमानं नितम्बावलम्बिन्या-
मालतीशेखरस्रजा सकलभुवनविजयार्जितया रूपपताकयेव विराज-
मानम् । उत्सार्पिभिः [4]शिखण्ड[5]गण्डिकापद्मरागमणेररुणै[6]रंशुजालकैरदृश्य-
मानवनदेवताविधृतैर्बालपल्लवैरिव प्रमृज्यमानमार्गरेणु[7]रूषितपरुषवपुषं ।
[8]बकुलमण्डलीमुण्डमालामण्डनमनोहरेण कुटिलकुन्तलस्तवकमालिना
[9]मौलिना [10]मीलितातपं पिबन्तमिव दिवसम् । पशुपति[11]जटामुकुटमृगाङ्क-
द्वितीयशकलघटितस्येव [12]सहजलक्ष्मीसमालिङ्गितस्य ललाटपट्टस्य मनः-
शिलापङ्कपिङ्गलेन लावण्येन लिम्पन्तमिवान्तरिक्षम् । अभिनवयौवना-
रम्भाव[13]ष्टम्भप्रगल्भदृष्टिपाततृणीकृतत्रिभुवनस्य चक्षुषः प्रथिम्ना वि-
कचकुमुदवलयकमलसरःसहस्रसञ्छादितदशदिशं शरदमिव प्रवर्त-
यन्तम् । [14]आननदीसीमान्तसेतुबन्धेन ललाटशशिमणिशिलातलग-

न्धः । क्षीरोदस्याप्यर्धचन्द्रादि सर्वं योज्यं । छाया कान्तिरपि । चक्रवा-
लेन समूहेन । नितम्बशब्दो मुख्यार्थः पश्चान्नितम्बः स्त्रीकट्या इत्यर्थः ।
[15]शिखण्डश्चूडाभरणं । प्रमृज्यमानेति वर्तमानकालोऽत्र विवक्षितः । बकु-
लेत्यादिना निपीयमानातपतुल्यवस्तुनिर्देशः । कुन्तलः केशहस्तः स एव
स्तबकः । पुष्पस्तवकः पुष्पसङ्घातः । सहजाकृत्रिमा सहोत्पन्ना च । लक्ष्मीः
शोभना श्रीश्च । लावण्यमत्र कान्तिः । अवष्टम्भो गर्वः । द्राघीयसा दीर्घ-

---

१. कृतच्छायमच्छेना° K. K1. K2. T Jambû ed. २. द्युतीनां K K1. K2. T. Jambû ed. ३. °अनुगम्यमानमानितम्बाविलम्बिन्या K. K1. K2. T. Jambû ed. ४. शिखण्डचूडाभरणगण्डिका. A. B. शिखण्डखण्डिका K. K1. K2. T. Jambû ed. शिखण्डेति । चूडेत्यर्थः C3. ५ गण्डिकेति । जतुबद्धो मन्त्रः C3. ६. अंशुकजालैर° K. K1. K2. T. Jambû ed. ७. K. K1 K2. T. Jambû ed. omit रूषित. ८. बकुलकुड्मलमण्डली K. K1. K2. T. Jambû ed. ९. K. K1. K2. T. Jambû ed. omit मौलिना. १०. मालिता B. K1. K2. ११. जटाजूटमुकुट marginally noted in A १२. सहजेति । स्वाभाविकी सहोत्पन्ना चेत्यर्थः C3. १३. A. B T. omit अवष्टम्भ° १४. आयतनयननदी °K. K1. K2. Jambû ed. प्रवर्तयन्तायतनयननदी° B. १५ शिखण्डखण्डिका चूडाभरणं C1. C2.

लितेन कान्तिसलिलस्रोतसेव[1] द्राघीयसा नासा[2]वंशेन शोभमानम् । अं[3]तिसुरभिसहकारकर्पूर[4]कक्कोल[5]कलवङ्ग[6]पारिजातकपरिमलमुचा मत्तमधुकरकुलकोलाहलमुखरेण मुखेन सनन्दनवनं वसन्त[7]मिवावतारयन्तम् । आसन्नसुहृत्परिहासभावनोत्तानितमुखमुग्धहसितैर्दशनज्योत्स्नास्नपितदिङ्मुखैः पुनः पुनर्नभसि सञ्चारिणं चन्द्रालोकमिव कल्पयन्तम् । कदम्बमुकुलस्थूलमुक्ताफलयुगलमध्याध्यासितमरकतस्य त्रिकण्टक[8]कर्णाभरणस्य प्रेङ्खतः प्रभया समुत्सर्पन्त्या कृतसकुसुमहरितकुन्दपल्लवकर्णावतंसमिवोपलक्ष्यमाणमामोदि[9]मृगमदपङ्कलिखितपत्रभङ्गभास्वरं भुजयुगलमुद्दाममकराक्रान्तशिखरमिव मकर[10]केतोः केतुदण्डद्वयं दधानम् । धवलब्रह्मसूत्रसीमन्तितं सागरमथनसामर्षगङ्गास्रोतः सन्दानित[11]मिव मन्दरं देहमुद्वहन्तं कर्पूरक्षोदमुष्टि[12]च्छुरण[13]पांसुलेन कान्त[14]कुचचक्रवाकयुगलविपुलपुलिने[15]नोरःस्थलेन स्थूल[16]भुजायामपुञ्जितं पुन[17]र्विस्तारयन्तमि-

तरेण । सहाकरः सुगन्धद्रव्यभेदः सहकारफलेनैव क्रियते । पारिजातकोनेकद्रव्यसंस्कृतो मुखवासविशेषो देववृक्षश्च । वसन्तश्चैवं विधेनैव मुखेन प्रारम्भेणोपलक्षितो भवति । रत्नत्रितयेन कृतं त्रिकोणकण्टकाख्यं कर्णाभरणं । मृगमदः कस्तूरिका । सन्दानितं बद्धं वेष्टितमित्यर्थः । कुचावत्र कान्तासम्बन्धिनावेव चक्रवाकयुगलं तस्य कृते पुलिन-

---

१ °स्रोतसेव A. B. २ घोणावंशेन K. K1. K2. T. Jambû ed. ३. सुरभिसहकारेत्यादि । अपरिणतसहकारफलसुखरसनिष्पादितं सुगन्धिद्रव्यं । सुगन्धिद्रव्यसहितो मुखवासः । अन्यत्र सर्वे तरवः C3. ४. कर्पूरेति । रसेत्यर्थः C3. ५. कक्कोल K. K1. K2. T. Jambû ed. ५. कक्कोलकेति । फलेत्यर्थः C3. ६. लवङ्गेति । पुष्पेत्यर्थः C3. ७. वसन्तमिव वसन्तं K. K1. K2. T. Jambû ed. ८. त्रिकण्टकेति । त्रीणि कण्टकानि सुवर्णतन्तवो मुक्ता युक्ता यस्य तत्त्रिकण्टकं C3. ९. आमोदितमृग° K. .K1. K2. T. Jambû ed. १०. मकरकेतुकेतु° K. K1. K2. T. Jambû ed. ११. सन्दानितम् । वेष्टितं । न तु बद्धितमित्यर्थः C3. १२. K. K1 K2. T. Jambû ed. omit मुष्टि. १३. पांसुलेनेव K. K1. K2. T. Jambû ed. पांशुलेन A. B. १४. कान्तोच्चकुच° K. K1. K2. T. Jambû ed. १५. पुलिनेन । पांसुलेन C3. १६. स्थूलेन स्थूलभुजा° K. B. १७.पुन र्वि° K. K1. K2. T. Jambu ed.

व दिक्चक्रम् । पुरस्तादीषदधो नाभिनिहितैककोणकमनीयेन पृष्ठतः कक्षाधिकक्षिप्तपल्लवेनोभयतः संश्चलनप्रकटितोरुत्रिभागेन हारीतहरिते-न निविडनिपीडितेनाधरवाससा विभज्यमानतनुतरमध्यभागम् । अन-वरतश्रमोपचितमांसबंधविकटमकरमुखमग्नजानुभ्यामतिविशालवक्षः स्थलोपलवेदिकोत्तम्भनशिलास्तम्भाभ्यां चारुचन्दनस्थासकस्थूलतर-कान्तिभ्यामूरुदण्डाभ्यामुपहसन्तमिवैरावतकरायामम् । अतिभरितोरु-भागभारवहनखेदेनेव तनुतरजङ्घाकाण्डम् । कल्पपादपपल्लवस्येव पाट-लस्योभयपार्श्वविलम्बिनः पादद्वयस्य दोलायमानैर्नखमयूखैरश्वमण्ड-नचामरमालामिव रचयन्तम् । अभिमुखमुच्चैरुच्चमुदञ्चद्भिरतिचिरमु-

सदृशं । कोणः पल्लवः । पृष्ठतः पश्चात् । भागे कक्ष्यायाः परित्वलनादधिक-श्रुतिरित्युक्तः । क्षिप्तोलम्बमानः पल्लवो यस्य तत् । सञ्चलनं सङ्कोचनम् । हारीतः पक्षिभेदः । हरितानीलेन । मकरमुखं जानुनोरुपरिभागः । उत्त-म्भनं धारणं । स्थासकश्चन्द्रकः । आयामो दैर्घ्यं । न केवलमायामं शुक्लत्व-मप्युपहसन्तं । धर्मयोरेकनिर्देशोन्यसंवित्साहचर्यात् । अतिभरितोरुभारव-हनेनेति पाठः । ऊरू एवभारः । प्रशस्ता जङ्घा जङ्घाकाण्डं । कल्पपा-दपसम्बन्धितया न केवलं लौहित्यं सौकुमार्यमुच्यते । यावत्सकलसम्पत्फ-

---

१. कक्ष्या° K. K1. K2. T. Jambû ed. कक्षेत्यादि । कक्षायाः परिवलनाद-धिकोतिरिक्तः क्षिप्तो विलम्बितः पल्लवः प्रान्तो यस्य तेनेति समुदितार्थः C3. २. संवलन° A. K. K1. K2. T. C1. C2. Jambû ed ३. हारीतहरिता K. K1. K2. T. Jambû ed, हारीतेति । पक्षिविशेषेत्यर्थ. C3. ४. विभिद्यमान° D. ५. °मांसक-ठिनविकट° K. K1. K2. T. Jambû ed. ६. °मुखसंलग्नजानु° K. K1. K2. T. Jambû ed. ७. K. K1 K2. T. Jambû ed. omit अति. ८. स्थूलकान्ति° K. K1. K2. T. Jambû ed. ९. अभिभरितो° D. अतिभरितोरुभागभर° K. K1. K2. T. Jambû ed. १०. पल्लवद्वयस्य K. K1. K2. T. Jambû ed. ११. पार्श्वा-वलम्बिनः B. K. K1. K2. T. Jambû ed. १२. अभिमुखमुच्चैरुरश्चद्भिः K. K1. K2. T. Jambû ed.

परिविभ्राम्यद्भिरिव [1]वलनविकटं पतद्भिः खुरैः खण्डितभुवि प्रतिक्षणद[2]-शनग्रहमुक्तिखणखणायितखरखलीने [3]दीर्घघ्राणालीनला[4]लिके ललाटपट्टलुठितचारुचामीकरचक्रके शिञ्जानशातकु[5]म्भायानशोभिनि [6]मनोरंहसि गोलाङ्गूलकपोलकालकाय[7]रोम्णि नीलसिन्दुवारवर्णे वाजिनि महति-समारूढम् । उभयतः पर्याणपट्टश्लिष्टहस्ताभ्यामासन्नपरिचारकाभ्यां दोधूयमानधवलचामरिकायुगलमग्रतः पठतो बन्दिनः सुभाषितमुत्कण्टकितकपोलफलकेन लग्नकर्णोत्पलकेसरपक्ष्मशकलेनेव मुखशशिना-भावयन्तमनङ्गयुगावतारमिव दर्शयन्तं चन्द्रमयीमिव सृष्टिमुत्पादयन्तम्। विलासप्रायमिव जीवलोकं जनयन्तमनुरागमयमिव [8]सर्गान्तरमारचयन्तं शृङ्गारमयमिव दिवसमापादयन्तम् । [9]रागराज्यमिव प्रवर्तयन्तमाकर्षाञ्जनमिव [10]चक्षुषोर्वशीकरणमन्त्रमिव मनसः स्वस्थावेशचूर्णमिवेन्द्रि-

लप्रदत्वादिप्रकर्षान्तरम् । अतिचिरमित्यादिनानाकुलत्वमुच्यते । यदुक्तं । आवृत्ता कञ्चिता स्थूलदलपाल्यग्रसंस्थिता: । विवर्ज्यश्चाकुलपदन्यासेन गमनेन चेति । विकटं चित्रं । खुरैरिति तद्व्यापारवैचित्र्याद्बहुत्वमग्रिमयोरेव । एवं त्रिधसन्निवेशसम्भवात् । खलीनं कविका । लालिका कविकाशेखरं । [11]आयानं हयमण्डनमाला । गोलाङ्गूलः कृष्णमुखो वानरः । नीलेत्यादौ कुमुदकुन्दमृणालगौर इत्यादिवन्न पौनरुक्त्यं । महतीति । उक्तं च । सर्वलक्षणहीनोपि महाकायः प्रशस्यत इति । आसन्नेत्यनेन विश्वसनीयत्वमुक्तं । [12]अनङ्गयुगेति । अनङ्गजन्मना यदुपलक्षितं युगं कालविशेषस्तस्य नूतनमदनसादृश्यात् । यद्वा । अनङ्गयोर्युगं तदवतारमिव द्वित्वसंख्यापूर्वकत्वात् । चन्द्रमयीमिवेति कान्तिमयत्वेन । आकर्षणाञ्जनं वशीकरणार्थं कज्जलं । अ-

---

१. वलित° K. $K_1$. $K_2$. T. Jambû ed. २. दशनविमुक्तखण° K. $K_1$ $K_2$. T. Jambû ed. ३ दीर्घघ्राणलीनलालिकललाटलुलित° K. $K_1$. $K_2$. T. Jambû ed. ४. लालिकेति । लालिका खलीनं $C_3$. ५. कौम्भजयनशोभिनि K. $K_1$. $K_2$. T. Jambû ed. आयानोर्मि । वाजिभूषणेत्यर्थः $C_3$. ६. मनोरंहसि । मनोवेगे $C_3$. ७. °लोम्नि K. $K_1$. $K_2$. T. Jambû ed. ८. $K_1$. $K_2$. T. Jambû ed. omit सर्गान्तरम्—आकर्षाञ्जनमिव. ९ रागज्वरमिव marginally noted in A. १०. चक्षुषः A.B. ११. जयनं $C_1$. १२. अनङ्गयुगेति । अनङ्गजन्मना यदुपलक्षितं युगं कालभेदः अनङ्गयोर्द्वयं वेत्यर्थः $C_3$

याणाम् । असन्तोषमिव कौतुकस्य सिद्ध[1]योगमिव सौभाग्यस्य । पुनर्जन्मदिवसमिव मन्मथस्य रसायनमिव यौवनस्यैकराज्यमिव रामणीयकस्य कीर्तिस्तम्भमिव रूपस्य मूलकोशमिव लावण्यस्य पुण्यकर्मपरिणाममिव संसारस्य । प्रथमाङ्कुरमिव का[2]न्तेः सर्गाभ्यासफलमिव प्रजापतेः । प्रतापमिव विभ्रमस्य यशःप्रवाहमिव वैदग्ध्यस्याष्टादशवर्षदेशीयं युवानमद्राक्षीत् ॥

पार्श्वे च तस्य द्वितीयम[3]परसंसक्ततुरङ्गं प्रांशुमुत्तप्ततपनीयस्तं[4]भावदातं परिणतवयसमपि व्यायामकठिनकायं नीचनखश्म[5]श्रुकेशं शुक्तिखलतिमीषत्तुन्दिलं रोमशोरः स्थलमनुल्बणोदा[6]रवेषतया ज[7]राम पि विनयमिव शिक्षयन्तं गुणानपि गरिमाणमिवानयन्तं महानुभावता-

सन्तोषमिवेति । यस्यैनं प्राप्य कौतुकं न निवर्तते तस्य सन्तोष एव नास्ति केषां[8]श्चिदेव द्रव्याणां सम्बन्धी यो न कदाचित्कार्यं व्यभिचरति स सिद्धयोगः। सौभाग्यं तावत्सर्वं किञ्चन वशीकुरुत एवं चास्य तदेव सिद्धयोग इव तदा श्रयणेन निःशेषलोकवशीकरणक्षमत्वं । जन्मदिवसमिति । तद्गोचरपतितानां कामोत्पत्तेः । रसायनमिवेति । यथा रसायनवशात्कश्चित्परिपूर्णश्च स्थिरश्च भवति तद्वदेतदाश्रयेण यौवनं । ईषदसमाप्तोऽष्टादशवर्षोऽष्टादशवर्षदेशीयः । तं न परेण संश्लिष्टस्तुरङ्गो यस्य तं । दधीचस्य तु पर्याणश्लिष्टाद्युक्तं । परिणतवयस्त्वेन सत्यवादिना । सावित्री सरस्वत्यौ प्रति च विस्रम्भकारित्वमुच्यते । अन्यथोपक्रम एव सम्भाषणमात्रं न प्रवर्तते । शुक्तिखलतिं शु[9]क्त्याकारखल्वाटं । तुन्दिलं लम्बोदरं । अत एव विकुक्षिरिति नाम । अनुल्बणोऽनुद्धतः । उदारः श्रेष्ठः । जराममिति जरा किल सर्वं विनयं शिक्षयति । महानुभावता महा-

१. सिद्धयोगमिति । केषाञ्चिद्द्रव्याणां सम्बन्धो यो न कार्यं कदाचिद्व्यभिचरति C3. २. कान्तिलतायाः K. K1. K2. T. Jambû ed. ३. अपरसंसक्तेति । न परेण संश्लिष्टस्तुरगो यस्य । दधीचस्य तु पर्याणश्लिष्टहस्ताभ्यामित्युक्तम् C3. ४. °स्तम्भाकारं K. K1. K2. T. Jambû ed. ५. °श्मश्रुकश्च शुक्ति° K. K1. K2. T. Jambû ed. ६. °उदारवेशतया K. K1. K2. T. Jambu ed. ७. जरामिव K. K1. ८. केषाश्चिदत्र C1. ९. शुक्त्याकार° C1. C2.

मपि शिष्यतामिव नयन्तम्[1]। आचारस्योप्याचार्यकमिव[2] कुर्वाणं वलक्षवारबाणधारिणं धौतदुकूल[3]पट्टिकापरिवेष्टितमौलिं पुरुषम्॥

अथ स युवा पुरोयायिनां यथा दर्शनप्रतिनिवृत्त्यातिविस्मितमनसां[4] कथयतां पदातीनां सकाशादुपलभ्य दिव्याकृतितत्कन्यकायुगल[5]मुपजात-कुतूहलः प्रतूर्णतुरगो दिदृक्षुस्तं लतामण्डपोद्देशमाजगाम। दूरादेव च तुरगादवततार। निवारितपरिजनश्च तेन द्वितीयेन साधुना सह चरणाभ्यामेव स विनयमुपससर्प कृतोपसंग्रहणौ च तौ सावित्री समं सरस्वत्या किशलया[6]सनदानादिना सकुसुमफलार्घावसानेन वनवासोचितेनातिथ्येन यथाक्रममुपजग्राह। आसीनयोश्च तयोरासीना[7] नातिचिरमिव-स्थित्वा तं द्वितीयं प्रवयसमुद्दिश्यावादीत्। आर्य सहजलज्जाधनस्य हि प्रमदाजनस्य प्रथमाभिभाषण[8]मशालीनता विशेषतो वनमृगीमुग्धस्य कुमारीजनस्य[9] केवलमियमालोकनकृतार्थाय चक्षुषे स्पृहयन्ती प्रेर-

शयता। अनुभावयति कार्यमकार्यं वा बोधयतीत्यनुभावः। शिष्यतामिति परशासनदक्षकर्म महानुभावतया तत एवात्रसीयत इत्युक्तं भवति। आचारः शास्त्रकारप्रदर्शिता विशिष्टा नीतिः। स च सर्वस्मिन्नाचार्यकमवलम्बते। संस्कारातिशयमापादयतीत्यर्थः। वलक्षः शुक्लः। वारबाणः कञ्चुकः। मौलयः[10] केशाः। अथेति। न तु गतागतिकतया सर्वचेतनाभिप्रायेण सौन्दर्यमेतयोरभिव्यज्यते। प्रतीत्य न पुनः प्रसङ्गत उपेत्य। कन्यकास्वादेतन्नानुचितं। प्रतूर्णो वेगगामी। साधुना विनीतेन। उपसंग्रहणं धीराः कथयन्त्यभिवादनं। आतिथ्यमेवोपजग्राहापूजयत्। प्रवयाः स्यात्परिणतः। अशालीनता धृष्टता। वनशब्देन मृगीसामान्येपि जनसम्पर्काद्यभावमाह। उपा-

---

१. आनयन्तं K. K1. K2. T. Jambû ed. २. आचारस्याचार्यकमिव K. K1. K2. T. Jambû ed. ३. दुगूल K. K1. K2. T. Jambû ed. ४. दर्शनं प्रतिनिवृत्त्य विस्मित° K. K1. K2. T. Jambû ed. °प्रतिनिवृत्य विस्मित° D. ५. कन्यायुग° K. K1. K2. T. Jambû ed. ६. किसल° K. K1.K2. T. Jambû ed. ७. आसीनयोस्तयोश्चासीना K. K1. K2. T. Jambû ed. ८. प्रथमाभिभाषणम्—कुमारीजनस्य- wanting in A. B. ९. कुलकुमारीजनस्य K. K1. K2. T. Jambû ed. १०. मौलेयाः C1. C2. Jambû ed.

यत्युदन्तश्रवणकुतूहलिनी श्रोत्रवृत्तिः । [1]प्रथमे दर्शने चोपायनमिवोपनयति सज्जनः प्रणयमप्रगल्भमपि जनं प्रभवता प्रश्रयेणार्पितं मनोमण्विव वाचालयत्य[2]यत्नेनैवातिनम्रे साधौ धनुषीव गुणः परां कटिमा[3]रोहति विश्रम्भो जनयन्ति च विस्मयमतिधीरधियामप्यदृष्टपूर्वा दृश्यमाना जगति स्रष्टुः [4]सृष्ट्यतिशयाः । यतस्त्रिभुवनाभिभावि रूपमिदमस्य महानुभावस्य सौजन्यपरतन्त्रा चेयं देवानां प्रियस्यातिभद्रता कारयति कथां [5]न युवतिजनसहोत्था तरलता । [6]तत्कथय कतमोनेनपुण्यभागागमनेन विजृम्भितविरहव्यथः शून्यतां नीतोदेशः । क्व वा गन्तव्यं [7]कस्य वायमपहृतहरहुङ्कारोहङ्कारोपर इवानन्यजो युवा । किं [8]नाम्नो वा समृद्धतपसः पितुरयममृतवर्षो कौस्तुभमणिरिव हरेर्हृ-

यनं ढौकनिका । उपनयति ढौकयति । अप्रगल्भमित्यादि मनः कर्तृ । अप्रगल्भमपि जनं वाचालयति । कीदृशं प्रभवता स्वामिना प्रश्रयेण प्रत्यर्पितं दत्तमेवं विधमस्मदीयं युष्मासु मन इति बहिः प्रकाशितं यश्च परतश्च केनापि प्रभावशीलेन ढौकितं मध्वप्रगल्भमपि जनं कुलयोषित्प्रायं वाचालयति किञ्चन जल्पयति । अत्रापि प्रश्रयेणेति साभिप्रायं । तथा च । अन्ययान्यवनितागतचित्तं चित्तनाथमभिशङ्कितवत्या पीतभूरिसुरयापि [9]न मेदे निर्वृतिर्हि मनसो [10]मदहेतुरित्युक्तं । नम्रे प्रह्वे कुब्जे च । गुणो विनयादिर्ज्या च । कोटिः प्रकर्षो धनुः शिखा च । देवानां प्रियस्येति पूजावचनं । षष्ठ्या अलुगत्रागमनेत्यादिना ब्रह्मोक्तशापबुद्ध्या । दधीचस्य तद्भर्तृयोग्यतया कतम इति देशोत्कर्षकुलादिकं पृच्छति । कस्येति देवस्य ।

---

१. प्रथमदर्शने—उपनयन्ति सज्जनाः K K1. K2. T. Jambû ed २. अयत्नेनैव चातिनम्रे K. K1. K2. T. Jambû ed. ३. आरोपयति विस्रम्भः K. K1 K2. T. Jambû ed. ४. विसृष्ट्यातिशयाः K K1. K2. T. Jambû ed. ५. न तु युवतिजने K. K1. K2. T. Jambû ed. ६. तत्कथयागमनेनापुण्यभाक्तमो विजृम्भित° K. K1. K2. T. Jambû ed. ७. को वायमपहृतहरहुङ्काराहङ्कारो° A. B. D. ८. नाम्नः समृद्ध K. K1, K2. Jambû ed. ९. न मोदे C1. C2. Jambû ed. १०. मदहेतोरित्युक्तं C1. C2. Jambû ed.

दयमाह्लादयति। का वास्य त्रिभुवननमस्या विभातसन्ध्येव महतस्तेजसो जननी। कानि वास्य पुण्यभाञ्जि भजन्त्यभिख्यामक्षराणि। आर्य परिज्ञानेप्ययमेव क्रमः कौतुकानुरोधिनो हृदयस्येत्युक्तवत्यां तस्यामसौ प्रकटितप्रश्रयः प्रतिव्याजहार॥

आयुष्मति सतां हि प्रियं वदताकुलविद्या। न केवलमाननं हृदयमपि ते चन्द्रमयमिव सुधाशीकरशीतलैराल्हादयति वचोभिः। सौजन्यजन्मभूमयो भूयसा शुभेन सज्जननिर्माणशिल्पकला इव भवादृश्यो दृश्यन्ते। दूरे तावदन्योन्यस्याभिलपनमभिजातैः सह दृशोपि मिश्रीकृता महतीं भूमिमारोपयन्ति प्रणयम्। श्रुयतामेष खलु भूषणं भार्गववंशस्य भगवतो भूर्भुवः स्वस्त्रितयतिलकस्यादभ्रप्रभावस्तम्भितजम्भारिभुजस्त-

सिद्धा देवाः। अनन्यजः कामः। महतस्तेजस इति महश्च तेजः सूर्याख्यं। अभिख्या नाम। अयमेव क्रम इति यथास्योत्पत्त्यादिकं तद्वद्भवतोपीत्यर्थः। कला उपायः। भुरिति रेफान्तो भूवाची भुव इति रेफान्तः पातालवाची भूश्च भुवश्च स्वश्च भूर्भुवः स्वरेषां त्रयमिति समासः। अदभ्रोनल्पः। जम्भारिरिन्द्रः। सह्यश्विभ्यां यज्ञभागभुजौ कुर्वावामिति चिरं प्रार्थितस्तथेति प्रतिपद्य ताभ्यां भागं दददिन्द्रेणोद्यतवज्रेण रोषितस्ततस्तेनास्य स वज्रः स्तम्भितो भुज इति।

१. चास्य K. K1. K2 T. Jambû ed. २. प्रभात° K. T. Jambû ed. ३. जननी जननी A. ४. अभिक्षाम° A.B. अभिक्षां नाक्षराणि marginally corrected in A. ५. परिज्ञाने° A. B. ६. तस्यां प्रकटितप्रश्रयोसौ प्रत्ति° K2. Jambû ed. ७. प्रश्रयेति। प्रीतीत्यर्थः C3. ८. अपि च K. K1. K2. T. Jambû ed. ९. आनन्दयति K1. K2. Jambû ed. १०. K. K1. K2 T. Jambû ed. omit इव. ११. जायन्ते K. T. Jambû ed. १२. आलापनं K. K1. K2. T. Jambû ed. १३. °भूता K K1. K2. Jambû ed. १४. K. K1. K2. T. Jambû ed. omit प्रणयं. १५. श्रूयतामयं K. K1. K2. Jambû ed. सूयतां A. १६. भूर्भुवः स्वरिति। भूरिति रेफान्तमव्ययं भूमिवाचि। भुवरि यव्ययं पातालवाचि। स्वरित्यव्ययं स्वर्गवाचि C3. १७. अदभ्रेति। प्रभूतेत्यर्थः C3. १८. जम्भारिभुजस्तम्भस्येति। कथा चात्र च्यवनो हि प्रार्थितः सन्नश्विभ्यां यज्ञभागभोगित्ववरं यच्छन्नुद्यतवज्रेणेन्द्रेण भाषितः। ततस्तेनास्य स वज्रो भुजस्तम्भित इति C3.

म्भस्य सुरासुरमुकुटमणिशिलाशयन[1]दुर्ललित[2]पादपङ्कजस्य निजतेजः प्रसरप्लुष्ट[3]पुलोम्नश्च्यवनस्य बहिर्वृत्तिजीवितं दधीचो नाम तनयः। [4]जनन्यप्यस्य जितजगतोऽनेकपार्थिवसहस्रानुयातस्य [5]शर्यातस्य सुता राजपुत्री त्रिभुवनकन्यारत्नं सुकन्या नाम। तां खलु देवीम[6]न्तर्वत्नीं विदित्वा [7]वैजनने मासि प्रसवाय पिता पत्युः पार्श्वात्स्वगृहम[8]नाययत। असूत सा तत्र देवी दीर्घायुषमेनम्। अवर्धता[9]नेहसा च तत्रैवायमानन्दितज्ञातिवर्गो बालकस्तारकाराज इव राजीवलोचनो राजगृहे। भर्तृभवनमागच्छन्त्यामपि दुहित[10]र्यासेचनकदर्शनममुं नामुञ्चन्मातामहो मनोविनोदनं न[11]प्तारम्। अशिक्षत चायं त[12]स्मिन्नेव सर्वा विद्याः सकलाश्च कलाः कालेन चोपारूढयौ[13]वनमालोक्याहमिवासावप्यनुभवतु मुखकमलावलोकनानन्दमस्येति मातामहः कथं कथमप्येनं पितुरन्तिकमधुना व्यसर्जयत्।

[14]दुर्ललितो लभ्यविषयः। प्लुष्टपुलोम्न इति। अनवरतं रुदत्यां दुहितरि कोपान्मात्रा गृहाण मामिति पुलोम्नो राक्षसस्योक्तं ततस्तां प्रतिगृह्य तत्रैव स्थापयित्वा क्वापि गते रक्षसि सा भृगुणा विवाहिता ततः सगर्भा सती पुलोम्नागत्यापह्रियमाणतया च्यवनं गर्भमत्याक्षीत्तेन चान्वर्थनाम्ना तद्रक्षो दृष्टैवादह्यत। अन्तर्वत्नीं गर्भिणीं। वैजनने मासि प्रसवमासे। दीर्घायुषमिति साभिप्रायं रूपकुलाद्युत्कर्षे वर्णिते सत्येतदेव वरगुणवर्णनमवशिष्यते। अनेहसा परिपूर्णेन कालेन। न जायते यत्र तृप्तिस्तदासेचनकं विदुः। नप्तारं पौत्रं। साभिसरं ससहायं।

---

१. दुर्ललितेति। सदा रुदती दुहितरं कोपान्मात्रार्पितां प्रतिगृह्य तत्रैव स्थापयित्वा च पुलोमा राक्षसः क्वापि ययौ। ततः सा भृगुणा विवाहिता। सगर्भा सती तेनागन्त्यापह्रियमाणाभयाच्च्यवमानं गर्भमत्याक्षीत्। तेन चान्वर्थनाम्ना दृष्ट्वैव स राक्षसो दग्ध इत्यत्र कथा C3. २. पङ्केरुहस्य K2. T. Jambû ed. ३. पुलोम्न इति। सहेवाक C3. ४. जनन्यस्य K. K1. K2 T. Jambû ed. ५. सर्यातस्य A. B. ६. अन्तर्वत्नीं। गुर्विणीम् C3 ७. वैजनने। विजननो दशमो मासो यत्र नारी प्रसूते C3. ८. अनाययत् K. K1. K2. T. Jambû ed. ९. A. B. omit अनेहसा. १०. मातरि° A. B. D. K. T. मातरि सुचनक° marginally noted in A. दुहितरि नासेचनकदर्शनमिममुञ्चन् K1. K2. Jambû ed. आसननकेति। तदासेचनकं यस्य दर्शनान्न तृप्यतीति श्रीहेमसूरिः C3. ११. नप्तार। दौहित्रस्तत्सुतो नप्ता स च पौत्रश्च कथ्यते C3. १२. तत्रैव K. K1. K2. T. Jambû ed. १३. यौवनमिममा° K. K1. K2. T. Jambû ed. १४. दुर्ललितः सहेवाकः C2.

मामपि [1]तस्यैव देवस्य सुगृहीतनाम्नः शर्यातस्याज्ञाका[2]रकं विकुक्षिनामानं भृत्यपरमाणुमवधारयतु भवती पितुः पादमू[3]लेयान्तं च मया सा[4]भिसरमियमकरोत्स्वामी । तद्धि नः कुलक्रमागतं राजकुलमुत्तमानां च चिरन्तनता जनयत्यनुजीविन्यपि जने कियन्मात्रमपि मन्दाक्षम् । अक्षीणः खलु दाक्षिण्यकोशो महतामितश्च गव्यूतिमा[5]त्रमिव पारे शोणं तस्य भगवतश्च्यवनस्य स्व[6]नाम्ना निर्मितव्यपदेशं च्यावनं नाम चैत्ररथकल्पं कानन निवासस्तदव[7]धिरेवेयं नौ[8] यात्रा यदि च वो गृहीतक्षणं दाक्षिण्यमनवहेलं वा हृदयमस्माकमुपरि भूमिर्वा प्रसादानामयं जनः श्रवणार्हो वा । ततो न विमाननीयोयं नः प्रथमः प्रणयः कुतूहलस्य । वयमपि शुश्रूषवो वृत्तान्तमायुष्मत्योः । नेयमाकृतिर्दिव्यतां व्यभिचरति । गोत्रनामनी तु श्रोतुमभिलषति नौ[9] हृदयम् । तत्कथय कतमो [10]वंशः स्पृहणीयतां [11]भवत्योर्जन्मनानीतः । का[12]चेयं तत्र भवती भवत्योः समवाय इव विरोधिनां पदार्थानाम् । तथा हि [13]संनिहितबालान्धकारा भा[14]स्वन्मूर्तिश्च [15]पुण्डरीकमुखी [16]हरिणलोचना च बा[17]लातपप्रभाधारा कु[18]मुद-

मन्दाक्षमुपरोधं । गव्यूतिः क्रोशद्वयं । यात्रा प्रस्थानं । समवाय एकत्रस्थितिः । बालेषु केशेषु । अन्धकारं तम इति यस्या बालं प्रत्ययं भास्वती मूर्तिमती भास्वत आदित्यस्य च मूर्तिः । न कदाचित्सन्निहितबालान्धकारा भवतीति विरोधः । पुण्डरीकं पद्मं सिंहश्च यस्या मुखं तत्र कथं हरिणस्य विलोचने स्त इति विरोधः । पयोधरौ स्तनौ मेघाश्च

---

१. तस्य K. K1. K2. T. Jambû ed. २. °कारिणं K. K1 K2. T Jambû ed. ३ मूलयान्तं K. K1. K2. T. Jambû ed. ४. साभिसार K. K1. K2 T. Jambû ed. C1. C2 साभिसरमिति । सहायवान्साभिसर इत्यमरः C3. ५. °मात्र इव A. B. ६. स्वनाम्नो D. ७. अवधिश्चेयं K. K1 K2. T. Jambû ed. ८. नो B. ९. नो हृदयं B १०. देशः K1. K2. T. Jambû ed. ११. K. K1. K2. T. Jambû ed. omit भवत्योः १२. चयमत्र भवती भवत्याः समीपे समवाय K. K1. K2. T. Jambû ed. भवत्याः D. १३. सनिहितेत्यादि । निकटं केशेषु तम इव श्यामत्वा-द्यस्याः C3. १४. भास्वन्मूर्तिः । भास्वरं च शरीर यस्याः। अथ च या रवेर्मूर्तिः सा कथं संनिहितप्रत्यग्रान्धकारेति विरोधः C3. १५. पुण्डरीकमुखी। शुक्लपद्मवन्मुखं यस्याः सा C3. १६. हरिणलोचना। हरिणनेत्र इव नेत्रे यस्याः सा । अथ च यस्याः सिंहमुख तस्याः कथं हरिणलोचन इति विरोधःC3. १७. बालातपेत्यादि । बालातपप्रभोरुणत्वादधरो यस्याः C3. १८. कुमुदहासिनी । कुमुदमिव विशदत्वाद्धासो यस्याः । अथ च बालातपप्रभां धारयति या सा कथं कुमुदानि विकासयतीति विरोधः C3.

हासिनी च मधुरहंसस्वना समुन्नतपयोधरा च। कमलकोमलकरा हिमगिरिशिलापृथुनितम्बा च। करभोरुविलम्बितगामिनी च। अमुक्तकुमारभावा स्निग्धतारका चेति॥

सा त्ववादीत्। आर्य श्रोष्यसि कालेन भूयसो दिवसानत्र स्थातुमभिलषति नौ हृदयमल्पीयांश्चायमध्वा परिचय एव प्रकटीकरिष्यति। आर्येण तु न विस्मरणीयोयमनुषङ्गदृष्टो जन इत्यभिधाय तूष्णीमभूत्। दधीचस्तु नवाम्भो भारगम्भीराम्भोधरध्वाननिभया भारत्या नर्तयन्नल-

पयोधराः। मधुरहंसानां स्वनो यस्यां सा सरित्कथं प्रावृड्वतीति विरोधः। करो हस्तो रश्मिश्च। शिलावातवज्जीभूतं हिमं यत्र च हिमगिरिशिलाभिः पृथुर्मध्यभागस्तत्र कथं पद्मकोमलकान्तिः। हिमस्पर्शे पद्मनाशात्। मणिबन्धादाकनिष्ठं करस्य करभो बहिः। करभश्चोष्ट्रो विलम्बितं विलासं लम्बितश्च करभो यस्याः करभोरू कथं विगतकरभगमनेति विरोधः। कुमारभावो बाल्यं कुमारे च भावो भक्तिः। स्निग्धो रम्यः प्रतीतश्च। तारकाक्ष्णोः कनीनिका। दैत्यभेदश्च तारकः स्कन्देन यो हतः।

परिचयः संस्तवः। अनुषङ्गः प्रसङ्गः। विकुक्षिप्रार्थितयापि साविश्या कौतुकनिवृत्तिर्माभूदिति। आत्म स्वरूपं नोक्तमत एवोत्तरत्र तदनुवन्ध एवोक्तो भूयसो दिवसानित्यादिना। स्वरूपोक्तौ च ज्ञातसरस्वतीकत्वेनापत्यजननकार्यभङ्गो भवेत्। भारती वाक्। भुजङ्गभुजो मयूरान्। भुजङ्ग इव भुजावस्येति च। उच्चचालगन्तुं प्रवृत्तः।

---

१. कलहस° K. K1 K2. T. Jambû ed. मधुरहंसस्वना। मधुरो हंसस्येव स्वनो यस्याः सा C3. २. समुन्नतपयोधरा। तुङ्गौ स्तनौ यस्याः सा। अथ च मधुरो हंसानां स्वनो यस्यां सा शरत्सती कथमुन्नतमेघा प्रावृट् स्यादिति विरोधः C3. ३. कमलकोमलकरा। नलिनबन्धुरहस्ता C3. ४. हिमगिरिशिलेत्यादि। हिमगिरिशिलेव पृथुश्रोणी यस्याः। अथ च हिमाचलादुच्छ्रसितैस्स्यानत्वात्कठिनैर्हिमैः पृथुनितम्बो लक्षणयोपचितो मध्यभागो यस्या हिमर्तुश्रियस्तद्रूपायाः कथं कमलेषु कोमलाकराः कान्तयः। हिमर्तौ तेषां दह्यमानत्वात् C3. ५. करभोरूः। मणिबन्धकनिष्ठिका मध्यभाग इव कोमलत्वादिनोरू यस्याः सा C3. ६. °गमना K. K1. K2. Jambû ed. विलम्बितगामिनी। मन्थरं च या गच्छति सा। अथ चोष्ट्रस्येव यस्या ऊरू तस्याः कथं मन्दा गतिः C3. ७. अयुक्तकुमारभावा। न त्यक्तं कुमारत्वं यया सा C3 ८. स्निग्धतारका। अरूक्षे च कनीनिके यस्याः सा। अथ च यस्याः कार्तिकेये भावस्तस्यां कथं तारकासुरप्रीतिः C3. ९. K. K1. K2 T Jambû ed. omit तु.

नाभवनभाजो भुजङ्गभुजः[1] सुधीरमुवाच । आर्य करिष्यति प्रसादमाराध्यमाना[2] । पश्यामस्तावत्तातमुत्तिष्ठ व्रजाम इति । तथेति च तेनाभ्यनुज्ञातः शनकैरुत्थाय कृतनमस्कृतिरुच्चचाल । तुरगाधिरूढं[3] च तं प्रयान्तं सरस्वती सुचिरमुत्तम्भितपक्ष्मणा निश्चलतारकेण लिखितेनेव चक्षुषा व्यलोकयदुत्तीर्य च[4] शोणमचिरेणैव कालेन दधीचः पितुराश्रमपदं जगाम । गते च तस्मिन्सा तामेव दिशं विलोकयन्ती[5] सुचिरमतिष्ठत् । कृच्छ्रादिव च संजहार दृशं । अथ मुहूर्तमात्रमिव[6] स्थित्वा स्मृत्वा च तां तस्यरूपसम्पदं पुनः पुनर्व्यस्मयतास्या हृदयम् । भूयोपि चक्षुराचकाङ्क्षतद्दर्शनम्[7] । अवशेव केनाप्यनीयत तामेव दिशं दृष्टिः । अप्रहितमपि मनस्तेनैव सार्धमगात् । अज्ञायत च नवपल्लव इव बालवनलतायाः कुतोप्यनुरागः[8][9] । ततः प्रभृति च सालस्येव शून्येव[10] सनिद्रेव दिवसमनयत् । अस्तमुपयाति च प्रत्यक्पर्यस्तमण्डले[11] लाङ्गलिकास्तवकताम्रत्विषि[12] क-

उत्तम्भितान्युत्क्षिप्तानि । कुतोस्मि कस्मादपि न ज्ञायत इत्यर्थः । मनुष्यतस्तथा विधः । तादृश्याः कथमनुराग इति । कथमेतदस्या उपपद्यत इति न वाच्यं । यदाह मुनिः। शापभ्रंशात्तु दिव्यानां तथा चापत्यलिप्सया । कार्यो[13]मानुषसंयोगः शृङ्गाररससंश्रय इति । अन्यत्र कुतः क्षितेर्नवपल्लवोनुरागहतो लातार्थो जायत इति । एवमभिलाषरूपं प्रथमं दशान्तरमालभ्येत्यादिना द्वितीयच्चिन्तनरूपमाह । अनयत्कष्टेनात्यवाहयत् । अस्तमित्यादौ पल्लवशयने तस्थाविति सम्बन्धः । प्रतीच्यां पश्चिमायां । लाङ्गलिका फलिनी मयूरशिखौषधिरपरे रक्तिकेत्यन्ये । कमलिनीकामुक इति सरस्वती दयिताभिप्रायेणोक्तम् । कठोरो जरठः । सारसो लक्ष्मणः । शोणो लोहितः। शोचिर्दीप्तिः । ऋग्यजुः सामनामानि त्रयो वेदास्त्रयी स्मृता । वेदे च पठ्यते । सैषा[14] त्रय्येव विद्या तपतीति ।

---

१. भुजङ्गमभुजः A. B. $C_3$. भुजगभुजः $K_2$. T. Jambû ed. $C_1$. $C_2$. भुजङ्गमभुजः । मयूरान् । ते हि जलदध्वनिना नृत्यन्ति $C_3$. २. प्रसादमार्या आराध्यमाना K. $K_1$. $K_2$. T. Jambû ed. ३. तुरगारूढं K. $K_2$. T. Jambû ed. ४. $K_1$. $K_2$. T. Jambû ed. omit च. ५. आलोकयन्ती $K_2$. T. Jambû ed. ६. मुहूर्तमिव $K_1$. $K_2$. T. Jambû ed. ७. आचकाङ्क्षत तद्दर्शनं D. ८. कुतोप्यस्या अनुरागश्चेतसि सालसेव $K_1$. $K_2$. T. Jambû ed. कुतोपीति । न ज्ञायते हेतुरित्यर्थः । पक्षे कुः पृथ्वी । क्षितेरप्यारभ्येत्यर्थः $C_3$. ९. अनुरागः । स्नेहः । अनुगतरक्तत्वञ्च $C_3$. १०. D. omits शून्येव. ११. प्रत्यक्पर्यस्तेति । प्रतीची क्षिप्तेत्यर्थः $C_3$. १२. लाङ्गलिकेति । रक्तिका गुञ्जेत्यर्थः $C_3$. १३. कार्ये $C_2$. Jambû ed. १४. सैवा $C_1$.

नलिनीकामुके कठोरसारसशिरः शोणशोचिषि सावित्रे[1] त्रयीमये तेजसि तरुणतमालश्यामले[2] मलिनयति व्योमव्यापिनि[3] तिमिरसञ्चये सञ्चरत्सिद्धसुन्दरीनूपुररवानुसारिणि च मन्दमन्दं[4] मन्दाकिनीहंस इव समुत्सर्पति शशिनि[5] गगणतलं कृतसन्ध्याप्रणामा निशामुख एव निपत्य[6] विमुक्ताङ्गी पल्लवशयने तस्थौ। सावित्र्यपि कृत्वा यथाक्रियमाणं सायन्तनं क्रियाकलापं समुचिते[7] शयनकाले किशलयशयनमभजत[8]। जातनिद्रा च सुष्वाप। इतरा तु मुहुर्मुहुरङ्गवलनैर्विलुलितकिशलयशयनीया[9] निमीलितनयनापि[10] नालभत निद्रामचिन्तयच्च मर्त्यलोकः खलु सर्वलोकानामुपरि यस्मिन्नेवंविधानि भवन्ति[11] त्रिभुवनभूषणानि सकलगुणग्रामगुरूणि[12] रत्नानि। तथा हि। तस्य मुखलावण्यप्रवाहस्य[13] निस्यन्दबिन्दुरिन्दुः। तस्य च चक्षुषो विक्षेपाः[14] कुमुदकुवलयकमलाकराः।

कृतेत्यादिना तस्थावित्यन्तेन क्रियान्तरत्यागेन वैमनस्यमावेद्यते। वेपते श्वसते चैव मनोरथविचिन्तनैः। प्रद्वेषेणान्यकार्याणामनुस्मृतिरपीष्यते। निशामुख एवेति न पुनरुचिते शयनकाले विमुक्ताङ्गीत्यनेन निःसहाङ्गत्वमस्या दर्शयते। तस्थाविति न पुनर्निद्रामलभत। यथाक्रियमाणमित्यनेन च सरस्वती तोस्या व्यतिरेकं दर्शयन्सरस्वत्या एवानङ्गावस्थामाह। विलुलितं विपर्यासितं। मर्त्यलोक इत्यादिना गुणकीर्तनं। चतुर्थमवस्थाविशेषमाह। तदुक्तं। अङ्गप्रत्यङ्गलीलाभिर्वाक्चेष्टासहितेक्षणैर्नास्त्यन्यः सदृशस्तेन तदेतद्गुणकीर्तनमिति। गुणा वैदग्ध्यादयः। सूत्राणि च तद्दर्शनेगुरूणि बहुमानभाञ्जि। इतरत्र तु तिष्ठतु तावदेको गुणग्रामस्यापि गुणिरूपितेनापि दुर्वहाणीति यावत्। तस्येति पूर्वानुभूतस्य बिन्दुरिति न केवलं लावण्यप्रवाहाभिप्रायेण यावत्सन्निवेशसादृश्यात्। वि-

१. सावित्रित्रयीमये D. २. तरुणतरतमाल° K. K1. K2. T. Jambû ed. ३. व्योमव्योमव्यापिनि K. K1. K2 T. Jambû ed. ४. मन्दं मन्दं K. K2. Jambû ed. ५. शशिनि च K. K1. K2. Jambû ed. ६. निपत्येति। क्रियान्तरत्यागेन वैमनस्यमस्याः सूचितम् C3. ७. क्रियाकलापमुचिते K. K1. K2. T. Jambu ed. ८. किसलय° K. K1. K2. Jambû ed. किसलशयन° B. ९. °शयनतला K. K1. K2. T. Jambû ed. १०. लोचनापि नाभजत K. K1. K2. T. Jambû ed. ११ सम्भवन्ति K. K1. K2. Jambû ed. १२. गुणग्रामेति। एकत्र न केवलमेकस्य तन्तोस्तत्समुदायस्यापि दुर्वहाणि C3. १३. निस्पन्द° B. निःस्पन्द° K. K2. निःस्यन्द° K1 T. निःष्पन्द Jambû ed. १४. विक्षेपा विकचकुमुद° K. T. Jambu ed.

तस्य चाधरमणेर्दीधितयो विकसितबन्धूकवनराजयः। तस्य चाङ्गस्य परभागोपकरणमनङ्गः। पुण्यभाञ्जि तानि चक्षूंषि चेतांसि यौवनानि[1] स्त्रैणानि। येषामसावविषयः[2]। दर्शयता[3] चैनम्[4] अन्यजन्मजनितेन[5] मे फलितमधर्मेण का प्रतिपत्तिरिदानीमिति चिन्तयन्त्येव कथं कथमप्युपजातनिद्रा चिरात्क्षणमशेत। सुप्तापि च तमेव दीर्घलोचनं स्वप्ने ददर्श[6]। स्वप्नासादितद्वितीयदर्शनाच्चाकर्णाकृष्टकार्मुकेण मनसि निर्दयमताडयत[7] प्रतिबुद्धा मकरकेतुना। मदनशरगहनायाश्च वार्तामिवोपलब्धुमरतिरुपा[8] जगाम[9]। तथा हि[10]। ततः प्रभृति कुसुमधवलाभिर्वनलताभिरताडितापि[11] वेदनामधत्त। मन्दमारुतविधुतैः[12] कुसुमरजोभिर्दूषितलोचनाप्यश्रुज-

क्षेपाः परतः प्रेरणानि। कुमुदेत्याद्युक्तं[13] शुक्लकृष्णरक्तरुचित्वाच्चक्षुषो दीधितय इति मणिशब्दाभिप्रायेण। विकसितशब्देन लौहित्यातिशयमाह। अङ्गानि विद्यन्ते यस्य तदङ्गं शरीरं परभागो वर्ण्यस्य वर्णान्तरेण शोभातिशयः। स्त्रैणानि स्त्रीसम्बन्धीनि। का प्रतिपत्तिः किमनुष्ठेयं। मदनेत्यादिनोद्वेगरूपं पञ्चममवस्थाभेदमाह। यदुक्तं। आसने शयने वापि न हृष्यति न तुष्यति नित्यमेवोत्सुका च स्यादुद्वेगस्थानमाश्रिता चिन्ता निःश्वासखेदेन हृद्दाहाभिनयेन च कुर्यात्तदेवमत्यन्तमुद्योगाभिनयेन चेति। दश किल कामावस्थाः। तदुक्तं। प्रथमे त्वभिलाषः स्याद्द्वितीये चिन्तनं भवेत्। अनुस्मृतिस्तृतीये तु चतुर्थे गुणकीर्तनं। उद्वेगः पञ्चमे प्रोक्तः प्रलापः षष्ठ उच्यते। उन्मादः सप्तमश्चैव भवेद्व्याधिस्तथाष्टमे। नवमे जडता प्रोक्ता दशमे मरणं भवेदिति। अरतिर्दुःखासिका। हि। कामवधूप्रतिपक्षभूतेति तदागमनाभिधानं हंसपक्षा इव। तालवृन्तं व्यजनं। आर्द्रतां सखे-

---

१. यौवनानि वा K. K1. K2. T. Jambû ed. २. येषां विषयोसौ K. K1. K2. T. येषामसौ विषयः thus corrected in A ३. दर्शनस्य क्षणं दर्शयता K. K2. Jambû ed. ४. चैनम्° B. ५. अन्यजन्मजनितेनैव K. K1. K2. T. Jambû ed. अन्यजन्मनि तेन D. ६. सुप्ता च तं दीर्घलोचनं ददर्श K. K1. K2. T. Jambû ed ७. अताडयत मकरकेतुना प्रतिबुद्धा या मदन° K. K2. T. Jambû ed. ८. तस्या वार्तामिव K. K1. Jambû ed. ९. अरतिराजगाम K. K1. K2. T Jambû ed. १०. D. omits तथा हि. ११. कुसुमधूलिधव° K. K1. K2. T. Jambu ed. १२. मन्दमन्दमारुत° K. T. Jambu ed. १३. कुमुदेत्याद्युक्तं C1.

लं मुमोच । हंसपक्षताल[१]वृन्तवान्तवातवितितैः शोणशीकरैरसिक्ताप्या-र्द्रतामगात् । प्रेङ्खत्कादम्ब[२]मिथुनाभिरनूढाप्यघूर्णतवनकमलिनीकल्लोलदोलाभिर्विघटमानचक्रवाकयुगलविमृष्टैरस्पृष्टापि [३]श्यामतामाततान वि-[४]रहनिःश्वासधूमैः । [५]पुष्पधूलिधूसरैरदष्टापि व्यचेष्टत मधुकरकुलैः । अ-थ [६]गणरात्रापगमे निवर्तमानस्तेनैव [७]वर्त्मना तं देशं समागत्य तथैव निवारितपरिजनश्छत्रधारद्वितीयो [८]विकुक्षिर्डुढौके । सरस्वती तु तं दूरादेव सम्मुखमागच्छन्तं [९]प्रीत्या ससं भ्रममुत्थाय वनमृगीवोद्ग्रीवा विलोकय-न्ती [१०]मार्गपरिश्रान्तमस्नपयदिव धवलितदशदिशा दृशा कृतासन-परिग्रहं [११]तु प्रीत्या सावित्री पप्रच्छ । आर्य कच्चित्कुशली कुमार इति । सोऽब्रवीदायुष्मति कुशली स्मरति च भवत्योः । केवलममीषु दिवसेषु तनीयसीमिव तनुं बिभर्ति । [१२]अविज्ञायमाननिमित्तां च शून्यतामिव-

हतां [१३]क्लिन्नतां च । प्रेङ्खद्दोलायमानं । कादम्बाः कृष्णहंसाः । श्यामता शृङ्गार-रसा विष्कारिवैवर्ण्यं । यदुक्तं । शृङ्गारदेवो भगवान्मुरारिः सङ्गीयते श्यामव-पुर्मुरारिः । श्यामोमनाक्स्निग्धतरश्च तेन शृङ्गारशंसोमुखराग उक्तः । अथ श्यामतासधूमता सधूमतेति विरोधाभासः । गणरात्रं निशा बह्वयस्तेनैव वर्त्मनेति । अनेन तस्य यदृच्छया तदाश्रयमागमनमिति दर्शयति । प्रधान-प्रकृतेः स्थवीयसस्तथा विधव्यापारविनियोगादिनौचित्यात् । अत एव वक्ष्यति यथाभिलषितं देशमयासीत् । डुढौक इत्यनेन निमित्तपरतन्त्रया सन्निकृष्टमेवैनमालुलोकेति प्रदर्शितं । यदुक्तं । पटुता[१४]धाष्टर्यंतामिङ्गिताकार-ज्ञानंप्रतारणे देशकालज्ञताकार्येषु विषह्य बुद्धित्वं लघ्वी प्रतिपत्तिः सापा-या चेति दूतीगुणाः । भरतमुनिरपि । विज्ञानगुणसम्पन्ना कथिनी लिङ्गिनी तथा । रङ्गोपजीविनी चापि प्रतिपत्तिविचक्षणा । प्रोत्साहनैककुशलेत्यादि

---

१. वृन्तत्रात K. K1. K2. T. Jambû ed. २. मिथुनैरनूढ° K T. Jambû ed. ३. श्यामतामाससाद K. K1. K2. Jambû ed. ४. विश्वास° A .B. ५. पुण्य° A. पृष्य° B. ६. गणरात्रेत्ति । गणरात्रमुत्कण्ठया दीर्घा निशा । यद्वा गणरात्रो निशा गण इति हेमसूरिः C3. ७. प-। तं देशमागत्य K. K1. K2. T. Jambû ed. ८. विकुक्षिरुपतस्थौ marginally noted in A. ९. प्रीत्या सम्यक्समुत्थाय K2.T. Jambû ed. १०. मार्गोपरि° K. K1. ११. तु तं K. K1. K2. T. Jambû ed. १२. अविज्ञायमानां चानिमित्तां K. K1. K2. T. Jambû ed. १३. क्लूनतां C1. C2. Jambû ed. १४. धाष्टर्यंन्वामिङ्गिता° C1.

धत्ते[1]। अपि चान्वक्षमागमिष्यत्येव[2] मालती[3] नाम्ना वाणिनी[4] वार्तां वो विज्ञातुमुच्छ्वसितं हि सा कुमारस्येति। तच्छ्रुत्वा पुनरपि सावित्री समभाषत। अतिमहानुभावः खलु कुमारो येनैवमविज्ञायमाने क्षणदृष्टेऽपि जने परिचयमनुबध्नाति[5]। तस्य[7] हि[6] गच्छतो यदृच्छया कथमप्यंशुकमिव मार्गलतासु मानसमस्मासु मुहूर्तमासक्तमासीत्। अशून्यं हि सौजन्यमाभिजात्येन वः स्वामिसूनोरलसः खलु लोको यदेवं सुलभसौहार्दानि येन केनचिन्न क्रीणाति महतां मनांसि। सोऽयमौदार्यातिशयः कोऽपि महात्मनामितरजनदुर्लभो येनोपकरणीकुर्वन्ति त्रिभुवनमिति। विकुक्षिस्तूच्चावचैरालापैः[8] सुचिरं[9] स्थित्वा यथाभिलषितं[10] देशमयासीत्॥

अपरे[11] द्युरुद्यति द्युमणावुद्दामद्युतावभिद्रुततारके तिरस्कृततमसि तामरसव्यासव्यसनिनि[12] सहस्ररश्मौ शोणमुत्तीर्य यान्ती तरलदेहप्र-

-दूतीगुणैर्युतेति। अत एवागूढाभ्याकारतः प्रभृतीत्यादि वक्ष्यते। अन्वक्षं प्रत्यक्षं। वाणिनी दूती[13]। उच्छ्वसितमित्यनेनेति विस्रम्भवत्ता ख्याता। उच्छ्वसितं प्राण इति वा। यदृच्छया यथाकथञ्चित्। यत्र तत्रागच्छति तस्य निरवधानतया। क्वचिदंशुकादि गलति। आभिजात्येन[14] महाकुलीनत्वेन। उपकरणीकुर्वन्त्यायततां नयन्ति। उच्चावचैः प्रकृतवस्त्वसंस्पर्शिभिर्विचित्रैरिति वा।

अपरे द्युरित्यादावीदृशो मालती समदृश्यतेति सम्बन्धः। दिवि मणिरिव द्युमणिर्व्ययक्षपणं सूर्यः। अभिद्रुता न्यक्कृता। तामरसं पद्मं। व्यासो विकासः। अतिमुक्तकं पुष्पभेदः। केचिन्मालतीलताकुसुममाहुः।

---

१. आधत्ते K. K1. K2. T. Jambû ed. २. चान्वक्समाग° K. K1. K2. T. Jambû ed. चान्वक्षामाग° D. अन्वक्षम्। पश्चात् C3 ३. मालतीति नाम्ना K. K1. K2. T. Jambû ed. ४. वाणिनी। विदग्धा छेकामन्ता च C3. ५. परिचितिमनु° K. K1. K2. T. Jambû ed. ६ K. K1. K2. T. Jambû ed. omit हि. ७. तव A. B. ८. विकुक्षिरुच्चावचै K. K1. K2. T. Jambû ed. उच्चावचैः। प्रकृतार्थासंस्पर्शिभिः C3. ९. सुचिरमिव K. K1.K2. T. Jambû ed. १०. अभिलक्षित° A. ११. ते द्युरुदिते भगवति द्युमणावु° K. K1. K2. T. Jambû ed. १२. तामरसिनी विकासव्यसनिनि K2. T. Jambû ed. १३. C1 Jambû ed. omit दूतो १४. अभिजन्यत्वेन C1. C2. Jambû ed.

भा वितानच्छलेनात्यच्छं सकलमिव[1] शोणसलिलमानयन्ती स्फुटितातिमु-
क्तकेकुसुमत्विषि[2] सटाले महति मृगपताविव गौरी तुरङ्गमे स्थिता
सलीलमुरोबन्धारोपितस्य[3] तिर्यगुत्कर्णतुरगाकर्ण्यमाननूपुरयुगल[4]पट्टरणि-
तस्यातिबहलेन पिण्डालक्तकेन[5] पल्लवितस्य कुङ्कुमपिञ्जरीकृतपृष्ठस्य[6]
चरणयुगलस्य प्रसरद्भिरतिलोहितैः प्रभाप्रवाहैरुभयतस्ताडनदोहदलो[7]-
भागतानि किसलयितानि रक्ताशोकवनानीवाकर्षन्ती[8] सकलजीवलोक-
हृदयहठहरणघोषणयेव[9] रशनया शिञ्जानजघनस्थला धौतधवलनेत्र[10]-
निर्मितेन निर्मोकलघुतरेणाप्रपदीनेन[11] कञ्चुकेन तिरोहिततनुलताच्छातक[12]-
ञ्चुकान्तरदृश्यमानैराश्यानचन्दनधवलैरवयवैः स्वच्छसलिलाभ्यन्तरवि-
भाव्यमानमृणालकाण्डेव सरसीकुसुम्भरागपाटलपुलकबन्धचित्रं[13] च[14]-

सटास्ति यस्येति । प्राणिस्थादातोलजन्यतरस्याम् । गौरी गौराङ्गी पार्वती च ।
सजलतुरङ्गाङ्गस्पर्शपरिजिहीर्षयोरोबन्धेत्याद्युक्तं[15] । प्रियमधुरशब्दत्वादश्वा-
नामाकर्ण्यमानेत्युक्तं । पिण्डालक्तकः कथितो लक्तकरसः । दोहदो-
भिलाषः । वाद्यविशेषानुगताङ्ग्यघोषणा । रशना मेखला । शिञ्जानं शब्दा-
यमानं । निर्मोकः सर्पत्वक् । आप्रपदं प्राप्नोत्याप्रपदीनः पादं यावत् । छा-
तस्तनुः । कुसुम्भं पद्मकं । नानावर्णबिन्दुन्यासः पुलकबन्धो मणिविशेषाश्च

---

१. °कलं शोणसलिलमिवानयन्ती K. K1. K2. T. Jambû ed. २. कुसुमस्तबकसमत्विषि K. K1 K2. T. Jambû ed. ३. उरोवभ्रारोपितस्य K. K1. K2. T. Jambû ed. C1. C2. उरोबन्धेति । सजलतुरङ्गाङ्गस्पर्शभयादित्यर्थः C3. ४. K. K1. K2 T. Jambû ed. omit युगल. ५. पिण्डालक्तकेन । कथितलक्तरसेन C3. ६. पिञ्जरितपृष्टस्य K K1. K2. T. Jambû ed. °घृष्टस्य A. B. ७ दोहदेति । अभिलाषेत्यर्थः । रक्तपक्षे तद्वत् C3. ८. किसलयितातिरक्ताशोक° K2 T. Jambû ed. किसलयातिरक्त° corrected *secunda manu* in A. ९. हरणाघोषणयेव A; afterwards corrected to हरणाघोषनयेव. घोषणया । आज्ञया C3. १०. धवलनेत्रेति । पट्टसूत्रेत्यर्थः C3. ११. लघुतरेण प्रपादीनेन A. B. १२. °तनु° K2. T. Jambû ed. °श्वेत° marginally noted in A. छातेति । शुक्लेत्यर्थः । मणिविशेषो वा C3. १३. °पाटलं पुलक° K. K2. Jambû ed. १४. चण्डातकम् । अर्धोरुकम् । स्फटिकस्थानीयः स्वच्छः कञ्चुकः C3. हेमल इति प्रसिद्धः marginally noted in A. १५. उरोवभ्रेत्याद्युक्तं C1. C2. Jambû ed.

ण्डानकमन्तः स्फु[1]रत्स्फटिकभूमिरिव रत्ननिधानमादधाना । हारेणामलकीफले[2]र्निस्तलस्थू[3]लमुक्ताफलेन स्फुरितस्थूलग्र[4]हगणशारा शारदीव श्वे[5]तविरलजलधरपटलावृता द्यौः कुचपूर्णकलशयोरुपरि रत्नप्रालम्बमालिकामरुणहरितकिरणकिशलयिनीं कस्यापि पुण्यवतो हृदयप्रवेशव[6]न्दनमालिकामिव बद्धां धारयन्ती प्रकोष्ठनिविष्टस्यैकैकस्य प्र[7]वालकटकस्य म[8]रकतवेदिकासनाथस्य ह[9]रितीकृतदिगन्ताभिर्मयूखसन्ततिभिः स्थलकमलिनीभिरिव लक्ष्मीशङ्कयानुगम्यमाना । [10]अतिबहले[11]ताम्बूलकृष्णिकान्धकारितेनाधर[12]पुटेन मुखशशिपीतं ससन्ध्यारागं तिमिरमिव वमन्ती विकचनयनकुवलयव[13]नकु[14]तूहलनिलीयमानयालिकुलसंहत्या नीलांशुकजालिकयेव निरुद्धार्धवदना । नीलीरागनिहितनीलिम्ना

पुलकाः । चण्डातकमर्धोरुकं । कुचाविव कस्यापि पुण्यवत इवेति वक्ष्यमाणाभिप्रायेण पूर्णकलशौ । कस्यापीत्यलौकिकस्य । व[15]न्दनमालिका पु[16]ष्पपत्रयोजिता स्रक् । सापि पूर्णकलशयोरुपरिबध्यते । प्रकोष्ठः प्रकुञ्चनकः । वेदिका रत्नप्रतिष्ठा पीठिका । बहलं पीनः पु[17]ण्येन कृतं । कृष्णिका कृष्णलेखा । मुखमेव तमः पारप्रतिपिपादयिषया शशी । ताम्बूलकारणत्वेन लौहित्यमेव सम्भवतीति ससन्ध्यारागमित्युक्तं । नील्योषधिभेदः ।

---

१. स्फुटं स्फटिक° K. K1. K2. T. Jambû ed. स्फुरत्स्फुटिका° B. २. निस्तुल A. K. K1. K2 T. Jambû ed. निस्तलेति । वर्तुलेत्यर्थः C3. ३. K. K1. K2. T. Jambû ed. omit स्थूल. ४. °ग्रहणाशारा A. B. ५. श्वेतविरलेत्यादि । अच्छकञ्चुकाच्छादितत्त्वमुपमेयम C3. ६. °वनमालिकां K1. K2. T Jambû ed. C1. C2. वन्दनमालिकेति । पुष्पपत्रमिश्रा स्रक् । सापि पूर्णकलशयोरुपरिबध्यते C3. ७. हाटककटकस्य K. K1. K2. T. Jambû ed. ८. मरकतमकर° K. K1. K2. T. Jambû ed. ९. हरितीकृते A. १०. बहल° K. K1. K2. T. Jambû ed. ११. ताम्बूलकृष्णिकेति । ताम्बूलजनितत्वेन रागोपि सम्भवतीति सन्ध्येत्युक्तम् C3. १२. सम्पुटेन K. K1. K2. T. Jambû ed. १३. K. K1. K2. Jambû ed. omit वन. १४. कुतूहलालीनयालि° K2. T. Jambû ed. १५ वनमाला C1. C2. Jambû ed. १६. पत्रपुष्प° C1. C2. Jambû ed. १७. पुन्येन C1. C2. Jambû ed.

शिखिगल[1]शितिना वामश्रवणाश्रयिणा दन्तपत्रेण कालमेघपल्लवेन[2] विद्युदिव द्योतमाना [3]बकुलफलानुकारिणीभिस्तिसृभिर्मुक्ताभिः कल्पितेन [4]वालिकायुगलेनाधोमुखेनालोकजलवर्षिणा सिञ्चन्तीवातिकोमले भुजलते दक्षिणकर्णावतंसितया [5]केतकगर्भ[6]पलाशलेखया रजनिकरजिह्वालतयेव लावण्यलोभेन लिह्यमानकपोलतलातमालश्यामलेन मृगमदामोदा[7]निष्यन्दिना तिलकबिन्दुना मुद्रितमिव मनोभवसर्वस्वमास्यमुद्वहन्ती [9]ललाटलासकस्य [10]सीमन्तचुम्बिनश्च[11]टुलतिलकमणेरुदञ्चता [12]चञ्चलेनांशुजालेन रक्तांशुकेनेव [13]कृतशिरोवगुण्ठना [14]पृष्ठप्रेङ्खदनादरसम्यमनशिथिलजूटिकाबन्धा नीलचामराव[15]चूलिनी चूडामणिमकरिकासनाथा [16]मकरकेतुपताकयेव कुलदेवतेव चन्द्रमसः पुनः सञ्जीवनौषधिरिव पुष्पधनुषो वेलेव रागसागरस्य [17]ज्योत्स्नेव यौवनचन्द्रोदयस्य महानदीव रतिरसा-

शितिर्नीलः । पल्लवः पिण्डः । वालिका कर्णोपवेधेलङ्कारः । अधोमुखेन घटादिना । जलवर्षिणा लता सिच्यते । मृगमदः कस्तूरिका । तिलकबिन्दुः परिवर्तुलस्तिलकः । लासको नर्तकः । सुवर्णशृङ्खलाबद्धो नानारत्नौघमण्डितः । ललाटलम्ब्यलङ्कारश्च[18]टुलतिलकोमतः । अवचूलं चिह्नं । मकरिका मकराकारं रूपं । वेला यथा सागरं क्षोभयति तद्वदेव रागं । क्षोभेन यथा सागरो [19]दुरुत्तर एवमेतयापि रागः । यथा ज्योत्स्नया विना चन्द्रोदयो भवन्नपि न क्वापि विलसन्विभाव्यते तथतया विना यौवनं सविलासमन्यत्र न दृश्यते । रतिप्रधानो रसः शृङ्गार एव । माधुर्यातिशययोगित्वात्प्रकृष्टत्वाच्च ल्हादनममृतं ।

१. शिति K. K1. K2. T. Jambû ed. २ पल्लवेनेव K1. Jambû ed. ३ कुवलफल° B; *secunda manu* corrected to कुवबकुल° in A. ४ वालिकेति । कर्णपृष्ठाभरणम् C3. ५. केतकी° K. K1. K2. T. Jambû ed. ६ पलाशेति । पलाशपत्रेत्यर्थः C3. ७. निष्पन्दिना K. K1. K2. T. Jambû ed. ८. वदनमुद्वहन्ती K. K1. K2. T. Jambû ed. ९ ललाटलासकस्येति । गतिवशचटुलत्वेन ललाटे नृत्यतीवेत्यर्थः C3. १०. सीमन्तचुम्बिनः । तनुना सीमन्ते बद्धस्य C3. ११. चटुलातिलक° K. K1. K2. T. Jambû ed. १२. चटुलेनांशु° K. K2. T. Jambû ed. १३. शिरो नवगुण्ठना B. १४. पृष्ट° A. B. १५. अवचूलिनीव K. K1 K2. T. Jambû ed. १६. मकरकेतुकेतुपताका K. K1. K2. T. Jambû ed. मकुटकेतुपताकेव A. मकरकेतुपताकेव B. १७. *secunda manu* marginally corrected to भाशेव in A. १८. चटुलतिलको C1.C2. १९ दुरुत्तरमेवमेतयापि C1. Jambû ed. दुरुत्तरमेतयापि C2.

मृतस्य कुसुमोद्गतिरिव सुरतनरोबालविद्येव वैदग्ध्यस्य कौमुदीव कान्तेर्धृतिरिव धैर्यस्य गुरुशालेव गौरवस्य बीजभूमिरिव विनयस्य गोष्ठीव गुणानां मनस्वितेव महानुभावतायास्तृप्तिरिव तारुण्यस्य कुवलयदलदीर्घलोचनया पाटलाधरया कुन्दकुट्मलस्फुटदशनया शिरीषमालासुकुमारभुजयुगलया कमलकोमलकरया बकुलसुरभिनिःश्वासया चम्पकावदातदेहया कुसुममय्येव ताम्बूलकरण्डवाहिन्या महाप्रमाणाश्वतराधिरूढयानुगम्यमाना कतिपयप्रतिचारकपरिकरा मालती समदृश्यत ॥

यदुक्तं । शृङ्गार एव परमः परः प्रल्हादनो रस इति । सम्प्रयोगो रतं रहः शयनं मोहनमिति पर्यायाः। बालविद्या न कञ्चन मुञ्चति । तद्वदेषवैदग्ध्य । कौमुदीति तथा विधकान्त्यतिशायसम्भवात् । ध्रियते येन धृतिः । अस्यां सत्यां धैर्यमपि । यद्वा । धृतिः प्रवेशरक्षणं यथा प्रविशन्कश्चिद्राजनिकटं ध्रियते केनचित्तथा धैर्यं नात्प्रसरति यावदेषा न दृष्टा एतस्यां दृष्टायां सर्वे धैर्यशून्या इति । समानविद्या वित्तशीलबद्धिवयसामनुरूपैरालापैरेकत्रासनबन्धो गोष्ठी । मनस्वितेत्यनेनैतस्या महानुभावतया व्यभिचारित्वमुच्यते । यस्माद्यत्र मनस्विता तत्र महाशयत्वमेवावश्यं सम्भावयतीति स्थितमेव । तृप्तिरिवेति यथा कश्चित्सञ्जाततृप्तिर्नान्यत्किञ्चित्पुनरपेक्षते तद्वदासादितमालतीकं तारुण्यं । एतदाश्रयणेन परिपूर्णविषयिकोपभोगप्राप्तिस्तारुण्यस्येत्यर्थः । कुसुममय्येवेति कुवलयादिभिर्नयनादीनां विधानं । तरुणोश्वोश्वतरः । [११]वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वमिति तनुत्वमितरत् । अत्र च व्याख्यातं तनुत्वं द्वितीयवयः प्राप्तिरिति । अश्वतरो वा गर्दभेनाश्वायां जातः । मालतीत्येवं द्धोचपरिवारभूतया मालत्या गुणवर्णनद्वारेण सरस्वत्या एव निःसामान्यगुणातिशयो ध्वन्यते ।

---

१ कुवलयेति । एकत्रोपमा । कुसुममयत्वं तु रूपकम् C3. २. पाटलेति । कर्णविशेषः पुष्पं च C2. ३. कुड्मल° K. K1. K2. T. Jambû ed. ४. निश्वासया A. B. निःश्वसितया K. K1. K2. T. Jambû ed. ५. चम्पकावदातया K. K1. K2. T. Jambû ed. ६. कुसुममय्येवेति । पुष्पमयी कुवलयादिभिर्नयनानां विधानाम् C3. ७. ताम्बूलकवाहिन्या A. B. *secunda manu* corrected to ताम्बूलकरण्डवाहिन्या in A. ताम्बूलकरङ्कवाहिन्या° D. K. K2. Jambû ed. ८. अश्वतरारूढया K. K1. K2. T. Jambû ed. ९. परिचारक° K. K1 K2. Jambû ed. १०. आवश्यमेव C2. ११. वत्सोक्षाश्वर्षभेभ्यश्च तनुत्व इति तनुत्वेतरत् C1. C2. Jambû ed.

दूरादेव च दधीचप्रेम्णा सरस्वत्या लुण्ठितेव[1] मनोरथैराकृष्टेव कुतूहलेन प्रत्युद्गतेवोत्कलिकाभिरालिङ्गितेवोत्कण्ठयान्तः प्रवेशितेव हृदयेन स्नपितेवानन्दाश्रुभिर्विलिप्तेव स्मितेन वीजितेवोच्छ्वसितैराच्छादितेव चक्षुषाभ्यर्चितेव वदनपुण्डरीकेण सखीकृतेवाशया सविधमुपययावव[2]तीर्य च दूरादेवानतेन मूर्ध्ना प्रणाममकरोत् । आलिङ्गिता च ताभ्यां सविनयमुपाविशत् । स[3]प्रश्रयं सम्भाषिता च पु[4]ण्यभाजनमात्मानममन्यत । अकथयच्च दधीच सन्दिष्टं शिरसि [5]निहितेनाञ्जलिना नमस्कारम् । अगृह्याच्चाकारतः प्रभृत्यग्राम्यतया [6]तैस्तैरतिपेशलैरालापैः सावित्रीसरस्वत्योर्मनसी । क्र[7]मेणातीते मध्यन्दिनसमये शोणमवतीर्णायां स्ना[8]तुं सावित्र्यामुत्सारितपरिजना सा[9]कूतेव मालती कुसुमप्र[10]स्तरशायिनीमुपसृत्य सरस्वतीमावभाषे । देवि वि[11]ज्ञाप्यं नः किञ्चिदस्ति रहसि यतो मु[12]हूर्तमवधानदानेन प्रसादं क्रियमाण[13]मिच्छामि । सरस्वती तु द[14]धीचसन्देशाशङ्किनी किं वक्ष्यतीति स्त[15]ननिहितवामकरन[16]ख-

लुण्ठितेवेति वक्ष्यमाणं प्रार्थनादिनया मनोरथैरुत्प्रेक्ष्य स्वीकृतमित्यतस्तैर्लुण्ठितेवेत्युक्तं । लुण्ठनं च पाथेयाभिवितरणमेवमन्यत् उत्कलिका रुहरुहिका । सविधं समीपं । अपि चयः स्निग्धो दूरात्सविधमायाति । तस्य लुण्ठनादिसर्वमर्चनावसानं क्रियतइति ध्वनिः । पेशलैर्हृद्यैः । आकूतमभिप्रायः । रहस्येकान्ते । सरस्वतीत्यादौ सरस्वती कुसुमश[17]यनादुदगादुदतिष्ठदिति स-

१. लुण्ठितेवेति । वक्ष्यमाण तस्याः प्रार्थनादि मनोरथैरुत्प्रेक्ष्य लुण्ठितमिति सापि तथा । अथवाभ्यागतस्य भारोपग्रन्हियते C3. २. अवतीर्य च तुरगाद्दूरादेवावनतेन K. K1. K2. T. Jambû ed. ३. सप्रश्रयं ताभ्यां सम्भाषिता K. K1. K2. Jambû ed. ४. पुण्यभाजममन्यत K1. T Jambû ed. ५. विनिहितेन° K. K1. K2. T. Jambû ed. ६. तैस्तैरालापैरतिपेशलैः D. ७. क्रमेण चातीते K. K1 K2. T. Jambû ed. ८. सा चत्र्यां स्नातुमुत्सारित° K. K1. K2. T. Jambû ed. ९. साकुता K. K1. K2. T. Jambû ed. साकूतेव । साभिप्रायेव C3. १०. प्रस्तरशायिनीं समुपसृत्य K. K1. K2. T. Jambû ed. ११. विज्ञाप्यं K. K1. K2. T. Jambû ed. १२. मुहूर्तमवदाने प्रसादं D. १३. इच्छामीति K. K1. K2. T. Jambû ed. १४. दधीचिसन्दे° A. B. १५. स्तनविनिहित° K. K1. K2. T. Jambû ed. वक्ष्यतीति निहित° A. B १६. °नख° all Mss. °नखर° marginally noted in A. १७. °शयनीयात् C1. C2. Jambû ed.

रकिरणदन्तुरितमुद्भिद्यमानकुतूहलाङ्कुरनिकरमिव हृदयमुत्तरीयदुकूल-वल्कलैकदेशेन सञ्छादयन्ती गलतावतंसपल्लवेन श्रोतुं श्रवणेनेव कुतूहलाद्धावमानेनाविरतश्वाससन्दोहदोलायितां जीविताशामिवासन्नतरुणतरुलतामवलम्बमाना समुत्फुल्लस्य मुखशशिनो लावण्यप्रवाहेण शृङ्गाररसेनेवाप्लावयन्ती सकलं जीवलोकं शयनकुसुमपरिमललग्नैर्मधुकरकदम्बकैर्मदनानलदाहश्यामलैर्मनोरथैरिव निर्गत्य मूर्तैरुत्क्षिप्यमाणा कुसुमशयनात्स्मरशरसञ्ज्वरिणी मन्दमन्दमुदगात् ॥

उपांशु कथयेति कपोलतलप्रतिबिम्बितां लज्जया कर्णमूलमिव मालतीं प्रवेशयन्ती मधुरया गिरा सुधीरमुवाच । मालति किमर्थमेवमभिदधासि काहमवधानदानस्य शरीरस्य प्राणानां वा । सवस्याप्रार्थितेपि प्रभवत्येवातिपेशलश्चक्षुष्यो जनः। नं का चिद्या न भवसि मे स्वसा सखी प्रणयिनी प्राणसमा च । नियुज्यतां यावतः कार्यस्य क्षमं क्षोदीयसो गरीयसो वा शरीरकमिदम्। अनवस्करमाश्रवं मे त्वयि हृदयम् । प्रीत्या प्रतिसरास्मि ते। व्यावृणु वरवर्णिनि विवक्षितमिति। सा त्ववादी-

म्बन्धः । अवतंसपल्लवेन गलतेतीत्थं भूतलक्षणे तृतीया । सन्दोहः समूहः । सञ्ज्वरः सन्तापः । उपांश्वनुक्तं । अतिवेलमतिमात्रं । अतिपेशल इति पाठे पेशलः सुन्दरः । चक्षुष्योनुकूलः । त्वमिव व्यक्तं चक्षुष्य इति । भङ्ग्या दधीच इति ध्वनति । स्वसा भगिनी । प्रणयिनी विश्वस्ता । अतिशयेन क्षुद्रमल्पं क्षोदीयः । ज्ञेयं गुह्यमवस्करं । आश्रवं वचसि स्थितं ।

---

१. दुगूल K. K1. K2. T. Jambû ed. २. श्रवणेनेव धावमानेनानवरतश्वास° K. K1. K2. T. Jambû ed. ३ आशामिव समासन्नलतामव° K. K1. K2. T. Jambû ed. ४. शृङ्गाररसेनेव प्लावयन्ती जीवलोकं कुसुमपरि° K. K1. K2. T. Jambû ed शृङ्गाररसेनाप्लावन्ती A B. ५. °शयनीयात्° K. K1. K2. T. C1. C2. Jambû ed. ६. मन्दं मन्दमुदगात् K. K1. Jambû ed. ७. लज्जयेव कर्णमूलं K. K1. K2. T. Jambû ed. ८. सखि मालति K. K1 K2. T. Jambû ed. ९. अप्रार्थितोपि K. K1. K2. T. Jambû ed. अप्रार्थितेपि । प्रार्थनां विनापि C3. १० सा न का चिद्या Jambû ed. न चिद्या B. ११. अनवस्करां अविद्यमानगुह्यम् C3. १२. आश्रवं । आश्रवो वचने स्थितः । वचनकारीत्यर्थः C3. १३. प्रतिसरा विधेयास्मि K. K2. T. Jambû ed.

त्। देवि जानास्येव माधुर्यं विषयाणां लोलुपतां चेन्द्रियग्रामस्य। उन्मादितां च नवयौवनस्य पारिप्लवतां च मनसः। प्रख्यातैव च मन्मथस्य दुर्निवारता। अतो न मामुपलम्भेनोपस्थातुमर्हसि न च बालिशता। चपलता चारणता वा वाचालताया कारणम्। न किञ्चन कारयत्यसाधारणा स्वामिभक्तिः। सा त्वं देवि यदैव दृष्टासि देवेन। तत एवारभ्यास्य कामो गुरुश्चन्द्रमा जीवितेशः। मलयमरुदुच्छ्वासहेतुराधयोन्तरङ्गस्थानेषु। सन्तापः परमसुहृत्प्रजागर आप्तो मनोरमैतिसरा विधेया। व्यावृणु प्रकटय। वरवर्णिनि वरारोहे। लोलुपतां साभिलाषत्वं। चलार्थकौ निगद्येते पारिप्लवपरिप्लवौ। बालिशोऽज्ञः। चारणता धूर्तता। असाधारणानन्यसदृशी। देवी देवेनेति च परस्परसमगुणयोगित्वमभिव्यनक्ति। गुरुर्गरीयानुपदेष्टा वा। तद्वशवर्तित्वाच्च देवस्तस्य गुरुराचार्यः कश्चिदवश्यं सम्भवति। जीवितस्येश्वरः स्वामी जीवितेशः। शिशिरतया मदनो दाहप्रशमनहेतुत्वादमृतमयत्वेन च जीवितसन्धारणसक्तत्वात्। अथ च जीवितेशो मृत्युः। चन्द्रादयो ह्यापातत एव तापं शमयन्त्यनवरतं सेव्यमानाः पुनः कामोद्दीपकत्वेन मृत्युं दिशन्ति। राजपक्षे जीवितेशः कश्चित्पुरोहितप्रायः। उच्छ्वसनमुच्छ्वासस्तत्र हेतुः। अथ च श्वासोत्क्रान्तौ कारणं। इतरत्र सचिवप्राया विश्वसनीयाः। आधयश्चित्तपीडाः। अत एवान्तरङ्गमन्तः शरीरं यानि स्थानानि तेष्वितरत्रान्तरङ्गोन्तर्वैशिकः तत्स्थानेषु। विश्वसनीयजनाधिकारेषु। परं प्रकृष्टमसुहृदमित्रो वा। अन्यत्र परमसुहृन्मित्रं च। आप्तः प्राप्तो बान्धवप्रायः कश्चित्।

१ जानास्येवं K1. T. Jambû ed. २. D. omits च. ३. प्रख्यातैव marginally noted in B. ४. चापलता K2. Jambû ed. ५. K. K1 K2. T. Jambû ed. omit वा. ६ दृष्टा देवेन K1. T. Jambû ed. ७. D. omits आरभ्य° ८. गुरुरिति। महानुपदेष्टा वा तद्वश्यत्वात्। अथ च देवस्य राज्ञः कश्चिद्गुरुराचार्यः C3. ९. जीवितेश। अमृतमयत्वेन प्राणसन्धारकत्वात्प्राणस्वामी यमश्च कामोद्दीपनेन विनाशकत्वात्। राजापि पुरोहितः प्रायः शान्तिं कृत्वा जीवितनाथः C3. १०. उच्छ्वासहेतुः। उच्छ्वसने हेतुरापाते। उद्दीपकत्वाच्छ्वासोत्क्रान्तौ च। राजपक्षे सचिवः C3. ११. अन्तरङ्गस्थानेषु। अन्तः शरीरं यानि स्थानानि तेषु मानसी पीडा विश्वसनीयजनाधिकारेषु राज्ञः C 3. १२. परमसुहृदिति। अतिशयेन प्राणहरत्वादमित्रः। परं च मित्रं C3. १३. प्रतिसरानुकूला। विधेयावश्या C1. C2. Jambû ed. १४ असुहृत् C1.C2. Jambû ed.

रथः सर्वगता[1] [2]निःश्वासा विग्रहाग्रेसरा मृत्युः पार्श्ववर्ती[3] रणरणकः सञ्चारकः[4] सङ्कल्पा[5] बुद्ध्युपदेशवृद्धाः । किं च[6] विज्ञापयाम्यनुरूपो देवि[7] इत्यात्मसम्भावना शीलवानिति प्रक्रमविरुद्धम् । धीर इत्यवस्थाविपरीतं सुभग इति त्वदायत्तं स्थिरप्रीतिरिति[8] निपुणोपक्षेपो जानाति सर्वमित्यस्वामिभावोचितम् । इच्छति दासतामामरणात्कर्तुमिति धूर्तालापः[9] । [10]भुवनस्वामिनी [11]भवेत्युपप्रलोभनम् । पुण्यभागिनी भजति भर्तारं तादृशमिति स्वामिपक्षपातः । त्वं तस्य मृत्युरित्यप्रियम् । अगुणज्ञासीत्यधिक्षेपः [12]स्वप्रेष्यस्य बहुशः कृतप्रसादासीत्यसाक्षिकम् । प्राणरक्षार्थमर्थयत इति कातरता । [13]तत्र गम्यतामित्याज्ञा वारितोपि बलादगच्छतीति परिभवः । तदेवमगोचरे गिरामसीति श्रुत्वा देवी प्रमाणमित्यभिधाय तूष्णीमभूत ॥

अथ सरस्वती प्रीतिविस्तारितेन[14] चक्षुषा प्रत्यवादीत् । अयि न शक्नोमि बहुभाषितुमेषास्मि ते स्मितवादिनि वचसि स्थिता । गृह्यन्तामभी प्राणा इति । मालती तु देवि [15]यथाज्ञापयिष्यसि प्रसाद इति । व्याहृत्य प्रहर्षपरवशा प्रणम्य प्रजविना तुरगेण ततार शोणम् । अगाच्च

सर्वगताश्चारा अपि संस्थाख्या । विग्रहो विरोधो देहश्च । त्वदनङ्गीकारेण निश्चितं म्रियते । राज्ञोपि पार्श्वे मृत्युस्तिष्ठत्येव । रणरणको दुःखमरतिकृतं । अत एव सञ्चारक एकत्र नरे सम्भवदितरत्र सञ्चारयति । चरितं वस्तु यः प्रापयते सः। द्विविधा हि चाराः संस्थाः सञ्चारकाश्च । वृद्धा महान्तः स्थविराश्च । अनुरूप इत्यादिनेदमिदं तत्रास्तीति वक्रोक्त्या सातिशयं मालती वैदग्ध्येनाह । प्रक्रम आरम्भः । निपुणोपक्षेपो बुद्धिमत्प्रक्रमः ।

---

१. सवगता इति । सर्वतः प्रसृताश्चाराश्च स्थानरथाः C3 २. निश्वासाः A. B. ३. पार्श्ववर्ती । निकटस्ताम्बूलदायकादिरपि C. ४. सञ्चारकः । एकत्र स्थातुं न ददाति । सञ्चारीचचरः C3. ५. सङ्कल्पाः । मनो विकल्पाः C3. ६. वा K. K1. K2. T. Jambû ed. ७. देव्या इति A. B. K. K1 K2. T. Jambû ed. ८. निपुणोपक्षेपः । बुद्धिमत्प्रक्रमस्थिरानुरागत्वादत्र स्नेहः कर्तुमनेनोपक्रम्यत इति C3. ९. धूर्तालापः । इयत्तादर्थीचस्य गुणा व्याजेनोक्तः C3. १०. भुवन° A. ११. भवसीत्युप° K2. T. Jambû ed. १२. स्वप्रेस्य K. K1. K2. T. Jambû ed. १३. तत्रागम्यतां K. K1. K2. T. Jambû ed. १४. °विस्फारितेन चक्षुषोपलक्षिता K. K1. K2. T. Jambu ed. १५. यथाज्ञापयस्यतिप्रसादायेति व्याहृत्य हर्ष° K. K1. K2. T. Jambû ed. यथाज्ञापयस्यतिप्रसादः D.

दधीचमानेतुं च्यवनाश्रमम् । इतरा तु सखी स्नेहेन सावित्रीमपि विदितवृत्तान्तामकरोत् । उत्कण्ठाभारभृता च ताम्यता चेतसा कल्पायमानं कथं कथमपि वासरशेषमनैषीत् । अस्तमुपगते च भगवति गभस्तिमति स्तिमितमवतरति तिमिरे प्रहसितामिव सितां दिशं पौरन्दरीं दरीमिव केसरिणि मुञ्चति चन्द्रमसि सरस्वती शुचिनि चीनांशुकसुकुमारतरे तरङ्गिणि दुकूलकोमलशयन इव शोणसैकते समुपविष्टा स्वप्रकृतप्रार्थना पादपतनलग्नां दधीचचरणनखचन्द्रिकामिव चन्दनललाटिकां दधाना गण्डस्थलादर्शप्रतिबिम्बितेन चारुहासिन्ययमसावाहूतो हृदयर्दयितो जन इति श्रवणसमीपवर्तिना निवेद्यमानमदनसन्देशेवेन्दुना विकीर्यमाणनखकिरणचक्रवालेन बालव्यजनीकृतचन्द्रकरेणेव करेण वीजयन्ती स्वेदिनं कपोलपट्टम् । अत्र दधीचाहूते च केनचित्प्रवेष्टव्यमिति तिरश्चीं चित्तभुवापातितां विलासवेत्रलतामिव बालमृणालिकामधिस्तनं स्तनन्ती कथमपि हृदयेन वहन्ती प्रतिपालयामास । आसीच्चास्या मनस्यहमपि नाम सरस्वती यत्रामुना

धूर्तालापः प्रतारणावचनं । वारित इति भवत्येवेत्यर्थात् । प्रजविनेति साभिप्रायं । अस्तमित्यादौ सरस्वती प्रतिपालयामासेति सम्बन्धः । गभस्तिमान् रविः । पौरन्दर्यैन्द्री । दरी कन्दरा । चीनेत्यादि सैकतविशेषणं । उपमानस्य तु दुकूलकोमल इत्युक्तं । तरङ्गिणि प्रतिदिनं क्षीयमाणेन वारिणा कृतलेखे भङ्गियुक्ते च । चन्द्रिका कान्तिरत्र । ललाटालङ्कारो ललाटिका । चक्रवालं समूहः । बालव्यजनं चामरं । स्तनमध्ये प्रवेशाभावात्तिरश्चीनमित्युक्तं । यश्च वेत्री प्रवेशनिषेधनिमित्तं वेत्रलतां पातयति स तिरश्चीनं । स्तनयोरुपर्यधिस्तनं । विभक्त्यर्थे व्ययीभावः । कुचपृष्ठ इत्यर्थः । स्तनन्ती कलयन्ती स्तनिः शब्दार्थश्चौरादिकः । स्तनयन्ती वा पाठः ।

१. आश्रमपदं K. K1. K2. T. Jambû ed. २. कल्पायितं K K1. K2. T. Jambû ed. ३ दिवसशेष° K. T. Jambû ed. ४. स्तिमिततरमवतरति च K. K1. K2. T. Jambû ed. ५. केसरिण्युदञ्चति K. K1. K2. T. Jambû ed. ६. दुगूलकोमले शयन इति K. K1. K2. Jambû ed. ७. K. T. Jambû ed. omit चन्दन. ८. वर्धयितो A. B. ९. चन्द्रकलाकलापेनेव करेण वीजयन्ती K. K1. K2. T. Jambû ed. १०. तिरश्चीनं K. K1. T. Jambû ed. चिरयन्ती marginally noted in A. ११. स्तनयन्ती K1. K2. Jambû ed. स्तनन्ती । मदनदाहेन कणन्ती C3. १२. *secunda manu* corrected into स्वयम्भुसुता in A. १३. खदा [ ? instead of खातं] C1. C2. Jambû ed. १४. स्तनयोरधिस्तनं C1. C2. Jambû ed.

मनोजन्मना जा[1]नत्येव परवशीकृता । तत्र का गणनेतरासु तपस्विनी-ष्वतितरलासु तरुणीष्वित्याजगाम च मधुमास इव सुरभिग[2]न्धवाहः । हंस इव कृतमृणालवृ[3]त्तिः शिखण्डीव ध[4]नप्री[5]त्युन्मुखो मलयानिल इवा-हितसे[6]रसचन्दनध[7]वलतनुलतोत्कम्पः । आकृ[8]ष्यमाण इव कृतकरके[9]-चग्रहेण ग्रहपतिना प्रेर्यमाण इव कन्दर्पोद्दीप[10]नदक्षे[11]णदक्षिणानिलेनोह्य-मान इवोत्कलिका बहुलेन [12]रतिसरसेन । परिमलसम्पातिना म[13]धुकरपटलेन पटेनेव नीलेनाच्छादिताङ्गयष्टिरन्त[14]तैः स्फुरता म[15]त्तमद-नकरिक[16]र्णशङ्खायमानेन प्रतिमेन्दुना प्रथमसमागमविलासविलक्षस्मि[17]-तेनेव धवलीक्रियमाणैककपोलोदरो मालती द्वितीयो दधीचः ।

तपस्विनीषु व[18]रकोषु । आजगामेत्यादावाजगामेति सम्बन्धः । सुरभि-गन्धवाहो वातः सुरभिगन्धं च यो वहति । वृ[19]त्तिर्धारणं प्राणयात्रा च । घनः सरसं सान्द्रं यच्चन्दनं तेन धवलया तनुलतयाहितत्रप उत्कम्प का-मधर्मो यस्य । अन्यत्र चन्दनांश्च धवांश्च लान्ति श्र[20]यन्ति यास्तन्व्यो ल-तास्तासामाहित उत्कम्पः कम्पनं येनेति । आकृष्यमाण इत्युद्दीपनका-रणत्वात् । करा रश्मयो हस्तश्च करः । हस्तस्य कर्षणं समुचितं । ग्रहप-तिश्चन्द्रः । प्रेर्यमाण इत्यनिलस्योचितमेतत्कर्म । उह्यमान इति जलस्यो-चितमेतत् । उत्कलिका रुहरुहिकोर्मयश्च । रसोभिलाषो जलं च । परि-मल आमोदः । पटलं समूहः । प्रतिमा प्र[21]तिच्छन्दकः । यथा मन्मथ इति

---

१. जातान्येव A. जघन्येव K. K1. K2. T. Jambû ed. २. गन्धवहः A. B. K1. K2. Jambû ed. ३. धृतिः A. B. K. K1. K2. T. C1. C2. Jambû ed. ४. घनेति । मेघः सान्द्रा चेत्यर्थः C3. ५. उन्मुखेति । ऊर्ध्वमुख उत्कण्ठितश्चेत्यर्थः C3. ६. सरसेत्यादि । एकत्र सरसानां चन्दनतरूणां सम्बन्धिन्यो धवलो महोक्षे सुन्दरे सित इति रचनाद्याः सुन्दर्यस्तन्व्यो लतास्तासामुत्कम्पो येनेति । अन्यत्र सा-त्त्विककम्पः C3. ७. धवलिततनु° K1. T. Jambû ed. ८. कृष्यमाण इव K. K1. K2. T. C1. C2. Jambû ed. ९. करेति । रश्मिः पाणिश्चेत्यर्थः C3. १०. उद्दीपनेति । प्रवली-करणं सञ्ज्वलनं चेत्यर्थः । तेन कामस्य वन्हित्वप्रतीतिः । उचितं च प्रेरणं वायोः C3. ११. दक्षिणानिले नोह्यमानः A. १२. रतिरसेनेति । वीचियुतेन जलेन काष्ठादिकमुह्यते यथा तथोत्कण्ठा बहुलेन रमणाभिलाषेणायमिति भावः C3. १३. मधुपपटलेन K. K1. K2. T. Jambû ed. १४. अन्तरिति । कपोलमध्य एव C3. १५. D. omits मत्त. १६. B. omits कर्ण. १७. °स्मितेन A. B. १८ वारकेषु C2. Jambû ed. १९. धृतिः C1. C2. Jambû ed. २०. C1. omits श्रयन्ति. २१. प्र-तिच्छन्दिकं C1. C2. Jambû ed.

आगत्य च हृदयगतदयितानूपुररवविमिश्रयेव हंसगद्गदया गिरा कृतसम्भाषणो यथा मन्मथः समाज्ञापयति यथा यौवनमुपदिशति यथा विदग्धता ध्यापयति यथानुरागः शिक्षयति तथा तामभिरामां रामामरं[2]मयत् । [3]जातविश्रम्भा चाकथयदात्मानमस्य सरस्वती । ते[4]न तु सार्धमेकदिवसमिव सम्वत्सरमधिकमनयत् ॥

अथ दैवयोगात्सरस्वती बभार गर्भम् । असूत चानेहसा सर्वलक्षणाभिरामं तनयं । तस्मै च जातमात्रायैव [5]सम्यक्सरहस्याः सर्वे वेदाः सर्वाणि च शास्त्राणि सकलाश्च कला विद्या [6]मत्प्रभावात्स्वयमेवाविर्भविष्यन्तीति वरमदत् । सद्भर्तृश्लाघया दर्शयितुमिव [7]हृदयेनादाय च दधीच पितामहादेशात्समं साविञ्या [8]पुनरपि ब्रह्मलोकमारुरोह । गतायां च तस्यां दधीचोपि हृदये ह्रादिन्येवाभिहतो भार्गववंशसंभूतस्य भ्रातुर्ब्राह्मणस्य जायामक्षमालाभिधानां मुनिकन्यकामात्मसूनोः संवर्धनाय नियुज्य विरहातुरस्तपसे वनमगात् । [9]यस्मिन्नेव तु वासरे सरस्वत्यसूत तनयं तस्मिन्नेवाक्षमालापि [10]सुतं प्रसूतवती तौ तु सा निर्विशेषं [11]सामान्यस्तन्यादिना शनैः शनैः शिशू समवर्धयत् । एकस्तयोः सारस्वताख्य एवाभवद[12]परोपि वत्सनामा[13]सीत् ।

मन्मथस्य प्रभवनशीलत्वेनाज्ञादानमुचितं । एवं सर्वत्रोपदिशतीति । इत्थमित्थं वर्तस्वेत्युपदेशः । देवताविषयं सम्भोगशृङ्गारवर्णनमनुचितमिति न तत्र विस्तरः प्रवर्तते । कुमारीत्वे च गान्धर्वविवाहो विस्तरेण न तथा वर्णितः शापनिर्वाहणमात्रपरत्वादिति वृत्तस्यान्यथा निजभर्तृत्यागो दोषावहः किमर्थं कृत इत्यादिकाः [14]कुविकल्पा उत्पद्येरन्निति ।

१. °रवमिश्रयेव K K1. Jambû ed. २. अरमयत D. ३. उपजातविस्रम्भा चात्मानमकथयदस्य सरस्वती तया तु सार्धमेकदिवसमिवानयत्संवत्सरमधिकं K. K1. K2. T. Jambû ed. ४. तमनुसार्धमेक° A. ५. सम्यका रहस्याः D. ६. मत्प्रसादात्स्वयमाविर्भवि° K K1.K2. T. Jambû ed. ७. हृदयेनादये च A.B, *secunda manu* corrected into हृदयेनादयेन च in A. ८. K. K1. K2. T. Jambû ed. omit पुनरपि. C. ९. यस्मिन्नेवावसरे K. K1. K2 T. Jambû ed. १०. सूतं B. ११. सामान्यस्तन्या शनैः K. K2. Jambû ed. १२. द्वितीयोपि K. K1. K2. T. Jambû ed. १३. नामाभवत् Jambu ed. १४. कुविकल्पकाः C2.

आसीच्च तयोः सौदर्ययोरिव स्पृहणीया प्रीतिः। अथ सारस्वतो मातुर्महिम्ना यौवनारम्भ एवाविर्भूता शेषविद्यासम्भारस्तस्मिन्सवयसि भ्रातरि प्रिये प्राणसमे सुहृदि वत्से वाङ्मयं समस्तमेव सञ्चारयामास। चकार च कृतदारपरिग्रहस्यास्य तस्मिन्नेव प्रदेशे प्रीत्या प्रीतिकूटनामानं निवासम्। आत्मनाप्याषाढी कृष्णाजिन्यक्षवलयी वल्कली मेखली[2] जटी च भूत्वा तपस्यतो जनयितुरेव जगामान्तिकम्॥

अथ वत्सात्[3] प्रवर्धमानादिपुरुषजनितात्मचरणोन्नतिनिर्गतप्रघोषः[5] परमेश्वरशिरोधृतः सकलकलागमगम्भीरो[6] महामुनिमान्यो[7] विपक्ष-[8] क्षोभक्षमः क्षितितलल्लब्धायतिरस्खलितप्रवृत्तो[9][10] भागीरथीप्रवाह इव पावनः प्रावर्तत विमलो[11] वंशः। यस्मादजायन्त वात्स्यायना नाम गृहमुनयः। आश्रितश्रौता[12] अप्यनालम्बितालीकवककाकवः[13][14]

अनेहसा कालेन। रहस्यं ज्ञानभागः। ह्लादिनी वज्रं॥ वाक्प्रस्तुता यत्र तद्वाङ्मयं। आषाढसंज्ञो दण्डः स्यात्पालाशो व्रतचारिणां। वृक्षत्वङ्निर्मितं वस्त्रं वल्कलं समुदाहृतं। मेखला मुञ्जतृणादिरचितं कटिसूत्रं। जटा रूक्षसंहतकेशाः। अथेत्यादौ वत्सात्प्रवर्तत[15] विमलो वंश इति सम्बन्धः।

---

१. प्रेयसि K. K1. K2. T. Jambû ed. २. D. omits मेखली. ३. तस्मात् K. K1. K2. T. Jambû ed. ४. प्रवर्धमानेत्यादि। सन्तानादिना वृद्धिं गच्छद्भिर्भृगुप्रभृतिभिः कृतस्तेषां कठादिशाखाध्यायिनां प्रकर्षो यत्र। मुक्तवामनत्वेन हरिणा कृताः स्वपादावुन्नतिर्यस्य च C3. ५. प्रघोषेति। यशः प्रकृष्टशब्दश्चेत्यर्थः C3. ६. सकलेति। समस्तानां गीतनृत्यादीनां कलानां ज्ञानेनातुच्छः। पक्षे कलकलसहितमागमनं यस्य स चासौ गम्भीरश्च C3. ७. महामुनीति। महामुनयः प्रसिद्धाः। पक्षे जन्हुरपि C3. ८. विपक्षेति। विपक्षाः शत्रवः। पक्षे वीनां पक्षाः पक्षरहिता वेत्यर्थः C3. ९. आयतीति। आयतिः प्रभावो विस्तारश्चेत्यर्थः C3. १०. अस्खलितप्रवृत्त.। न भ्रष्टं प्रकृष्टं वृत्तं शीलं यस्य। निरन्तरं प्रसृतश्च विरोधपरिहारे तु नियमभेदो यत्र कुक्कुटाण्डप्रमाणग्रासभोजनं। अहिंसा च वृत्तिः C3. ११ विपुलः K. K1. K2. T. Jambû ed १२. श्रौतेति। लोकव्यवहारः पाको वेत्यर्थः। वैदिको विविश्वरवृत्तं चेत्यर्थः C3. १३. अनालम्बितेत्यादि। त्यक्तं छद्मकुसृतिकैतवञ्चवातुकं यैस्ते। कपटादीनां च परस्परं। अवान्तरभेदो द्रष्टव्यः C3. १४. काकवः। ध्वनिभेदवाचिना काकुशब्देन छद्म लक्ष्यते। ततो ये श्रितपरवृत्तयस्ते कथं मिथ्या बकच्छद्म नालम्बते। तदन्तरेण रिपुवृत्तार्जने चरितुमशक्यत्वात्। अमी तु न तथा C3. १५. विपुलो C1. C2. Jambû ed.

शमितसमस्तशा[1]खान्तरसंशीतयः । उद्घाटितसमग्रग्रन्थार्थ[2]ग्रन्थयः कवयो वाग्मिनो विमत्सराः [3]परसुभाषितव्यसनिनो विदग्धपरिहास-वेदिनः [4]परिचयपेशला नृत्तगीतवादित्रेष्ववाह्या [5]ऐतिह्यस्यावितृष्णाः स-नुक्रोशाशाः सत्यशुचयः [6]सर्वातिथयः [7]सर्वसाधुसम्मताः [8]सर्वसत्त्वसा-धारणसौहार्दद्रवार्द्रीकृतहृदयाः । तथा च[9] [10]सर्वगुणोपेता [11]राजसेनान-भिभूताः [12]क्षमाभाज आश्रितनन्दना [13]अनिस्त्रिंशा विद्याधरा

शाखाः कठाद्याः । संशीतिः संशयः । ग्रन्थिर्दुर्बोधः प्रदेशः । परिहासं विदन्ति न तु स्वयं कुर्वन्ति । परिचयः संस्तवः । सुकुमारा अद्वन्द्वकूटा इत्यर्थोऽवाह्या न तु तदेकनिष्ठाः । ऐतिह्यमागमः । अनुक्रोशो दया । सम्मता इष्टाः । [14]सौहार्दं प्रीतिः । सर्वे गुणा धैर्याद्या राज्ञां सेनया चानभिभूता ये च सर्वैर्गुणैः सत्त्वरजस्तमोभिर्युक्तास्ते कथं राजसेनगुणेनानभिभूता भवन्तीति विरोधः । एवमुत्तरत्र विरोध उद्भावनीयः । क्षमा क्षान्तिर्भूश्च । आश्रितानां नन्दना नन्दयितारो देवोद्यानं नन्दनं च । न निस्त्रिंशा अक्रूराः । विद्यां धारयन्तीति विद्याधराः पण्डिता निस्त्रिंशाश्च । खड्गा एव ये च विद्याधरा देवभूतास्ते सखड्गा एव न त्वनिस्त्रिंशा इति । [15]मालाखड्गगुलिकाञ्जनादिना भेदेन भिन्नानामपि विद्याधराणां खड्गहस्तत्वं न व्यभिचरति ।

---

१. शास्त्रान्तर° A. B. २ ग्रन्थय इति । ग्रन्थिर्गूढार्थः C3. ३. सरसभाषित° K2. T. Jambû ed. ४. परिचयपेशलनृत्त° D. ५. ऐतिह्यस्था वितृष्णाः A. B. ऐतिह्यस्येति । गुरुपरम्पराप्राप्तोपदेशस्येत्यर्थः C3. ६. सर्वातिथय इति । न तु केचनातिथयो येषामिति भावः C3; K. K1. K2. T. Jambû ed. omit this word. ७. सर्वे साधु° A. साधुसम्मताः K. K1. K2. T. Jambû ed. ८. सर्वसत्त्वसौहार्दद्रवार्द्रहृदयाः K. K1. K2. T.Jambu ed. ९. K. T. Jambû ed. omit च. १०. सर्वगुणोपेताः । ये सत्त्वादिभिस्त्रिभिरपि व्याप्तास्ते कथ न राजसेनगुणेनाक्रान्ता इति विरोधः । परिहारे तु सर्वैर्धैर्यादिभिर्युता C3. ११. राजसेनानभिभूताः । राज्ञः सेनया च नाभिभूताः C3. १२. क्षमाभाज आश्रितनन्दना इति । ये पृथिव्यां स्थितास्ते कथं देवोद्यानमाश्रिताः । अन्यत्र क्षान्ति भजन्ति प्रणयिनो नन्दयन्ति चेत्यर्थः C3. १३. अनिस्त्रिंशा विद्याधरा इति । येषामसेरभावस्तेषां कथं विद्याधारत्वं खड्गचिन्हत्वात्तेषां । अन्यत्र न निर्दया विद्याश्चतस्रो धारयन्ति च C3. १४. सौन्दर्य C1. C2. Jambû ed. १५. माल° C2. Jambû ed.

[1]अजडाः कलावन्तो[2]दोषास्तारका [3]अपरोपतापिनो भास्वन्तः । [4]अनूष्मणो हुतभुजो[5]ऽकुसृतयो भोगिनो[6]ऽस्तम्भाः पुण्यालया [7]अलुप्तक्रतुक्रियादक्षा [8]अव्यालाः कामजितो[9]ऽसाधारणा द्विजातयः। तेषु चैवमुत्पद्यमानेषु संसरति च[10] संसारे यात्सु[11] युगेष्ववतीर्णे [12]कलौ व्रजत्सु वासरेषु वहत्सु संवत्सरेष्वति-

अजडा अमन्दधियोऽशीताश्च । कलावन्तो गीताभिज्ञाः कलावांश्चन्द्रः स चाजडोऽशीत इति विरोधः । दोषा द्वेषाद्या रात्रिश्च । तारयन्तीति तारका आचार्या नक्षत्राणि च । तपस्तापः पीडा उष्णत्वं च । भास्वन्तस्तेजस्विन आदित्याश्च । ते परांस्तापयन्ति । उष्मा स्मयो दाहिका शक्तिश्च । हुताशशब्देन हुतमिष्टमुच्यते । हुतं भुञ्जते हुतभुजः । आहिताग्नयो वह्नयश्च । कुसृतिः शाठ्यं । कौ भूमौ । सृतिः सरणं । भोगिनः सुखिनः सर्पाश्च । स्तम्भः स्तब्धता सात्त्विको भावभेदश्चाप्रणतिर्वा गृहधारणकाष्ठं च । पुण्यालयाः सुकृतिनो मठादिस्थानानि च । दक्षाश्चतुराः प्रजापतिभेदश्च दक्षः । स च लुप्तक्रतुक्रियो हररोषजेन वीरभद्रेण । व्यालाः शठाः सर्पाश्च । कामजितः सन्तुष्टा हरश्च कामजित् । असाधारणाः सर्वोत्कृष्टा द्विजातयो विप्रा येषां च द्वैजाती तेषां [13]कथमसादृश्यं ।

---

१. अजडाः कलावन्त इति । अशीतलस्य कथं चन्द्रत्वं । अन्यत्रामूर्खागीतादिकलाशालिनश्चेत्यर्थः C3. २. अदोषास्तारका इति । रात्रेरभावे कथं भाति । पक्षे दोषरहितास्तारकाश्च संसारात् C3. ३. अपरोपिता A. B. अपरोपतापिनो भास्वन्त इति । अविद्यमानप्रकृष्टतापस्य कथं रवित्वं । पक्षे नान्यव्यथका दीप्तिमन्तश्चेत्यर्थः C3. ४. अनूष्मणो हुतभुज इति। उष्णत्वरहिताः कथमग्नयः । पक्षे न दर्पयुक्ता हुतमेव भुञ्जत इत्यर्थः C3. .५ अकुसृतयो भोगिन इति । अवनौगमनरहिताः कथं सर्पाः। अन्यत्र निर्मायाः सुखिनश्चेत्यर्थः C3. ६. अस्तम्भाः पुण्यालया इति । स्तम्भैर्विना कथं प्रकृष्टा आवासाः । पक्षेगर्वाः पुण्यनिवासाश्चेत्यर्थः C3. ७. अलुप्तक्रतुक्रियादक्षा इति । दक्ष· क्षिप्तयज्ञकर्माशिवेन । अमी न केनापि ध्वस्तक्रतुक्रियाविदग्धाश्चेत्यर्थ. C3. ८. अव्यालाः कामजित इति। स्मारारिः ससर्पः। अमी तु तत्क्रूरा जितानङ्गाश्चेत्यर्थः C3. ९. असाधारणा द्विजातय इति । ये केवलास्तेषां कथं द्वैजाती। पक्ष उत्कृष्टा विप्राश्चेत्यर्थः C3. १०. K. K2. Jambû ed. omit च ११. यात्सु योगेषु D. यात्सु *secunda manu* corrected into गच्छत्सु in A. १२. कलौ वहत्सु वत्सरेषु व्रजत्सु वासरेषु K. K2. Jambû ed. १३. कथं नासादृश्यं C2. Jambû ed.

[1]क्रामति काले प्रसवपरम्पराभिरनवरतमापतति विकासिनि वात्स्यायनकुले क्रमेण कुवेरनामा वैनतेय इव [2]गुरुपक्षपाती द्विजो जन्म लेभे ॥

तस्याभवन्नच्युत ईशानो हरः पाशुपतश्चेति चत्वारो युगारम्भा इव [3]ब्रह्मतेजो जन्यमान[4]प्रजाविस्तारा नारायणबाहुदण्डा इव [5]सच्चक्रनन्दकास्तनयास्तत्र पाशुपतस्यैक एवाभवद्भूभार इवा[6]चलकुलस्थितिः [7]स्थिरश्चतुरुदधिगम्भीरोऽर्थपतिरिति नाम्ना समग्रा[8]ग्रजन्मचक्रचूडामणिर्महात्मा सूनुः। सोऽजनयद्भृगुं हंसं शुचिं कविं [9]महीदत्तं धर्मं जातवेदसं चित्रभानुं [10]त्र्यक्षं महिदत्तं विश्वरूपं चेत्येकादशरुद्रानिव [11]सोमामृतरसशीकरच्छुरितमुखान्पवित्रान्[12]पुत्रानलभत च चित्रभानुस्तेषां मध्ये राजदेव्यभिधानायां ब्राह्मण्यां बाणमात्मजम्। [13]स च बाल एव बलवतो [14]विधेर्वशादुपसम्पन्नया व्ययुज्यत जनन्या। [15]जातस्नेहस्त्वतितरां पितैवास्य

काल इति पूर्वोक्तेन्यथैतत्पुनरुक्तं स्यात्। पक्षपातो भक्तिर्यस्यास्ति सः पक्षैश्चयो याति सः। द्विजो विप्रः विधुः पक्षी च। युगारम्भा अपि च चत्वारः। ब्रह्मवेदादिस्रष्टा च ब्रह्मा। सच्चक्रस्य साधुवृन्दस्य नन्दकास्तोषयितारः। चक्रं सुदर्शनं च। नन्दकः खड्गश्च। बाहवोपि चत्वारः। अचलकुलस्थितिरभिन्नवर्षमर्यादः। अचलानां गिरीणां कुलैर्वृन्दैः स्थितिर्यस्य। चतुरुदधिवत्तैश्च गम्भीरः। अग्रजन्मानो द्विजाः। सोमस्तृणभेद इन्दुश्च। उपसंपन्ना मृता।

---

१. °त्र काले K. K1 K2. T. Jambû ed. २. गुरुपक्षपातीति। महत्त्वां पक्षां यात्यण्डजश्चेत्यर्थः C3. ३. ब्रह्मतेजसिति। ब्रह्मवेदस्तदुक्तं मन्त्रचरुमाहिम्ना धातुः प्रभावश्चेत्यर्थः C3 ४. प्रजेति। सन्तानो जनश्चेत्यर्थः C3. ५. सच्चक्रनन्दकाः स्तनयाः A. B. सच्चक्रनन्दका इति। सुदर्शनखड्गौ। पक्षे सज्जनसमूहस्य मोदका इत्यर्थः C3. ६. अचलकुलस्थितिः। अभ्रष्टगोत्रमर्यादो गिरीणां वृन्दे स्थितिर्यस्येति च पक्षः C3. ७. K. K1. K2. T. Jambû ed. omit स्थिरः ८. °अग्रज° K2. T. Jambû ed. ९. महीधरदत्तं K2. T. महादत्तं B. १०. त्र्यक्षमहिदत्तं A. B. *secunda manu* corrected into त्र्यक्षमहीदत्तं in A. त्र्यक्षमहिदत्तं K. त्र्यक्षं मकदत्तं K2. T. ११. सोमेति। वल्लीभेद इन्दुश्चेत्यर्थः C3. १२. A. B. omit पुत्रान्. १३. स बाल एव विधेर्बलवतो वशात्° K. K1. K2. T. Jambû ed. १४. विधिवशात् A. १५. जातस्नेहस्तु नितरां K. K1. K2. T. Jambû ed.

मातृतामकरोत् । अवर्धत च[1] तेनाधिकतरमाधीयमानधृतिर्धाम्नि निजे । कृतोपनयनादि[2]क्रियाकलापस्य समावृत्तस्य[3] चास्य[4] चतुर्दशवर्षदेशीयस्य पितापि[5] श्रुतिस्मृतिविहितं कृत्वा[6] द्विजजनोचितं निखिलं पुण्यजातं कालेनादशमीस्थ[7] एवास्तमगमत् । संस्थिते च पितरि[8] महता शोकेना[9]भीलम[10]नुप्राप्तो दिवानिशं दह्यमानहृदयः कथमपि[11] कतिपया[12]न्दिवसानात्मगृह एवानैषीत् । गते च विरलतां शोके शनैः शनैरविनयनिदानतया स्वातंत्र्यस्य कुतूहलबहुलतया च बालभावस्य धैर्यप्रतिपक्षतया च यौवनारम्भस्य, शैशवोचितान्यनेकानि चापलान्याचरन्नित्वरो[13] भवत्[14] । अभवंश्चास्य सवयसः[15] समानाः सुहृदः सहायाश्च । तद्यथा[16] । भ्रातरौ पारशवौ[17] चन्द्रसेनमातृषेणौ कविरीशानः[18] परं मित्रं प्रणयिनौ रुद्रनारायणौ[19] विद्वांसौ वारवाणवासधारौ[20]

निजे धाम्नि स्वे गृहे । उपनयनं मेखलादानं । समावृत्तो निष्पादितवृत्तः स्नातक इत्यर्थः । वेदवेदाङ्गपाठक[21] इत्यन्ये । ईषदसमाप्तश्चतुर्दशवर्षश्चतुर्दशवर्षदेशीयः । श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः । दशामुपेतो दशमीस्थ उदाहृतो न दशमीस्थोपूर्णायुरित्यर्थः । संस्थितो मृतः । आभीलं कष्टं । इत्वरो गमनशीलः । अभवंश्चेत्यादिनात्मनस्तथाभूतकलावित्सम्पर्कमैश्वर्यातिशयं दर्शयति । पारशवो द्विजः शूद्रायां जातः । परस्त्री परश्वमिति विद्याद्यत्र् परश्वादेशश्च भाषागेयवस्तुवाचस्तेषु ।

---

१. च्चेतनाधिकतरमोधीयमान K. K1. T. च्चेतनाधिकतरमेधीयमान K2. Jambû ed. २. उपनयनेति । बटूकरणेत्यर्थः C3. ३. समावृत्तस्य । अधीतवेदस्य C3. परिवृत्तस्य K. K1. ४. K3. T. Jambû ed. omit चास्य. ५. पितापि विहाय श्रुतिस्मृतिविहितं A. पितापि विहायस्य पितापि विहाय श्रुतिस्मृतिविहितं B. ६. A. B. omit कृत्वा .. to संस्थिते. ७. अदशमीस्थः । दशमीस्थः स्थविरे स्यात्क्षीणरोगे मृताशने C3. ८. *secunda manu* corrected into चापि न महता in A. ९. शोकेनातीवदुःखमनुप्राप्तो A. B. १०. अभीलं । दुःखं C3. ११. कथं कथमपि K. K1 K2. T. Jambû ed. कथमपि तदेकताननतया A. B.; *secunda manu* corrected into तदेकत्वतया. १२. A. B. omit कतिपयान्... निदानतया. १३. इत्वरः । भ्रमणशीलः C3; *secunda manu* corrected into आचरन्स्त्वतुरो in A. १४. बभूव K. K1. Jambû ed. १५. वयसा K. K1. K2. T. Jambû ed. १६. तथा च K K1. K2 T. Jambû ed. १७. पारशवौ । पारशवो द्विजाच्छूद्रायां जातः । परस्त्रियाः परश्वभ्वा सावर्ण्ये C3. १८. भाषाकविरीशानः K. K1. K2. T. Jambû ed. १९. भद्रनारायणौ T. २०. °वानौ K. K1. K2. T. Jambû ed. २१. वेदवेदाङ्गपालः C1.

वर्ण[1]कवि[2]र्वेणीभरतः प्राकृतकृत्कुलपुत्रो वायुविकारो वन्दिनावनङ्गवाणसूचीवाणौ [3]कात्यायनिका [4]चक्रवाकिका [5]जाङ्गुलिको [6]मायूरकस्ताम्बूलदायकश्चण्डको भिषक्पुत्रो मन्दारकः पुस्तकवाचकः सुदृष्टिः कलादश्चामीकरो हैरिकः [7]सिद्धसेनो लेखको [8]गोविन्दश्चित्रकृ[9]द्वीरवर्मा [10]पुस्तकृत्कुमारदत्तो मार्दङ्गिको जीमूतो [11]गायनौ [12]सोमिलग्रहादित्यौ [13]सैरन्ध्री कुरङ्गिका [14]वांशिकौ मधुकर[15]पारावतौ गान्धर्वोपाध्यायो [16]दर्दुरकः [17]सम्वाहिका केरलिका [18]लासकयुवा ताण्डविक आक्षिक [19]आखण्डलकः [20]कितवो भीमकः शैलालियुवा शिखण्डको नर्तकी [21]हरिणिका पाराशरी सुमतिः क्षपणको वीरदेवः कथको जयसेनः शैवो [22]वक्रघोणो मन्त्रसाधकः [23]करालको[24]ऽसुरविवरव्यसनी लोहिताक्षो [25]धातुवादविद्विहङ्गो [26]दार्दरिको दामोदर [27]ऐन्द्रजालिकश्चकोराक्षो [28]मस्करी [29]ताम्रचूलकः ॥

वर्णकविर्गाथादिषु गीतिद इत्यर्थः । अपभ्रष्टगीतविद्यः । पञ्चाशद्वर्षदेशीयां [30]वीरां संस्थितभर्तृकां । [31]वदन्ति कात्यायनिकां धृतकाषाय वाससं । जाङ्गुलिको गारुडिकः । भिषग्वैद्यः । स्वर्णकारः कलादः स्यात् । तदध्यक्षस्तु [32]हैरिकः । पुस्तकृल्लेप्यकारः । प्रसाधनोपचारता सैरन्ध्री स्ववशा स्मृता । संवाहिका या पादादिमर्दनं विधत्ते । लासको नर्तपतिर्यः । युवेत्यादिना वयसः समानत्वमुच्यते । अक्षैर्दीव्यतीत्याक्षिको द्यूतकारः । कितवो धूर्तः । शैलाली स्वयं यो नृत्यति नटः । पाराशरी भिक्षुः । असुरविवरव्यसनी पातालाभिलाषी । धातुवादविद्रसवादज्ञः । मस्करी

१. कर्ण° $K_2$. T. Jambû ed. २. °भारत T. Jambû ed. वीणीभारतः K. $K_1$. $K_2$. ३. कात्यायनीका B. ४. चक्रावाकिका B. ५. जाङ्गुलिकौ K. जाङ्गुलीकः B. जाङ्गुलिकः । विषभिषक् $C_3$. ६. शयूरकः K. ७. सिन्धुषेणः K. T. Jambû ed. सिन्धुसेनः $K_1$. $K_2$. ८. गोविन्दकः $K_2$. T. Jambû ed. ९. वारवर्मा B. धीरवर्मा $K_2$. T. Jambû ed. १०. पुस्तककृत् A. पुस्तेति । पुस्तं लेप्यादिकर्म स्यात् $C_3$. ११. गायिनौ K. T. Jambû ed. १२. सोमिल° A. १३. सैरन्ध्री ।' प्रसाधिका $C_3$. १४. वांसिकौ A. B. १५. °पारापतौ A. १६. दुर्दुरकः A. B. १७. साम्वाहिका K. T. Jambû ed. सम्वाहिका । पादमर्दिका $C_3$. १८. लासयुवा K. लासकः । नृत्ताचार्यः $C_3$. १९. आखण्डः K. आखण्डलः T. Jambû ed. २०. कितवी भामकः D. २१. हरिणिका K. २२. चक्रघोणः D. २३. करालः K. T. Jambû ed. २४. अस्वर° K. २५. धनुर्वाद° D. धानुर्वाद° A. B. २६. दार्दुरिकः T. Jambû ed. २७. ऐन्द्रजालिक K. T. Jambû ed. २८. मस्करी । परिव्राजकः $C_3$. २९. ताम्रचूलः D. ताम्रचूडः K. T. Jambû ed. ३०. धीराः $C_3$. ३१. उशन्ति $C_3$. ३२. भौरिकः $C_2$.

स [1]एभिरन्यैश्चानुगम्यमानो बालतया [2]निघ्नतामुपगतो [3]देशान्तरावलोकनकौतुकेन चाक्षिप्यमाणः सत्स्वपि पितृपितामहो[4]पात्तेषु ब्राह्मणजनोचितेषु विभवेषु सति चाविच्छिन्ने विद्याप्रसङ्गे गृहान्निरगात् । [5]अगाच्च [6]निरवग्रहो [7]ग्रहवानिव [8]यौवनस्वैरिणा मनसा महतामुपहास्यताम् । अथ शनैः शनैरत्युदारव्य[9]वहृतिर्बृहन्ति राजकुलानि [10]वीक्ष्यमाणो निरवद्यविद्या विद्योतितानि गुरुकुलानि च सेवमानो महार्हालाप[11]गम्भीरा गुणवद्गोष्ठीश्चोपतिष्ठमानः [12]स्वभावधीरधीर्धनानि विदग्धमण्डलानि च गाहमानः पुनरपि तामेव [13]वैपश्चितीं [14]वात्स्यायनवंशोचितां प्रकृतिमभजत् । महतश्च कालात्[15]तमेव भूयो वात्स्यायन[16]वंशाश्रममात्मनो जन्मभुवं ब्राह्मणा[17]धिवासं समागात् । तत्र च चिरदर्शनादभिनवीभूतस्नेहसद्भा-

परिव्राट् । निघ्नतामस्वातन्त्र्यं । कौतुकेति न पुनरर्थाभिलिप्सया । एतदेव सत्स्वपीत्यादिना प्रकाशयति । निरवग्रहः स्वतन्त्रः । ग्रहवान्भूतगृहीतः । स्वैरिणा स्वतन्त्रेण । अत्युदारेत्यादिः प्रकृतोपयोगी यस्मात्कविना तथाविधवस्तु वेदिनावश्यमेव भवितव्यं । वीक्ष्यमाण इत्यनेनात्मनः किमपि प्रकृष्टमुत्कर्षातिशययोगित्वमाह । अथ च वीक्ष्यमाणो न तु गुरुकुलवत्सेवमानः । गाहमान इत्यनेन तेजस्वित्वमाहात्मानः । वैपश्चिती विद्वज्जनोचिता । संस्तव आदरः । ज्ञातीनां कर्म ज्ञातेयं बन्धुत्वं । कविज्ञात्योष्ठक् ।

---

१. स एतैश्चान्यैश्चानु° K. स एतैरन्यैरनु° $K_2$. T. Jambû ed. २. निघ्नतां । परवशताम् $C_3$. ३. देशान्तरालोकनकौतूहलाक्षिप्तहृदयः K. T. °कौतुकाक्षिप्तहृदयः $K_2$. Jambû ed. ४. °उपान्तेषु A. B. ५. आगाच्च B. ६. निरवग्रहः । स्वायत्तः $C_3$. ७. ग्रहवानिव । भूतादिगृहीत इव $C_3$. ८. नवयौवनेन स्वैरिणा K. $K_1$. $K_2$. T. Jambû ed. यौवने A. ९. °व्यवहृतिमनोहृन्ति K. °व्यवहृतिमन्तिबृहन्ति T. Jambû ed. १०. वीक्षमाणः K. T. Jambû ed. $C_1$. $C_2$; A. B. omit वीक्ष्यमाणो.. गुरुकुलानि. ११. °गम्भीरगुण° K. $K_2$. T. Jambû ed. गम्भीरो गुण° A. १२. स्वभावगम्भीरधीः K. $K_1$. $K_2$. T. Jambû ed. १३. वैपश्चिती । पण्डिता $C_3$. १४. वैपश्चितीमात्मवंशोचितां K. $K_1$. Jambû ed. वात्स्यवंशो° A. B. D. १५. तामेव K. $K_2$. T. Jambû ed. १६. वंशाश्रयामात्मनः K. $K_1$. $K_2$. T. Jambû ed. १७. अधिवासमगमत् K. T. Jambû ed.

**वैः सं[1]स्तवप्रकटितज्ञातेयैराप्तैरुत्सवदिवस इ[2]वाभिनन्दितागमनो बा[3]लमि-त्रमण्डलमध्यगतो मोक्षसुखमिवान्वभवदिति ॥**

**इ[4]ति श्रीमहाकविचक्रचूडामणिश्रीबाणभट्ट[5]विरचिते हर्षचरिते म[6]हाकाव्ये वात्स्यायनवंशवर्णनं नाम प्रथम उच्छ्वासः सम्पूर्णः ॥ १ ॥**

आप्तैरिति बन्धुभिर्योगिभिश्च । योगिपक्षे बाल इव बालो मित्रो रविर्निस्तेजस्त्वात् । उक्तं च । तपस्यन्तं रविं दृष्ट्वा निस्तेजा जायते रविः । मोक्षमार्गप्रयत्ने तु तेजो नैवास्य विद्यत इति । मित्रं सखा सूर्यश्च मित्रः । मण्डलं समूहो बिम्बं मोक्षसुखमपि सूर्यबिम्बगतैरनुभूयत इति । आख्यायिकासु कविभिर्निजवंशवर्णनं । कानने तथा वंशः ख्यापितः स्यादिति । आत्मनश्च विटवर्णनं सकलकलाकौशलं ममास्तीति हर्षस्य च[7]रिते वर्णयितव्ये ना[8]प्रस्तुतं चैतदिति शिवम् ॥ इ[9]ति श्रीशङ्करकविरचिते श्रीहर्षचरितसङ्केते प्रथम उच्छ्वासः ॥ १ ॥

---

१. ससंस्तव° K. K1. ससम्भ्रमप्र° T. सम्भ्रमप्र° K2. Jambû ed. २. इवानन्दिताभिगमनः K. K1. K2. T. Jambû ed. ३. बालमित्रमण्डलेति । सुकृत्समूहो रविबिम्बं चेत्यर्थः । शशिसूर्यमण्डलगतो हि मोक्षसुखमनुभवतीति शैवमतम् C3. ४. कादम्बर्याः प्रथम उच्छ्वासकः समाप्तः A. B. ५. कृते K. T. ६. K1. K2. T. Jambû ed. omit महाकाव्ये. ७. चरितं च Jambû ed. ८. नाम प्रस्तुतं C2. Jambû ed. ९. इति श्रीहर्षचरितसङ्केते प्रथम उच्छ्वासः C1. C2. Jambû ed.

# ॥ द्वितीय उच्छ्वासः प्रारभ्यते ॥



[1]अतिगम्भीरे भूपे कूप इव जनस्य निरवतारस्य[2] ।
दधति समीहितसिद्धिं[3] गुणवन्तः[4] पार्थिवा घटकाः[5] ॥ १ ॥

रागिणि[6] नलिने लक्ष्मीं[7] दिवसो निदधाति दिनकरप्रभवां ।
अनपेक्षितगुणदोषः परोपकारः सतां व्यसनम् ॥ २ ॥

[8]अतीत्यादि । यस्य क्रोधादिभावगुण इङ्गितादिना परेण न चेत्यते[9] स गम्भीरः । उक्तं च । यस्य प्रसादादाकारात्[10]क्रोधहर्षभयादयः । भावस्थानोपलभ्यन्ते तद्गाम्भीर्यमुदाहृतमिति । अगाधश्चावतरणमवतारः प्रवेशनमवतरन्ति ये नेत्यै[11]त्रावतारः सोपानादिश्च । समीहितसिद्धिं राजगृह आत्मनः प्रवेशलक्षणं जलग्रहणलक्षणं च । गुणा औदार्यादय आकर्षणरज्जवश्च । पार्थिवा राजानः पृथ्वीविकाराश्च । घटयन्ति वाञ्छितेन प्रयोजयन्तीति घटकाः कुम्भाश्च । अनेन तादृशे राज्ञि बाणस्य कृष्ण एव समीहितसिद्धीराध्यास्यत इति सूचितम् ॥ १ ॥

रागिणि रक्ते विषयाश्विङ्गिनि च । लक्ष्मीं शोभां समृद्धिं च । अत्र नलिनादिकमप्रस्तुतं बाणाद्या[12]स्तु प्रस्तुताः । अनेनकृष्ण ईदृशे बाणे राजप्रभवां श्रियं निधास्यतीत्युक्तम् ॥ २ ॥

---

१. ओं अति° A. B. K. T. Jambû ed. गम्भीर इति । अलक्ष्यरोषतोयादिः । अगाधश्चेत्यर्थः C3. २. निरवतारस्य । दुरधिगमस्य निःसोपानस्य चेत्यर्थः C3. ३. समीहितसिद्धिं । राजगृहे प्रवेशं जलग्रहणं चेत्यर्थः C3. ४. गुणवन्तः । वरत्रावन्तः C3. ५. घटकाः । वाञ्छितत्वेन योजकाः कुम्भाश्च C3. ६. रागिणि । रक्ते विषयिणि च C3. ७. लक्ष्मीं । श्रियं शोभां च C3. ८. ओं अतीत्यादि C1. C2. Jambû ed. ९. चोद्यते C2. १०. °क्रोप° C1. ११. नेत्यवतारः C2. Jambû ed. १२. बाणाद्यास्त्वप्रस्तुताः C2. Jambû ed.

अथ नवानवरत[1]वेदाध्ययनध्वनिमुखराणि भस्मपुण्ड्रकपा[2]ण्डुरललाटपट्टैः कपिलशि[3]खाजालजटिलैः कृशानुभिरिव क्र[4]तुलोभादागतैर्ब[5]टुभिरध्यास्यमानानि सेकसुकुमार[6]सोम[7]केदारिकाहरितायमानप्र[8]घणानि कृष्णाजिनविकीर्ण[9]शुष्यत्[10]पुरोडाशीयश्यामाकतण्डुलानि [11]बालिकाविकीर्यमाणनीवारबलीनि शुचिशिष्यशतानीयमानहरितकुशपूलीपलाश[12]समिधीन्धनगोमयपिण्ड[13]कूट[14]संकूटान्या[15]मिक्षीयक्षीरक्षारिणीनामग्निहोत्रधेनूनां खुरवलयैर्विलिखिताजिरवि[16]तर्दिकानि [17]कमण्डलव्यमृत्पिण्डमर्दनव्यग्रयति-

अथेत्यादि बाणो बान्धवानां भवनानि भ्रमन्सुखमतिष्ठदिति सम्बधः । शिखा चूडा ज्वाला च । सोमो यज्ञियं द्रव्यं । केदारिका स्वल्पं क्षेत्रं । प्रघटनेषु तथोचितत्वात् । अहरिता हरिताः संपद्यमाना हरितायमाना लोहितादित्वात्क्यष् । प्रघनान्यङ्गनानि । उशन्ति [18]प्रघनाभिख्यामेकदेशे तु वेश्मनः । पुरोडाशीयेत्यादि सहितेत्यर्थ ईर्यः । [19]बालिका कुमारी । [20]नीवारा अकृष्टपच्या व्रीहयः । कूटो राशिः । आमिक्षीयमिति तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा । आमिक्षा सा शृतोष्णे या क्षीरे स्याद्दधियोगत इति । तस्यै हितमामिक्षीयं । आमिक्षा प्रकृतित्वमस्य न योग्यत्वात् । अग्निहोत्रेषु तस्या अनाम्नातत्वात् । यद्वा । यदन्नस्य जुहुयादिति । तस्या अपि हवनं सम्भवत्येव । वलयैः समूहैः । वितर्दिका वेदिका । कमण्डलुर्मुनिकरकः । तस्मै हिताः कमण्डलव्याः ।

---

१. K. K1. K2. T. Jambû ed. omit वेद. २. पाण्डुललाटैः K. K1. Jambû ed. ३. शिखेति । ज्वालाचूलिकयोः शिखा C3. ४. लोभागतैः K. T. Jambû ed. ५. बहुभि· A. B. ६. सोमेति । वल्लीभेदेत्यर्थः । यस्य यागे रसः पीयते C3. ७. केदारिकेति । लघु क्षेत्रमित्यर्थः C3. ८. प्रघणेति । द्वाराग्रचतुष्किकेत्यर्थः C3 ९. पुष्यत् B आष्यत् K. १०. पुरोडाशीयेति । पुरोडाशेभ्यो हितं पुरोडाशीयम् C3. ११. बालिकेति । कन्येत्यर्थः C3. १२. समिन्धि इन्धन° A. K. T. Jambû ed. १३. कूटेति । कूटं राशिः C3. १४. सङ्कटानि A. १५. आमिक्षीयेति । शृतोष्णदुग्धक्षिप्तं दधिरूपं हविरामिक्षं C3. १६. वितर्दिकेति । वेदीत्यर्थः C3. १७. कामण्डलव्यं K. T. Jambû ed. कमण्डलव्यम् । कमण्डलूनां हितम् C3. १८. प्रघटना° C2. १९. बालिकाः कुमार्यः C1. C2. Jambû ed. २०. निवारी C2.

जनानि [1]वैतानवेदीशङ्क[2]व्यानामौडुम्बरीणां शाखानां राशिभिः पवित्रितपर्यन्तानि वैश्वदेवपिण्डपाण्डुरितप्रदेशानि हविर्धूमधूसरिता[3]ङ्गणविटपिकिशलयानि [4]वत्सीयवत्सपालकलालितललत्तरलतर्णकानि क्रीडत्कृ[5]ष्णसारच्छागशावप्रकटितपशुबन्ध[6]प्रबन्धानि शुकसा[7]रिकारब्धाध्ययनदीयमानोपाध्यायविश्रान्तिसुखानि साक्षात्त्रयीतपोवनानीव चिरदृष्टानां बान्धवानां प्रीयमाणो भ्रमन्भवनानि [8]बाणः सुखमतिष्ठत् ॥

तत्रस्थस्य चास्य कदाचित्कु[9]सुमसमययुगमु[10]पसंहरन्नजृम्भत ग्रीष्माभिधानः [11]फुल्लमल्लिका[12]धवलाट्टहासो महा[13]कालः प्रत्यग्रनिर्जितस्या-

यद्गुगवादितोग्रत् । यतीनां निष्किञ्चनत्वादादरत्वाच्च स्वयङ्करणं । वितानो यज्ञः । तत्र भवा वैतानी यज्ञाग्निकार्यभूः । शङ्कुः कीलकः । तस्मै हितः शङ्कव्यः । औडुम्बरीणामिति तासां यज्ञियत्वात् । वत्सेभ्यो हिता वत्सीयाः । वत्सपरिचार्यार्थितुराः । तर्णकाः सद्योजाता वत्साः । [14]कृष्णसारेति छागविशेषणं । तदुक्तं । लोहितसारङ्गः कृष्णसारङ्गो वेति । सारङ्गशब्दः शबले वर्तते । कृष्णसारा मृगा इति केचित् । तत्तु न तेषां तदानुपयुक्तत्वात् । पशुबन्धा यज्ञाः । कुसुमसमयो वसन्तः । स एव युगं कल्पस्तल्लक्षणं वा युगं मासद्वयं । समुत्फुल्लमल्लिकाभिर्धवलाः । अट्टा विक्रयस्थानानि तेषां [15]विकासो यत्र । अन्यत्र [16]तद्वदट्टहास उद्धतं हसितं यस्य । शब्दशक्तिमूलानुरणनव्यङ्ग्यरूपो ध्वनिश्च प्रकृतवर्णने ह्यन्यदप्यत्र प्रतीयते । न वाच्यतया । तथा च । महाकालः साट्टहासः कल्पमुपसंहरञ्जृम्भते । मुखं च विदारयति । महान्कालो ग्रीष्माख्यो भैरवश्च ।

---

१. वैतानेति । विताने यज्ञे भवेत्यर्थः C3. २. शङ्कव्यानामिति । शङ्कोः कीलकस्य हिताशङ्कव्याः C3. ३. अङ्गन K. K2. T. Jambû ed. ४. वत्सीयबालकलालित° K. T. Jambû ed. ५. कृष्णशार° K. K1. K2. T. Jambû ed. ६. प्रबन्धनानि K2. Jambû ed. ७. शारिका° K. K1. K2. T. Jambû ed. ८. K. K1. K2. T. Jambû ed. omit बाणः ९. कुसुमसमययुगेति । चैत्रवैशाखयोर्युग्मं कल्पश्चC3 १०. उपसंहरन्नुज्जृम्भिधानः A. B. ११. सम्फुल्ल° K.K2. Jambû ed. १२. D.C3. omit धवल°; मल्लिकाट्टहासः । मल्लिकाभिर्धवलान्यट्टानि विक्रयस्थानानि तेषां विकासा यत्र । तद्वद्धवलश्चाट्टहास उद्धतं हसितं यस्य C3. १३. महाकालः । गरीयान्कालो भैरवश्च C3. १४. कृष्णशारेति C1. C2. Jambû ed. १५. विकासाः C2. १६. तदट्टहासः C1.

स्तमुपगतवतो वसन्तसामन्तस्य बालापत्येष्विव पयः[1] पायिषु नवो[2]-द्यानेषु दर्शितस्नेहो[3] मृदुर[4]भूत् । अभिनवोदितश्च सर्वस्यां पृथिव्यां सर्व[5]-कुसुमबन्[6]धनमोक्षमकरोत्प्रतपन्गुणसमयः स्वयमृतुराज[7]स्यागृह्यन्ताभि[8]षे-कार्द्राश्चामरकलापा इ[9]व कामिनीचिकुरचयाः कुसुमायुधेन हिमद-ग्धसकलकमलिनीकोपेनेव हिमालयाभिमुखीं[10] यात्रामदादंशुमाली ।

पयो जलं क्षीरं च । बालापत्यपक्षे नवमुद्यानमुद्गमनं येषां तेषु । इदं प्रथम-तयागमनप्रवृत्तेष्वित्यर्थः । दर्शितस्नेह इत्यनेनास्य विजिगीषु व्यवहार आ-रोपितः । निर्जितस्य च पुनः प्रतिष्ठापनमेव युक्तं । स्नेह आर्द्रता प्रीतिश्च । मृदुरकठोरः सदयश्च । अभिनवोदित इति साधारणं विशेषणं । वासन्तिकपु-ष्पाभिप्रायेण । सकलपदबन्धनवृन्तकारी च । प्रतपन्प्रकर्षेण तपन् । अ-न्यत्र शत्रुहृदयेषु प्रतापं जनयनभिनवोदितश्च राजा बन्धनमोक्षं क-रोति । उक्तं हि । युवराजाभिषेके च[11] परचक्रावरोपणे पुत्रजन्मनि वा मो-क्षो बन्धनस्य विधीयत इति । आदरप्रतिपादनाय स्वयं शब्दः । अभि-षेकः स्नानं । अन्यत्र मङ्गलजलपातनं । तत्सम्पर्क[12]वशाच्चार्द्रत्वं । चिकुराः केशाः । ते हि तदास्नानार्द्रतया सम्यमनात्सुन्दरतया विशेषतः शृङ्गारमुद्दीपयन्ति । तथा च महाकवेः कालिदासस्य । स्नानार्द्रमुक्ते-ष्वनुधूपवासं विन्यस्तसायन्तनमल्लिकेषु कामो वसन्तात्ययमन्दवीर्यः केशेषु लेभे रतिरङ्गनानां । यथा वा राजशेखरस्य । तदा[13] ते स्नाना-नां दरदलितमल्लीमुकुरिणामित्यादि । हिमाभिप्राये च हिमालयग्रहणं । अंशूनमलति धारयतीत्यनेन हिमं प्रतिभवनशीलत्वमस्योच्यते ।

१. पयष्पायिषु A. B. D. पयष्पायिष्विति । पयो जलदुग्धयोः C3. २. नवोद्याने-ष्विति । नवमुद्गमनं च जन्म C3. ३. स्नेहेति । प्रेमार्द्रता च C3. ४. मृदुः । अकठोरः सदयश्च । अनेन विजिगीषु धर्मोदर्शितः । स हि जितमृतानां बालेषु दयां करोति C3. ५. सकलकुसुम° K K1. K2. T. Jambû ed. ६. बन्धनमोक्षमिति । बन्धनानि वृन्तानि तेषां पुष्पेभ्यः पातनं । नवप्रतिष्ठितो राजापि प्रतापवान्बन्धनानि मुञ्चति ७. °राजस्या-भिषेकार्द्राः K. K2. Jambû ed. ८. अभिषेकार्द्राः । अभिलाषोत्पादकत्वात्कामस्तेषु वसतीत्यर्थः । अथ च राज्ञोभिषेकजलच्छटार्द्राणि चामराणि गृह्यते C3. ९. इवागृह्य-न्तकामिनीनां K. K1. K2. T. Jambû ed. १०. °मुखां A. B. ११. वा C2. Jam-bû ed. १२. तत्र सम्पर्क° C2. १३. तदा त्वे C1. Jambû ed.

ललाटन्तपे[1] च तपतितपने [2]चन्दनलिखितललाटिकापुण्ड्र[3]कैरलक[4]चीवरसंवितैः स्वेदोदबिन्दुमुक्ताक्षवलयवाहिभिर्दिनकराराधननियमा इवागृह्यन्त ललनाललाटेन्दुद्युति[5]भिश्चन्दनधूलि[6]धूसराभिरसूर्यम्पश्याभिः[7] कुमुदिनीभिरिव दिवसमसुप्यत[8] सुन्दरीभिर्निद्रालसा रत्नालोकमपि नासहन्तदृशः किमुत जरठातपम्[9]। अशिशिरसमयेन चक्रवाकमिथुना[10]भिनन्दिताः सरित इव तनिमान[11]मनीयन्त [12]सोडुपाः शर्वर्यः। अभिनवपटुपाटलामोदसुरभिपरिमलं न केवलं जलं[13] जनस्य[14] पवनमपि पातुम[15]भिलाषोऽभूत्। दिवसक-

ललाटं तपतीति ललाटन्तप इति। खलु[16] खरतर इत्यर्थः। ललाटेऽलङ्कारो ललाटिका। कर्णललाटात्कन्नलङ्कारे। ललाटिकैव पुण्ड्रकं तिलकमिति सर्वत्र रूपकं। संवितैः प्रावृतैः। चन्दनेन च तद्दत्धूसराः। असूर्यम्पश्याभिरिति। आतपासहिष्णुतयान्यत्र स्वभावाद्दिवसं सुप्यन्त इति। द्रव्यकर्मणि [17]कौलादिविधानात्कर्मणिद्वितीयैव भावेलः। यदा तु कर्माण्याख्याततया विवक्ष्यते तदा दिवसः सुप्यत इति। भाव्यमिति निर्णीतं। स्वापो निद्रा मुकुलता च। जरठं कठोरं। यतो ग्रीष्मेण तनूकृता। अत आह। चक्रवाकेत्यादि रात्रौ किल चक्रवाकानां वियोगो भवतीत्यल्पतया तैस्ता अभिनन्द्यन्ते। सरितश्च वृत्तिकारिकास्तेषामिति तदभिनन्दनं। उडुपः शशी प्लवश्च। क्रमेण चेत्यादौ। एवम्विधे निदाघकाले कठोरीभवति सत्युन्मत्ता मातरिश्वानः प्रावर्तन्तेति सम्बन्धः।

---

१. अथ ललाटान्तपे तपतित° K. T. Jambû ed. २. K. K1. K2. T. Jambû ed. omit चन्दन. ३. पुण्ड्रकैरित्यादि। तपस्यतो हि भस्मपुण्ड्रकाणि। वल्कलवस्त्राणि जपमाला च स्युः C3. ४. अलकचीरचीवर° K. K1. K2. T. Jambû ed. ५. B. D K. T. Jambû ed. omit द्युति° ६. K. K1. K2. T. Jambû ed. omit धूलि. ७. असूर्यम्पश्याभिः। तापभीरुतया सङ्कुचितया च C3. ८. असुप्यत। स्वापो निद्रासङ्कोचश्च C3. ९. जरठमातपं K. K1. K2. T. Jambû ed. १०. अभिनन्दिताः। तनुत्वादेव C3. ११. आनीयन्त K. T Jambû ed. १२ सोडुपाः। सचन्द्राः। प्लवतार्याश्चेति भावः C3. १३. B. omits जलं. १४. जनस्य पवनस्य पवनमपि K. K2. Jambû ed. १५. पातुमभूदभिलाषो दिवस° K. K1. K2. T. Jambû ed. १६. खलु C1. Jambû ed. खलु C2. १७. °कर्मणि लादि° C1. C2. Jambû ed.

रसन्तापात्क्रमेण च खरखेग[2]मयूख[3]खण्डिनशैशवे शुष्यत्सरसि सीद-[4]त्स्रोतसि मन्दनिर्झरे[5]झिल्लीकाझङ्कारिणि [6]कातरकपोतकूजितानुबन्ध-बधिरितविश्वे [7]श्वसत्पतत्त्रिणि [8]करीषङ्कषमरुति विरल[9]वीरुधि रुधिर-कुतूहलिकेसरिकिशोरलिह्यमानकठोरधातकीस्तवके ताम्यत्स्तम्बेरमयू-थ[10]वमथुनिम्यन्महामहीधरनितम्बे [11]दिनकर[12]दूयमानद्विरद[13]दीनवदना[14]श्या-नदानश्यामिकालीनमूकमधुलिहि लोहितायमानमन्दारसिन्दूरितसीम्नि

खगो रविः । शुष्यदिति साभिप्रायं । स्रोतसश्च प्रसरणधर्मत्वादा-ह । सीददिति समन्तादावेगगामिनः । झिल्लीका चीरीनामकः प्राणीयो वर्षासु तरुषु सीत्कारमुच्चैः करोति । कातरेति कपोता हिमे दौमय-त्वान्नितान्तं धर्मासहाः । अत एव पतत्रित्वेपि पृथगुपादानं । पतत्रि-त्वाभिप्रायेण श्वासमित्येतावदेव समुचितमेषां तथा भूतरुजाभावात । करीषा गोमयं । वीरुत्सपर्णशाखाजटिलं कुण्यकादि । किशोरकेति । बा-लत्वेन तृष्णाद्यसहिष्णुता मुग्धतातिशयश्च द्योत्यते । धातकी लताभेदः । स्तवकः पुष्पगुच्छः । स्तम्बेरमो हस्ती । वमथुः करिकर[15]शीकरः । नि-म्यन्त आर्द्रीभवन्तः । नितम्बाः सानवः । द्विरदाः करिणः । दीनं क्षीणं । आश्याना अप्रसरणधर्मकत्वादीषच्छुष्कश्यामिका मदलेखा सम्बन्धिनी । [16]लीना अतितर्षाच्छ्लिष्टाः । मूका गुञ्जितहीनाः । अलोहिता लोहिताभव-न्तो लोहितायमानाः । मन्दाराः पारिभद्रद्रुमाः । सिन्दूरिता आहित-सिन्दूरा इव लोहितत्वात् । ग्रामस्य ग्रामान्तरेण मर्यादा सीमा ।

---

१ °खर° K. T. Jambû ed. खगेति । सूर्यस्यर्थः C3. २. °मयूखे K. T. Jambû ed. ३. खण्डितडिच्छैशवे K1. K2. Jambû ed. ४. श्रोतसि A. B. ५. झि-ल्लिका D. C1. C2. Jambû ed. झिल्लीकेति । चीरिका । तिरिरी इति प्रसिद्धाः C3. ६. कान्तार A. B. ७. विश्वसत् K. K1. K2 T Jambû ed. ८. करीषङ्कषेति । गोमयाग्निः C3. ९. विरुधि B. १०. वमथ्विति । वमथुः करशीकरः C3. वमथुमिति ताम्यन्महा° thus *secunda manu* corrected in A. ११. K. K1. K2. T. Jambû ed. omit दिनकरः; दिनकरकर° A. B. १२. दूयमानाः B. १३ दीनेति । दीनमल्पम् C3. °दीनदानाश्यानश्यामिका° K. K1. K2. T. Jambû ed. १४. श्यानेति । ईषच्छु-ष्कमित्यर्थः C3. १५. °शेखरः C2. १६. लीलाः C2.

सलिलस्यन्दसन्[1]दोहमुह्यन्महामहिषविषाणकोटिवि[2]लिख्यमानस्फुटत्स्फटिकदृषदि घर्ममर्मरित[3]गर्मुति[4]तप्तपांसुकुकूल[5]विकि[6]रणकातरविकिरे विवरशरण[7]श्वाविधे तटार्जुन[8]कुरर[9]कूजाज्वरविवर्तनोत्तानशफरशारपङ्कशेषपल्वलाम्भसि दावजनितजगन्नीराजने र[10]जनीरा[11]जयक्ष्मणि कठोरीभवति निदाघकाले प्रतिदिश[12]माटीकमाना इवोषरेषु प्रपा[13]किटकुटी-

स्यन्दः स्रुतिः। विलिख्यमाना विपाट्यमानाः। मर्मरिताः शुष्कत्वेन शब्दायमानाः। गर्मुतो लताः। कुकूलं तुषाग्निः। विकिराः कुक्कुटाद्याः। श्वाविधः शललाः सेहि[14]काख्या हिंस्राः प्राणिनः। तटशब्देन नैकट्यमाह। अर्जुनाः ककुभवृक्षाः। कु[15]रराः क्रौञ्चपक्षिणः। कू[16]जाशब्द एव सन्तापकारित्वाज्ज्वरस्तेन स्फुरन्तः शफरा मत्स्यास्तैः शारं [17]सितोदरत्वात्पल्वलेन ह्रूले कुररास्तटस्था यदा कूजन्ति तदा मत्स्याः पीडिताः सन्त उ[18]त्प्लवन्तीति वस्तुधर्मोयम्। नीराजनमिति। नीराजनं शान्तिकर्म। राजयक्ष्मा क्षयव्याधिः। शनैः शनैरपचयकारित्वात्। मातरिश्वानः कीदृशाः प्रावर्तन्तेत्याह। प्रतिदिशमित्यादि। आटीकमाना उच्चैर्भ्रमन्तः साभिप्रायमेतत्। रजो वशादेतेषां तथा विधसन्निवेशात्। ग्रीष्मे ह्येवंविधा मारुताः प्रावर्तन्तेति कालधर्मः। उन्मत्तपक्ष आटीकमाना इत्यादिसर्वं वक्ष्यमाणयोग्यतया योजनीयं। उद्धतभ्रमणाद्या ह्युन्मादस्यानुभावाः। तदुक्तं। अनिमित्तहसितरुदितोत्क्रुष्टाबद्धप्रलापशयनोत्थितप्रधावितवृत्तगीतपठितस्मितपांस्ववधूननिर्माल्यचीरघटवत्क्रशरावाभरणस्पर्शनोपभोगैरन्यैश्चाव्यवस्थितचेष्टानुकरणादिभिरनुभावैरभिनयेदिति।

---

१. °सन्देह A. B. सन्दोहसन्देह° K. K1. T. Jambû ed. २. विलिखत् A. B. ३. गर्मुतिः। तृणभेदः C3.; मर्मरितलताविशेषसुवितप्त° marginally noted in A. ४. तप्तपांशु° A. B. ५. कुकूलेति। कुकूलस्तु तुषानलः C3. ६. K. K1. K2. T. Jambû ed. omit विकरण ७. श्वाविधि A. B. K. T. Jambû ed.; श्वाविध इति। मृगविशेषे C3. ८. कुररेति। पक्षिविशेषः C3. ९. कूटाज्व·विवर्तमानः K. K1. K2.; कूटज्वर° T. Jambû ed ; *secunda manu* corrected into कूजत्कुलाज्वर° in A.; कुजाज्वरेति। तत्कुजनान्मत्स्यानां पीडा जायत इति पदार्थः C3. १०. रजनि° B. D. ११. राजयक्ष्मणीति। क्षयनिदानत्वात् C3. १२. आटीकमानाः। उत्प्लवमानाः। तद्विक्षेप्यस्य रेणुतृणादेः क्षारभूदेशेष्वभावात् C3. १३. वाट K. K1. K2. T. Jambû ed. १४. मैहिकाख्याः C2. १५. कुकुराः C2. Jambû ed. कुक्कराः C1. १६. कूटः शब्दः C1. Jambû ed. कूटाशब्दः C2. १७. सितोदरस्वात् C1. १८. उत्स्नवन्ति C2.

पटलप्रकटलुण्टाकाः [2]पङ्ककपि[3]कच्छू[4]गुच्छाछोटनचापलैरकाण्डकण्डूला इव कर्षन्तः शर्करिलाः कर्करस्थलीः [5]स्थूलदृषच्चूर्णमुचो मुचुकुन्दकन्दलदल-नदन्तुराः [6]सन्ततनपनतापमुखरच्चीरीग[7]णशीकरशीक्यमाननवस्तरुण-तरतरणितार्पितरले तरन्त इव तरङ्गिणि मृगतृष्णिकातरङ्गिणीनामलीकवा-रिणि शुष्यच्छमी [9]मर्मरमार[10]वमार्गलङ्घनलाघवजवजङ्घाला रैणवावर्तम-

ऊषरं सिकता बहुलो रूक्षो देशः । प्रपा सत्त्रं । [10]कैटः कुनालं । पटलं छदिः । कपिकच्छुः कण्डूदायको द्रव्यभेदः । अत एवाह कर्षन्त इति । शर्कराः पाषाणकणिका विद्यन्ते यासु ताः शर्करिलाः । पिच्छादि-त्वादिलच् । कर्करस्थली । ऊषरभूः पाषाणभू अत एवाह स्थूलेत्यादिना । मुचुकुन्दं पुष्पभेदः । कन्दलं नवनालं । दन्तुरा इति कपिकच्छुस्पर्शचाल-नेन च ये कण्डूलास्तादृशाश्चूर्णमुचोप्रकटदन्ताः परुषं कषन्ति । [11]शीक्यमा-णाः सिच्यमानाः । तरुणतरः प्रौढः । तरणिरादित्यः । तरन्त इवेति वालु-कावशात्तथा [12]लक्ष्यमाणत्वात् । मृगतृष्णिका मरीचिका तृषितमृगाणां रविरश्मिखचितासु सिकतासु नीलत्वदर्शनाज्जलबुद्धिः । वारिणीति [13]सत-रङ्गे वारिणि ये सभीकास्ते सतापं देशं तरन्ति । उन्मत्तपक्षेपि । [14]विचित्र-त्वेनैवं कारित्वं । शम्योग्निगर्भा वल्लीभेदाः । लाघवं नैपुणं । सव्या या-माश्च विषमं मार्गं लाघवेन तरन्ति । जङ्घाला वेगवन्तः । रैणवावर्ताः पांसुसम्बन्धिन आवर्तनरूपाः सन्निवेशाः । तेषां मण्डली समूहः ।

१. लुण्ठकाः K. K1. Jambû ed. २. प्रपङ्क° K. K1. K2. T. Jambû ed. ३. कच्छु° D. ४. गुच्छच्छटाच्छोटन° K. K1. K2. T. Jambû ed. ५. स्थूलदृशश्चूर्ण° K. T. Jambû ed. स्थूलदषच्चूर्ण° B. ६. समन्ततः पतन्मुखर° K1 K2. Jambû ed.; समन्तन्तस्तन्मुखर° K. T. ७. गणमुखशीकर° K2. T. Jambû ed. ८ तापेति । ये सेकास्ते सतापं देश गच्छन्ति C3 ९. मर्मरमाररवमार्ग° *secunda manu* corrected in A. १०. वाट° C1. ११. शीर्यमाणाः C2. १२. लक्ष्मानत्वात् C2. १३. सतरङ्गीवारिणि C2. १४. विचित्तत्वेनैवं C1. C2. Jambû ed.

ण्डलीरेचकरासरसरभसारब्धनर्तनारम्भारभटीनटा दग्धस्थलीमषीमल-नमलिनाः शिक्षितक्षपणकवृत्तय इव वनमयूरपिच्छनिचयानुबिभ्रन्तः सप्रयाणगुञ्जा इव शिञ्जानजरत्करञ्जमञ्जरीबीजजालकैः सप्ररोहा इवातपातुरवनमहिषनासानिकुञ्जस्थूलनिःश्वासैः सापस्मारा इवोड्डीयमानज-

रेचयति पृथक्करोतीति रेचकं । रेणवावर्तमण्डल्यैरेचकं । तथा रासे रसिते यो रसस्तेन यो रभसस्तद्वशेनारब्धं यन्नर्तनमिव नर्तनं तदारम्भे विषय आरभटीनटा इवारभटीनटा ईरयन्तीत्यरा अराश्च ते भटा अरभटास्तेषामियमारभटीनटजातिविशेषो वीररसप्रधानः । उक्तं च । प्लुष्टावपातप्लुतगर्जितानिच्छेद्यानि मायाकृतमिन्द्रजालं । चित्राणि युद्धानि च यत्र नित्यं तां तादृशीमारभटीं वदन्तीति । नृत्तपक्षे । आवर्ता आवृत्तयः । यदाह मुनिः । यदा नृत्तवशादङ्गं भूयो भूयो निवर्तते । तत्राद्यमभिनेयं स्याच्छेषं नृत्ते नियोजयेदिति । मण्डली नृत्तं हल्लीशकं । यदाह । मण्डलेन तु यन्नृत्तं हल्लीशकमिति स्मृतं । एकस्तत्र तु नेता स्याद्गोपस्त्रीणां यथा हरिरिति । रेचकास्त्रयः कटीरेचको हस्तरेचको ग्रीवारेचकश्चेति । रासलक्षणमष्टौ षोडश द्वात्रिंशद्यत्र नृत्यन्ति नायकाः पिण्डीबन्धानुसारेण तन्नृत्तं रासकं स्मृतमिति । अस्यैव तु हल्लीशकाद्या विशेषाः । क्षपणकवृत्तय इवेति । क्षपणकाश्च मषीमलिनाः । बर्हिपिच्छानि शास्त्रचोदनया वहन्ति । उन्मत्तपक्षे । निर्विवेकतया मयूरपिच्छचय इत्युक्तं प्राक् । गुञ्जन्तीति गुञ्जा ढक्काभेदाः । उन्मत्तानां नृत्तावसरे सर्व एव करतलादि वादयन्ति । शिञ्जानाः शब्दायमानाः । करञ्जो वृक्षभेदः । प्ररोहोऽङ्कुरः । उन्मत्ता अपि खेदान्निःश्वसन्ति । सा-

१. रेचकेति । अस्तं रेचकमर्यैनृत्त रासश्च चतुरस्तं C3. रेचकलासकरसरभसारब्ध ° K1 K2. Jambû ed., रेचकरासकरसारब्ध T. K.; रेचकरासभरस° *secunda manu* corrected in A. २. दावदग्ध° K. K1. K2 T. Jambû ed. ३. A. B. omit मषी ४. मिलन° B. ५. क्षपण° A. B.; क्षपणकेति । क्षपणकाश्च मलमलिनाः । मयूरपिच्छानि वहन्ति C3. ६. T. Jambû ed. omit वन. ७. पिच्छचयानु° K. K1. K2. T. Jambû ed. ८. गुञ्जाः । पठहाः C3. ९. °कुञ्जर° T. Jambû ed. १०. आतपातुर° A. B. ११. आरेचकं C2. १२. इयरतीति C1. Jambû ed. इर्यतीति C2. १३. सुत C2. १४. विवर्तते C1. १५. अतिनेयं C2. Jambu ed. १६. हल्लीमकं Jambû ed.; हलीसकं C1. C2. १७. रासलक्षक्षणं C1. १८ उन्मत्तानां नृत्तानां नृत्तावसरे C2.

वनवीत[1]हरिणपङ्क्तिपाटीपेटकैः सं[2]भ्रकुटय इव दह्यमानख[3]लधानतु[4]सकू-
टकुटिलधूमकोटिभिः सा[5]वीचिवीचय इव महोष्ममुक्तिभिर्लोमशा
इव शीर्यमाणशा[6]ल्मलीफलतूलतन्तुभिर्दद्रु[7]णा इव शुष्कपत्त्रप्रकर-
कर्षिभिः शिराला इव तृणवेणीवि[8]करणैरुच्छ्मश्रव इव धूयमानयवशू[9]-
कशाकलशङ्कुभिर्दंष्ट्राला इव चलितशललसूचीशतैर्जिह्वाला इव वन-

पत्या इवेति । उन्मत्ता अपि श्वाभ्रादिपतनभयादपत्यानि न त्यजन्ति । पे-
टकैर्यूथैः । सं[10]भ्रकुटय इवेति । दह्यमानाभिप्रायेणोक्तं । उन्मत्ता अपि क्रो-
धमाया एव । क्रोधस्य भ्रुकुट्यादयोनुभावाः । ख[11]लधानं क्षोदादिदेशः
क्षुद्यमानं धान्यमित्यन्ये । सस्यस्य ज्वालाभावाद्धूमवर्णनं समुचितं । कुटि-
लपदेन च भ्रुकुटी सादृश्यमाह । अवीचिर्नरकभेदस्तस्य वीचय इव वी-
चयो ज्वालाः । म[12]होष्मेति । उन्मत्ता अपि खेदादिवशादूष्मायन्ते ।
लोमशा इवेति । उन्मत्ता अपि क्षुरकर्म विना लोमशाः । तूलं कर्पासः ।
दद्रुः कुष्ठविकारः सास्यास्तीति दद्रुणः । द[13]द्रौ ह्रस्वत्वं चेति नः । उन्मत्ता
अभ्युद्वर्तनं विना द[14]द्रुयुक्ता भवन्ति । शिरालाः प्रकटस्नायवः । उन्मत्ता
अपि कृशत्वाच्छिराला भवन्ति । वेणी पङ्क्तिः सिरा सादृश्यप्रतिपादनाय
वेणी पदं । श्मश्रुः कूर्चः । शूकाः किंशारवः । उन्मत्ता अपि केश[15]वपना-
भावाद्दीर्घश्मश्रवः । दंष्ट्रा बहिर्निर्गता दन्ताः । शललः श्वावित् । सूची-
दीर्घकण्टकरूपाणि रोमाणि । अन्ये तु दंष्ट्रालाः शललः श्वाविधः पक्षाश्च
शलला उच्यन्ते । तथा च श्वा[16]विधः शललैरिवेति महाभारते दृश्यत इ-
त्याहुः । उन्मत्ता अप्येवमादिविकारेण सर्वं भीष[17]यन्ते । एवं जिह्वाला

---

१. तरहरिण° T. Jambû ed. २ सभ्रुकुटयः K. K1. K2. T. Jambû ed. ३. खलधानेति । खलधानं पुनः खलं । क्षोदादिदेशः C3. ४. कसकूट° B. ५. सावीची-वीचयः A. B. ६. शाल्मलि° T. Jambû ed.; शाल्मलिक K. K1. K2. ७. दद्रुण इव । सदद्रव इवं C3. ८. विकिरणैः K. T. Jambû ed. ९ यवशूकराशकल° A. यवशूकेति । स्यारसस्यशूकं किंशारुः C3. १०. सुभ्रुकुटयः C2. Jambû ed. ११. खलदानं C2. १२. महोष्मेति C2. १३. दद्राह्रस्वत्व C1. Jambû ed.: दद्राह्रस्वत्वं C2. १४. दद्रु° Jambû ed.; दद्रुयुक्तां C2. १५. केशवपनाभावात् C2. १६. श्वाविधाः C2. १७. भीषयते C2.

वैश्वानरशिखाभिरुत्सर्पत्सर्प[1]कञ्चुकैश्चूडाला इव[2] ब्रह्म[3]स्तम्भ[4]रसाभ्यवहरणाय कवलग्रहमिवो[5]र्णैः कमलवन[6]मधुभिरभ्यस्यन्तः सकलसलिलो[7]च्छोषणघर्मघोषणाघोरपटलैरिव शुष्कवेणुवनास्फोट[8]पटुरवैस्त्रिभुवनविभीषिकामुद्भावयन्तश्च्यु[9]तचपलचाषपक्षश्रेणीशा[10]रितमृतयस्त्विषिमन्मयूखलतालातप्लोषकल्माषवपुष इव स्फुटितगुञ्जाफलस्फु[11]लिङ्गाङ्गाराङ्किताङ्गा गिरिगुहागम्भीरभा[12]ङ्कारभीषणभ्रान्तयो भु[13]वनभस्मीकरणाभिचारचरुपचनचतुरा रुधिराहुतिभिरिव पारिभद्रद्रुमस्तवकवृष्टिभिस्तर्पयन्तस्तारवान्वने[14]

अपि । एवमेव स्नानादिना विनोन्मुक्तचूडत्वादुत्सर्पदित्यादि कञ्चुकं त्वक् । ब्रह्मस्तम्भो ब्रह्माण्डः । रसाभ्यवहरणं शोषणं । रसानां च मधुरादीनां भोजनं । असञ्चार्यो मुखे पूर्णे गण्डूषः कवलोऽन्यथा । अभ्यस्यन्तीति । एवमिदं शोषयिष्याम इति । घर्मो ग्रीष्मः । घोषणा श्रावणा । विभीषिकामिति । ये सगर्वा ज[15]गद्ग्रसनशीलास्ते त्रिभुवनेऽपि भयमुत्पादयन्ति । चाषः किकीदिविः पक्षिभेदः । उन्मत्तपक्षे विस्मरणशीलत्वाच्च्युतेत्यादियोज्यं । सृतिर्मार्गः । त्विषिमान् रविः । अलातमुल्मुकं । कल्माषं रक्तकृष्णं । गुञ्जा रक्तिका । उत्पलानि लोहितकृष्णानि भवन्ति । स्फुलिङ्गा अग्निकणाः । अङ्गाराङ्कितानीवाङ्गाराङ्कितानि दग्धान्यङ्गानि । ये च साङ्गारास्ते च मलिनशरीरा भवन्ति । उन्मत्ता अप्यग्निशस्त्रश्व[16]भ्रादिषु बलादतिपतन्ति । भाङ्कारभीषणा भ्रमन्ति च । अभिचार उच्चाटनं । अभिचारिणश्चोच्चाटनमारणाद्यर्थं चरुपचनं कुर्वन्ति । रक्तेन चाग्नीन्प्रीणयन्ति । पारिभद्रा निम्बा मदना इत्यन्ये । उन्मत्ता अपि निर्विवेकतया रक्तादि यत्किञ्चिदशुचिप्रायमग्निषु निक्षिपन्ति । तत एव विश्वस्य दोषाय पर्यवस्यन्ति । ता-

---

१. °सर्पकञ्चुकच्चूडालाः K. K1. K2. T. Jambû ed. २. K. T. Jambû ed. omit इव. ३. ब्रह्म । जगत् C3. ४. °स्तम्ब° A. B. ५. कवलन्यहमिव A. ६. K. K1. K2. T. Jambû ed. omit वन. ७. उच्छोषणघर्मघोषणापटहैरिव K. K1. K2. T. Jambû ed. ८. स्फोटनपटुर° K. T. Jambû ed. ९. च्युतचलचाष° D. K. K1. K2. T. Jambû ed. १०. सारित A. B. ११. स्फुलिङ्गाङ्गारकिताङ्गाः A. B. १२ झाङ्कार° K1. K2. C1. C2. Jambû ed. १३. भु ने K. T. १४. वनविभाव T. Jambû ed.; -वरविभाव K. १५. जगद्भ्रमण° C2. १६ श्वभ्रादिषु C1. C2. Jambû ed.

विभावसूनशिशिरसिकता[1]तारकितरंहसस्तप्तशैलविलीयमानशिला[2]जतुरसलवलिप्त[3]देशदिशो [4]दावदहनपच्यमानचटकाण्डखण्डखचिततरुकोटरकीटपटल[5]पुटपाकगन्धकटवः प्रावर्तन्तो[6]न्मत्ता मातरिश्वानः ॥

सर्वतश्च भूरिभस्त्रा[7]सहस्रसन्धुक्षणक्षुभिता इव जरदजगरगम्भीरगलगुहावाहि[8]र्वायुभिः क्वचित्स्वच्छन्दतृणचारिणो हरिणाः क्वचित्तरुतल[9]विवरविर्वातिनो बभ्रवः क्वचिज्ज[10]टावल्कलावलम्बिनः [11]कपिलाः

रकितमिव रंहो वेगो येषां ते । शिलाजतुरश्मरसः । दावदहनेन पच्यमानानि यानि चटकाण्डानि तेषां विदारणवशात् । स्फुता ये खण्डाः कपालानि तैर्दालात्रदुपरिपतितैः खचितानि कचायमानानि यानि तरुकोटरेषु कीटपटलानि क्रिमिसमूहास्तेषामतिपेशलत्वेन यत एव तप्तैः खण्डैरुपर्याच्छादकतया स्थितैः पुटपाकैः प्र[12]सेवधूमोभ्यन्तरपाकस्तद्गन्धेन कटव उद्वेजकाः । अत्राग्निपाकेन खण्डत्वं खण्डेभ्यो रसनिःसरणात्खचितत्वं कीटानां । उन्मत्ता इति ये चोन्मत्तास्ते सिकताव्याप्ताः कर्दमविलिप्तदिशो गन्धकटवः शाटीकराद्याः पूर्वोक्ताः क्रियाः प्रायेण कुर्वत इति । सर्वत्रात्र महावाक्ये ध्वनिच्छायान्वेष्या । मातरिश्वानो वायवः ।

सर्वतश्चेत्यादौ दावाग्नयः प्रत्यदृश्यन्तेति सम्बन्धः । भस्त्रा दृतिः । स[13]न्धुक्षणमुद्दीपनं । जरठा जगरा वृद्धसर्पाः । गला एव गुहा गलगुहाः । स्वच्छन्दमपविघ्नं । यथा रुचि चरणं भक्षणं गमनं । हरिणाः शुक्ला मृगाश्च । बभ्रवः कपिला नकुलाश्च । इतरत्र जटा मूलानि च । कपिलाः पिङ्गलाः कपिलाख्यमुनिव्रतग्रहणान्मनुष्या एवाभेदोपचारेण कपिलाः । एते च जटावल्कलधा-

१. तरङ्गित A. B. २. जतुरसावलिप्त° A. B. ३ K2. T. Jambû ed. omit देश; °लिप्तदृशः K. ४. दारव° A. B. ५. पुटपाकोत । कीटपटलानां पुटपाकः पच्यमानचटकाण्डखण्डैरेव पुटरूपतया स्थितैरन्तःपचनं C3. ६. उन्मत्ताः । प्रबलाः । अथ चोत्कृष्टमन्दाः श्वानो मातरमपि न त्यजन्तीत्युक्तिलेशः C3. ७. सहस्रेत्यादि । सर्वे हेवाग्निविशेषणानि C3. ८. °वायवः K. K1. K2. T. Jambû ed. ९. विवरवर्तिनः D. K. T. Jambû ed. १०. जटावलम्बिनः T. Jambû ed. जटालम्बिनः K. K1. ११. कपिलाः । पिशङ्गा मुनिविशेषाश्च C3. १२. प्रसूत° C1. C2. Jambû ed. १३. सन्धुक्षणमुद्दीयते C2.

क्वचिच्छकुनि[1]कुलकुलायपातिनः श्येना[2]: क्वचिद्विलीय[3]मानला[4]क्षारस-
लोहितच्छवयोऽधरा[5]: क्वचिदासादितश[6]कुनिपक्षकृतपटुगतयो[7] विशिखाः
क्वचिद्दग्धनिःशेषजन्महेतवो निर्वाणा[8]: क्वचित्कुसुमवासिताम्बरसुरभयो
रागिण[9]: क्वचित्सधूमोद्गारा[10] मन्दरुचय[11]: क्वचित्सकलजगद्ग्रासघस्मराः सभ-
स्मका[12]: क्वचिदवलम्बित[13]वेत्रयष्टयोऽत्यन्तवृद्धा[14]: क्वचिदचलोपयुक्तशिला[15]-

रिणः । कुलाया नीडाः । श्येनाः शुक्लाः पाक्षिकाश्च[16] । अधरा धर्तुमशक्या अधोभवायाः । लाक्षाया विलीनतयापीतत्वात् । ओष्ठाश्चाधराः । आसमन्तात्सादिता आहताः स्वीकृताश्च स्निग्धतया नीरसतया च । शकुनीनां पक्षेषु कृतपटुगतयः । निःसारतयाकालस्थापितत्वात् । विगता शिखा-ज्वाला येषां ते विविधशिखाः शराश्च । निःशेषाः समस्ताः । प्राक्तनजन्मान्तरसञ्चिता अपि जन्महेतवस्तृणाद्याः कर्माणि च । निर्वाणाः शान्ता मोक्षगामिनश्च । कुसुमं धूमः पुष्पं च । अम्बरं नभो वस्त्रं च । रागिणो लोहिताः शृङ्गारिणश्च । अजीर्णकृतोपि धूमोद्गारः । रुचिर्दीप्तिर्भोजनाभिलाषश्च । जगदेव ग्रासः कवलं तद्भक्षण[17]शीलाः । भस्मभूरिकश्चात्यशनव्याधिः । वृद्धा वृद्धिं गताः स्थविराश्च । ते वेणुशिखरमवलम्बन्ते यष्टिं गृह्णन्ति । अचलाः पर्वताः । अन्यत्र क्षयस्य दीर्घकाले[18]पर्यवसायित्वादचलमविच्छिन्नं । भक्षितशिलाक्रयाः । उक्तं च । शिलाधातुप्रयोगाद्वा प्रसादाद्वाथ शाङ्करात् । अजामूत्रप्रयोगाद्वा क्षयः क्षीयेत नान्यथेति ।

---

१. शकुन° K. K1. K2. T. Jambû ed. २. श्येनाः । शुक्लाः पक्षिविशेषाश्च C3. ३. विलीनलाक्षा° K. K1. K2. T. Jambû ed. ४. लाक्षारसा लोहित° K. T. ५. अधाराः A. अधरा. । उग्रा दुर्निवाराश्च C3. ६. शकुन K1. K2. Jambû ed. ७. विशाखाः T. Jambû ed. विशिखाः । विविधज्वाला बाणाश्च C3. ८. निर्वाणाः । विध्याता मोक्षाश्च C3. ९. रागिणः । रक्तवर्णाः कामिनश्च C3. १०. धूमादगाराः A. B. ११. रुचयः । दीप्तिरभिलाषश्च । येषां सधूम उद्गारस्तेषां मन्दा रुचिः स्यात् C3. १२. सभस्मभूरिकाः T. Jambû ed. सभस्मकाः । रक्षा रोगश्च C3. १३. क्वचिद्वेणुशिखरलम्बमूर्तयोऽत्यन्तवृद्धाः K. K1. K2. T. Jambû ed. १४. वृद्धाः । स्थविरा गरिष्ठाश्च C3. १५. शिलाजतवः । रोगपक्षे निरन्तरभक्षितशिलाजतवः । शिलाजतु प्रयोगात्क्षयः क्षीयत इति वैद्यकम् C3. १६. पाज्ञिकाश्च C1. C2. Jambû ed. १७. °शीलः C2. १८. पर्यवसायित्वात् C2. Jambû ed.

जतवः क्षयिणः क्वचित्[1]सर्वरसभुजः पीवानः[2] क्वचिद्दग्धगुग्गुलवो[3] रौद्राः[4] क्वचिज्ज्वलित[5]नेत्रदहनदग्ध[6]सकुसुम[7]शरमदनाः कृतस्थाणु[8]स्थितयः क्वचि[9]-च्चटुल[10]शिखानर्तनारम्भारभटीनटाः क्वचि[11]च्छुष्ककासारसृतिषु[12] स्फुट[13]-क्षीरसनीवारवीजलाजवर्षिभिर्ज्वालाञ्जलिभिरर्चयन्त[14] इव घर्मघृणि[15]-मघृणा इव हठ[16]हूयमानकठोरस्थलकमठवसा[17]विस्रगन्धगृध्नवः स्वमपि

क्षयो विनाशो व्याधिभेदश्च यक्ष्माख्यः । रसः सलिलादिः । अत एव पीवा[18]-नोन्यथा कथं सलिलादिभक्षणशक्तित्वममीषां प्रसज्येत । ये च मधुरादि-सर्वरसानुपभुञ्जते ते स्थूला भवन्ति । रौद्रा भीषणा रुद्रभक्ताश्च । नेत्राणां मूलानां दहनेन दग्धाः । सकुसुमाः काण्डानि मदना वृक्षभेदाश्च यैः । स्थाणुश्छिन्नशाखो वृक्षः शिवश्च । स्थितिः स्थानं व्यवहारश्च । स्थाणुनापि नयनाग्निना सकुसुमशरः कामो दग्धः । चटुलत्वेन नर्तनारम्भो रवश्च । शुष्कत्वाच्चटुलादेरारभटीग्रहणं । कासाराणि नड्वलास्तेषु याः सृतयः । क्वचित्स्मृतय इति पाठः । इतरत्र तु शुष्ककं शुष्कगीतं । मुण्डुमा[19]-द्यासार्यन्त इत्यासारा आसारितानि यद्यपि गीयन्त एव । तथापि वर्धमानमथापीह ताण्डवं यत्र योज्यत इति । ताण्डवं ह्यारभटीप्रधानं । अर्चयन्त इवेति तेषां तदभिमुखत्वात् । घर्मघृणिः सूर्यः । अघृणा अजु[20]-गुप्साः । कमठः कूर्मः । विस्रं स्यादामगन्धि यत् । गृध्नवो लम्पटाः ।

---

१. सर्वान्नरसभुजः T. Jambû ed. २. पीवानः । ये तु सर्वरसान्मधुरादीन्भुञ्जन्ति ते पीवानः पीवराः स्युः C3. ३. गुग्गुला रौद्राः A. B. ४. रौद्राः । भयजनका माहेश्वराश्च C3. ५. नेत्रेति । मूलं नयनं च C3. ६ दग्धकुसुम° A. B. ७ कुसुमशरेति । कुसुमयुताः शरा मदनाश्च तरवः । कुसुमबाणयुतः कामश्च C3. ८. स्थाणुस्थितयः । कीलाकारवस्थानमीश्वरव्यापारश्च C3. ९. K. K1. K2. T. Jambû ed. omit क्वचित्. १०. शिला° K. ११. K. K1. K2. T. Jambû ed omit क्वचित्. १२ सृतिभिः K. K2. Jambû ed. सृतिष्विति । मार्गेषु C3. १३. स्फुटतीरसनीवार° A. १४. अर्थयन्तः A. B. १५. ह्रणिं K. १६. तट° A. B. १७. विस्रगन्धेति । आमगन्धि तु विस्रं स्यात् C3. १८. पीवरः C2. १९. झुण्डुमादि C1. Jambû ed. कुण्डुमादि C2. २०. अजुगुप्साः C2.

धूममम्भोदसमुद्भूति[1]भियेव भक्षयन्तः सतिलाहुतय इव स्फुटद्बहलबाल-कीटपटलाः कक्षेषु[2] श्वित्रिण इव प्लोषविचटद्वल्कल[3]शबलशम्बूकशुक्तयः शुष्केषु सरःसु स्वेदिन इव विलीयमान[4]मधु[5]पटलगोलगलितमधू-च्छिष्टवृष्टयः कानने[6]षु खलतय इव पर्य[7]न्तशीर्यमाणशिखासंहतयो महोषरेषु गृ[9]हीतशिलाकवला इव ज्वलितसूर्यमणिशकलेषु शिलोच्चयेषु प्रत्य[10]दृश्यन्त दारुणा दावाग्नयः ॥

तथा भूते च तस्मिन्नत्युग्रे ग्रीष्मसमये कदाचिदस्य स्वगृ-हावस्थितस्य भुक्तवतोपराह्णसमये स भ्राता पारशवश्चन्द्रसे-ननामा प्रविश्याकथयत् । एष खलु देवस्य[11] चतुःसमुद्राधिपतेः सकलराजचक्रचूडामणिश्रेणीशाणकोणकषणनिर्मलीकृतचरणनखमणेः सर्वचक्रवर्तिनां धौ[12]रेयस्य महाराजाधिराजपरमेश्वरश्रीहर्ष[13]स्य भ्रात्रा कृष्णनाम्ना भ[14]वतामन्तिकं प्र[15]ज्ञाततमो दीर्घाध्वगः प्रहितो द्वारमध्या-स्त इति । सोब्रवीदायुष्मन्नविलम्बितं प्रवेशयैनमिति । अथ तेनानी-

स[16]मुद्भूतिः सम्भारः । धूमात्किल मेघोत्पत्तिर्मेघाः शमयन्ति । कीटाः क्रिमयः । प्लोषः दाहः । वल्कलशब्दस्त्वगुपलक्षणार्थः । शम्बुकाः शुक्तिमन्तः प्राणिभेदाः । मधुपटलगोलो माक्षिककरण्डः । मधूच्छिष्टं सिक्थकं । खलतयः खल्वाटाः । शिखा ज्वाला चूडा च । ऊषरं सिकता बहलो रूक्षो देशः । शिलोचयो गिरिः । दावो वनगतो[17] वन्हिर्दावश्च वनमुच्यते ।

तथा भूतदेश इत्यादिनात्मानं प्रति तेषामादरातिशयं दर्शयति । आकुर्वत इति । न त्वप्रस्तावं एतेन स्वस्य किमपि माहात्म्यमाह । स्व[18]यमवस-रमन्तरेण वातस्य तदा प्रवेशाभावात् । एतदेव देवस्येत्यादिविशेष-णसन्दर्भमुखेन द्वारमध्यास्त इत्यनेन पोषयिष्यते । पारशवः शूद्रापुत्रः । शाणो मणिकषणं । कोणोश्रिः । चक्रवर्तिनः सार्वभौमाः । धौरेयो मुख्यः । प्रज्ञाततमोतिप्रतीतः । एतेन च बाणं प्रति बहुमान एव गम्यते ।

---

१. सम्भूति A. B. २. कक्ष्येषु K. T. Jambû ed. ३. धवल K. K1. K2. T. Jambû ed. ४. विदीर्यमाण° A. B. ५. A. B. omit पटल. ६. कानकेषु B. ७. D. omits °पर्यन्त. ८. शिखोति । वेणी ज्वाला च C3. ९. D. omits गृहीत. १०. अदृशन्त A. B. ११. देवदेवस्य K. K1. K2. T. Jambû ed. १२. धौरेयस्य श्रीहर्षस्य A. B. १३. श्रीहर्षदेवस्य K. १४. भवतोन्तिकं A. B. १५. प्रज्ञाततम. । अतिविख्यातः C3. १६. सम्भूतिः C2. १७. वन्हिगतः C1. C2. Jambû ed. १८. स्वयमवसरं Jambû ed. स्वयमवसरत्यन्तरेण C2.

यमान[1]मतिदूरागमनगुरुजड[2]जङ्घाकाण्डं [3]कार्दमिकचेलचीरिका [4]निय-मितोच्चण्डचण्डातकं [5]पृष्ठप्रेङ्खत्पटच्चरकर्पटघटित[6]गलग्रन्थिमतीं[7]निविडः सूत्रब[8]न्धनिर्मितान्तरालकृतलेखत्यवच्छेदया लेखमालिकया [10]परिक-लितमूर्धानं [11]प्रविशन्तमद्राक्षीत् । अप्राक्षीच्च दूरादेव [12]भद्र भद्रमशे-षभुवननिष्कारण[13]बन्धोस्तत्र भवतः कृष्णस्येति । स भद्रमित्युक्त्वा [14]प्रणम्य नातिदूरे समुपाविशत् । विश्रान्तश्चाब्रवीदेष खलु [15]स्वामिनो मा-ननीयस्य लेखः प्रहित इति वि[16]मुच्यार्पयत् । [17]बाणस्तु [18]सादरं गृहीत्वा [19]स्वं-यमेवावाचयत् । मे[20]खलकात्सन्दिष्टमवधार्यफलप्रतिबन्धी[21]धीमता परिहर-णीयः कालातिपात इत्ये[22]तावदर्थजातमितरद्वार्त्ता[23]सम्पादनमात्रकमवधृतले-

जडा गमनासक्ताः। कर्दमेन रक्तं कार्दमिकं। चेलं वस्त्रं। चीरिका खण्डिका। उच्चण्डमुच्चं। गाढमित्यन्ये। चण्डातकमर्धोरुकं वासः। पटच्चरं जीर्णवस्त्रं। निर्मितं नमितं। लेखमालिकेत्यन्यैरपि तद्धस्ते लेखः प्रहित इति परागतः सम्बन्धः। परिकरितेति पाठे वेष्टित इत्यर्थः। तत्र भवतः पूज्यस्य। नातिदूर [24]इत्यति तु दूर एवेति। सर्वत्रैव स्वस्य प्रभावातिशयं प्रति-पादयति। फलं प्रतिबध्नाति रुणद्धीति फलप्रतिबन्धी। कालाति-पातः कालात्ययः। अर्थजातमभिधेयप्रकारः। अवधृतो ज्ञातः।

---

* १. अतिदूरगमन T. Jambû ed. अतिदूरगुरु° K. २. °जङ्घं K. K2. Jambû ed. ३. कार्दमिकेति। कर्दमेन रञ्जितं वस्त्रं C3. ४. नियमिता चण्ड° A. B. ५. पृष्ट° A. B. K. ६. गलित T. Jambû ed, omitted in K. K1. ७. निविडसूत्र° K. निविडस्तन्त्रबन्ध° A. B. ८. निम्नित° K. T. C1. C2. Jambû ed. ९. K. T. Jambû ed. omit लेख. १०. परिकरित A. B. ११. प्रविशन्तं लेखहारक-मद्राक्षीत् K1. K2. Jambû ed. १२. A. B. omit भद्र. १३. बन्धोमूत्र A. १४. प्रणम्यातिदूरे K. T. Jambû ed. १५. स्वामिना A. B. १६. विमुच्य चार्पयत् K. K1. K2. T. Jambû ed. विमुच्येति। लेखमालिकायाच्छोटयित्वे-त्यर्थः C3. १७. अथ बाणः K. T. Jambû ed. १८. A. B. omit. सादरं, K. reads सादनं. १९. स्वयमवाचयत् A. B. २०. मेखलाकानुसन्दिष्ट A. २१. धीमद्भिरपहरणी-यः K. T. Jambû ed. २२. एतावदत्रार्थ K. K1. K2. T. Jambû ed. २३. सम्वादन K. K2. Jambû ed. २४. अपि C2.

स्वार्थश्च समुत्सारितपरिजनः सन्देशं पृष्टवान् । मेखलकस्त्ववादीत् । एवमाह मेधाविनं स्वामी जानात्येव मान्यो यथैकगोत्रता वा [1]समानज्ञानता वा समानजातिता वा [2]सहसम्वर्धनं वा । एकदेशनिवासो वादर्शनाभ्यासो वा परस्परानुरागश्रवणं वा परोक्षोपकारकरणं वा समानशीलता वा स्नेहस्य हेतवस्त्वपि तु विना कारणेनादृष्टेपि [3]प्रत्यासन्ने बन्धाविव बद्धपक्षपातं किमपि स्निह्यति मे हृदयम् । दूरस्थितेपीन्दोरिव कुमुदाकरे यतो [4]भवन्तमन्तरेणान्यथा [5]चान्यथा चायं चक्रवर्ती दुर्जनैर्ग्राहित आसीत् । न च तत्तथा न सन्त्येव [6]हि ते येषां सतामपि [7]सतां न विद्यन्ते मित्रोदासीनशत्रवः । शिशु[8]श्चापलापराचीनचेतोवृत्तितया च भवतः केन[9]चिदसहिष्णुना यदेव किञ्चिदसदृशमुदीरितं[10]मितरलोकस्तथैव तद्गृह्णाति वक्ति च [11]सलिलानीव खलु गतानुगतिकानि [12]लोलानि भवन्त्यविवेकिनां मनांसि बहुमुखश्रवणनिश्चलीकृत[13]निश्चयश्च किं [14]करोतु पृथिवीपतिः । तत्त्वान्वेषिभिश्चास्माभिर्दूरस्थितोपि प्रत्यक्षीकृतोसि [15]विज्ञप्तश्चक्रवर्ती त्वदर्थे यथा प्रायेण प्रथमे वयसि सर्वस्यैव चापलैः शैशवमपराधीति

एकेत्यादिकारणमुत्तरोत्तरमप्रधानं । अन्यथा चान्यथा चेति । एतेन किञ्चिदेव सम्भवतीति दर्शयति । अत एवाह न च तत्तथेति । तथा त्वे तु बाणस्य दुर्वृत्तता प्रसज्येत । कृष्णस्यापि तादृशः पक्षपातः स्वामिप्रतारणादि च दोषायैव भवेत् । अत एव वक्ष्यति । तत्त्वान्वेषिभिरित्यादि ग्राहित इत्येतावति वक्तव्ये । आसीदित्यनेन दुर्जनाः [16]सम्प्रतिनिरवकाशा इति प्रतिपादितं । अत एव वक्ष्यति । अत एव च प्रतिपन्नं स्वामिनेति । सतां साधूनामपि । सतां भवतां । उदासीनो मध्यस्थः । अपराचीनापराङ्मु-

१. A. B. K. Jambû ed. omit समानज्ञानता वा. २. समं सम्वर्धनं वा K. T. Jambû ed. ३. प्रत्यासन्नेवा K. K1. K2. T. Jambû ed. ४. भवन्तमिति । भवन्मध्ये भवन्तमुद्दिश्येत्यर्थः C3, K. K2. Jambû ed. omit यतः ५ K. T. Jambû ed. omit चान्यथा चायं. ६. K. K1. K2 T. Jambû ed. omit हि. ७. सत्यं A. B. ८. चापलपराधीन A. B. K. °च्चित्तवृत्तितया K2. T. Jambû ed. ९. यत्किञ्चिन् K. K1. K2. T. Jambû ed. १०. इतरो लोकः K. T. Jambû ed. ११. सलिलानीव गतागतिकानि लोलानि [लोकानि K.] खलु K. K1. K2. T. Jambû ed. १२. A. B. omit लोलानि. १३. निश्चयः किं K. T. Jambû ed. १४. करोढः D. १५. विज्ञप्तश्च चक्र° D. १६. सम्पत्ति° C2. Jambû ed.

[1]तथेति च स्वामिना प्रतिपन्नमतो भवता राजकुलमकृतकालक्षेपमागन्[2]तव्यमवकेशीवा[3]दृष्टपरमेश्वरो [4]बन्धुमध्य[5]मधिवसन्नपि न मे बहुमतो न च सेवा[6]वैषम्यविषादिना परमेश्वरोपसर्पणभीरुणा [7]वा भवता भवितव्यम् । यतो यद्यपि ॥

[8]स्वेच्छोपजातविषयोपि न याति वक्तुम्
[9]देहीति [10]मार्गणशतैश्च ददाति दुःखम् ।
मोहात्समाक्षिपति जीव[11]नमप्यकाण्डे
[12]कष्टं मनो भव इवे[13]श्वरदुर्विदग्धः ॥

खी । चेतो वृत्तिर्यस्याः । अवकेशी निष्फलतरुः । स चादृष्टरविस्तरुमध्यगो न कस्यचित्प्रियः । स्वेच्छोपजाता विषया मण्डलानि यस्मात्तादृगपि देहि प्रयच्छेति वक्तुं न पार्यते । इतरत्र स्वेच्छया स्वसङ्कल्पेनोपजात उत्पन्नो विषयो गोचरो यस्य । तथा चोच्यते । कामजानामिति मूलं सङ्कल्पात्किल जायस इति । अथ च स्वेच्छाया उपजाता विषया यस्यायं देही च शरीरवानिति वक्तुं न याति न शक्यत इति विरोधः । कामश्चानङ्गत्वाद्देही शरीरवानिति वक्तुं न युज्यत इत्यन्यार्थः । मार्गणा याचकाः शराश्च मार्गणाः । जीव्यते नेनेति जीवनं ग्रामादि जीवितं च । ईश्वरो राजा हरश्च । दुर्विदग्धो [14]दुरूढो दुष्टत्वाद्विशेषेण दग्धश्च ।

---

१. तथेति च प्रतिपन्नं स्वामिना K. T. Jambû ed. २. °गन्तव्यमब्धौ शशीव A. B. ३. अदृष्टेति । राजा हरश्च C3. ४. बन्धुमध्यमिति । स्वजनाः कौस्तुभादयश्च C3. ५. °मध्यवसन्नासि मे बहुमतः K. T. Jambû ed. ६. °विषादिना वा K. T. Jambû ed. ७. K. T. Jambû ed. omit वा. ८. स्वेच्छोपजातविषयः । स्वेच्छया यथेच्छं यद्यपि विषया देशाः सम्पन्नास्तथापणतयावितरति वक्तुं न शक्नोति । अन्यत्र स्वेच्छायाः शब्दादयो विषयाः स्मरस्य जाताः कथमहं शरीरीति वक्तुंनशक्नोति । न हि देह विना विषयभोग इति विरोधः । परिहारे तु स्वसङ्कल्पेन स्मरस्य प्रवृत्तिः । अत एव न शरीरवान् । कामपक्षेहमित्यध्याहार्यमिति पदार्थः C3. ९. देहीति । देहो देहवान् । पक्षे देहीति क्रियापदं C3. १०. मार्गणेति । याचनानि शराश्च C3. ११. जीवनमथकाण्डे A. B. जीवनं । वृत्तिर्जीवितं च C3. १२ कष्टोमनोभव इव A. B. १३. ईश्वरेति । राजा हरश्च C3. १४. दुरूढः C1. C2. Jambû ed.

तथाप्यन्ये ते भूपतयोऽन्य एवायं न्यक्कृतनृगनलनिषध[1]नहुषा[2]म्बरीषदशरथदिलीपनाभागभरतभगीरथययातिरमृतमयः[3] स्वामी नास्याहङ्कारकालकूटविष[4]दिग्धदुष्टाद्दृष्टयो न गर्वगरगुरुगलग्रहगदगद्गदा[5] गिरो नाति[6]स्मयोऽपस्मारविस्मृतस्थैर्याणि स्थानकानि नोद्दामदर्पदाहज्वरवेगविकृता [7]विकारा नाभिमानमहासन्निपातनिर्मितानङ्गभङ्गानि तानि न मदा[8]र्दितवक्रीकृतौष्ठ[9]पृष्ठ[10]निष्ठ्यूतनिष्ठुरा[11]क्षराणि जल्पितानि तथा चास्य विमलेषु साधुषु रत्नबुद्धिर्न शिला[12]शकलेषु मुक्ताधवलेषु गुणेषु प्रसाधनधीर्नाभरणभारेषु दान[13]वत्सु कर्मसु साधनश्रद्धा न करि[14]कीटेषु सर्वा[15]शा[16]ग्रे सरे यशसि महाप्रीतिर्न जीवितजरत्तृणे गृहीतकरासु[17]

अमृतेत्यादि साभिप्रायं । यस्मादहङ्कारादि कालकूटादिनारूपयत्यतश्चाहङ्कारादीनामत्यन्ताभावप्रकाशनेच्छया । अमृतमयमस्य दर्शयति । अमृतमयस्य च कालकूटादिभिर्न योगः । गरं विषं । स्मयो गर्वः । स्थानकानि स्थितयः । अर्दितं वातव्याधिभेदः । तस्मिन्सति मुखं वक्रं भवति । तथा चोक्तं । वायुः प्रवृद्धस्तैस्तैश्च वातलैरूर्ध्वमाश्रितः । वक्रीकरोति वक्तारमुक्तं हसितमीक्षितमिति । निष्ठ्यूतानि निर्गतानि । विमलेष्वपायेषु[18] । अन्यत्र सुच्छायेषु[19] । पद्मरागादिष्विति वक्तव्ये शिलेत्यादि पदमादरार्थं । एवमुत्तरत्रापि वाच्यं । मुक्तवत्ताभिश्च धवलास्तेषु गुणेष्वौदार्यादिषु च सूत्रेषु च । प्रसाधनं प्रकृष्टं साधनमर्जनं भूषणं च दानं । धनत्यागो मदश्च । साधनं सम्पादनं सैन्यं च । साध्यतेऽनेनेति कृत्वा । आशा दिशश्चेतो वाञ्छा च । करो

१. निषद K.T. Jambû ed. २. नघुष A. B. ३. अमृतमयः । मृता नृगादयस्तन्मयो न । यद्वा सुधामयः । नास्येत्यादिनामृतत्वं समर्थयते । तदुपयोगे कालकूटादिविकारासम्भवात् C3. ४. °दग्ध° T Jambû ed. ५. गर्वगदगुरुगरगलग्रहगद्गदाः T. Jambû ed. गर्वगुरुगरगलग्रहगद्गदाः K. K1. ६. नातिस्मयापस्मार° A. B. ७. विकारेति । चेष्टा विशेषाः C3. ८. मदार्दितेति । वातव्याधिरर्दितं C3. ९. °कृतोष्ठनिष्ठ्यूत° K. T. Jambû ed. १०. °पृष्ट° A B. ११. °निष्ठुरा° A.B. १२. शिलाशकलेष्विति । अनादरख्यापनार्थं पद्मरागादीति वक्तव्ये शिलेत्युक्तं । एवं भारादिशब्दा अपि C3. १३. दानवत्स्विति । दानं वितरणं मदश्च C3. १४ करिकटेषु K2. T. Jambû ed. करिकरटेषु *secunda manu* corrected in A. १५. सर्वाग्रे सरे K.T. Jambû ed. १६. आशेति । दिगभिलाषश्च C3. १७. °करास्वाशासु प्रसाधना° K. K1. K2 T. Jambu ed. करेति । राजदेयांशो हस्तश्चेत्यर्थः C3. १८. अपायेषु C2. Jambû ed. १९. सच्छायेषु C3.

दिक्षु [1]प्रसाधनाभियोगो न निजकलत्र[2]धर्मपुत्रिकासु गुणवति धनुषि सहायबुद्धिर्न पिण्डोपजीविनि सेवकजने । अपि चास्य मित्रोपकरणमात्मा भृत्योपकरणं प्रभुत्वं पण्डितोपकरणं वैदग्ध्यं बान्धवोपकरणं लक्ष्मीः कृपणोपकरणमैश्वर्यं द्विजोपकरणं सर्वस्वं सुकृत[3]स्मरणोपकरणं हृदयं धर्मोपकरणमायुः साहसोपकरशरीरमसिलतोपकरणं पृथिवी विनोदोपकरणं राजकं प्रतापोपकरणं प्रतिपक्षो नास्याल्पपुण्यैरवाप्यते सर्वातिशायिसुखरसप्रसूतिः पादपल्लवच्छायेति श्रुत्वा च तमेव चन्द्रसेनं समादिशत्कृत[4]कशिपुं विश्रान्तसुखिनमेनं कारयेति ॥

दण्डः पाणिश्च । प्रसाधनं सम्पादनं दण्डश्च । गुणो ज्या शौर्याद्याश्च गुणाः । उपक्रियन्ते नेनेत्युपकरणमुपयोगः । आत्मेति न हि मित्राणि मित्रव्यतिरेकेण बान्धवादिव लक्ष्म्यादि किञ्चिदपेक्ष्यन्ते । प्रभुत्वमिति तस्य [5]प्रभुत्वं सेवकादीनां दानसम्पादनादि । यथाह । यथा कालं प्रवर्तन्ते । पण्डितेत्यादि । वैदग्ध्यमात्रापेक्षया पण्डितानां [6]क्षपणादिवदर्थादनपेक्षितया हि तेषामौचित्यं न प्रतीयते । अनेन पण्डितसामान्यात्तदभिप्रायेण स्वस्य समुचितमेव [7]हेवाकमभिव्यनक्ति । वैदग्ध्यापेक्षित्वं दर्शयतीति यावत् । बान्धवाः कुल्याः । लक्ष्मीश्छत्रचामरादि प्रतिपत्तिरूपा[8]च्छत्रादिवत्तुल्या एव लभन्तेन्येषामनर्हत्वात् । कृपणेत्यादि कृपणानां पोषणमेव समुचितं । तत्र चैश्वर्यमेव हेतुः । ऐश्वर्यमर्थवत्ता न तु द्विजातिवदे ते सर्वस्वमहन्ति सर्वशब्देन दारा अप्युच्यन्ते । एवमादि तु द्विजा एव लभन्ते । तद्व्यतिरेकेणान्येषामनर्हत्वात् । एवं हृदयादि तत्तदभिप्रायेण विचारणीयं सुखमेवास्वाद्यतया रस [9]इव रसः सुखरसश्छाया कान्तिः । यद्वा छायावत्वमेषां सर्वस्य कस्यचिदाश्रयणीयत्वादुपचर्यते । अल्पेत्याद्यभिप्रायेण पादयोः कल्पवृक्षतुल्यत्वमभिव्यज्यते । पुण्यवशात्तदवाप्तेः । एतत्पक्षे छाया आतपप्रतिपक्षजातिः । भोजनाच्छादने सद्भिरुभे कशिपुरुच्यते ।

---

१. प्रसाधनेति । प्रकृष्टं साधनमजर्नं मण्डलं चेत्यर्थः C3. २. °चर्मपुत्रिकासु A. B. K. Jambû ed. ३. संस्मरणोपकरणं K. K1. K2. T. Jambû ed. ४. कशिपुमिति । भोजनाच्छादनमित्यर्थः C3. ५. प्रभुत्वे C2. ६. क्षपणादिवदर्थादनपेक्षितया C2. ७. हेवाकोभिलाषः marginally noted in C1. ८. °च्छत्रादिवनतुल्याः C2. ९. एव C1. C2 Jambû ed.

[1]अथ गते तस्मिन्पर्यस्ते च वासरे [2]सङ्कुटमानरक्तपङ्कजसम्पुटपीयमान इव क्षयिणि [3]क्षामतां व्रजति बाल[4]वायसास्यारुणेपराह्णातपे शिथिलितनिजवाजिजवे जपापीड[5]पाटलिम्न्यस्ताचलशिखरस्खलिते खञ्जतीव कमलिनीकण्टकक्षतपादपल्लवे पतङ्गे पुरः परापतति प्रेङ्खदन्धकार[6]लेखालम्बालके शशिविरहशोकश्याम इव श्यामामुखे कृतसन्ध्योपासनः शयनीयमगात्। अचिन्तयच्चैकाकी किं करोम्यन्यथा सम्भावितोस्मि राज्ञा निर्निमित्तबन्धुना च सन्दिष्टमेवं कृष्णेन कष्टा च सेवा [7]विषमं भृत्यत्वमतिगम्भीरं महद्राजकुलं [8]न च मे तत्र पूर्वजपुरुषप्रवर्तिता प्रीतिर्न कुलक्रमागता गतिर्नोपकारस्मरणानुरोधो न बालसेवास्नेहो न [10]तन्त्रगौरवं न पूर्वदर्शनदाक्षिण्यं न प्रज्ञासंविभागोपप्रलोभनं न विद्यातिशयकुतूहलं नाकारसौन्दर्यादरो न सेवाका[11]कुकौशलं न विद्वद्गोष्ठी[12]बन्धवैदग्ध्यं न वित्तव्ययवशीकरणं न राजवल्लभपरिचयोवश्यं गन्तव्यं [13]च सर्वथा [14]भगवान्भवानीपति[15]र्भुवनपतिर्गतस्य मे [16]शरणं सर्वं [17]साम्प्रतमेवाचरिष्यतीत्येवमवधार्य गमनाय मतिमकरोत्।

वायसः काकः। जपा रविप्रियं पुष्पं। आपीडः स्तवकः। कोत्रास्तेत्यादि स्वरूपकथनं। क्षतपादपल्लवत्वादुत्प्रेक्षणं। खञ्जतीवेति यथ खञ्जति स शिखरप्राये विषमे पथि। ये पुनरस्ताचले शिखरस्खलनकारणकं खञ्जनमित्युत्प्रेक्षयन्ते। तान्प्रतिकमलिनीत्यादि निरर्थकं। खञ्जतीव स्खलतीव। पुरः पूर्वस्यां दिशि। श्यामा रात्रिर्योषिच्च। मुखमारम्भो वदनं च। निर्निमित्तेत्याद्यभिप्रायेण वक्ष्यति। अवश्यं गन्तव्यं चेत्यादि। काकुः स्त्रियां विकारोयः शोकभीत्यादिभिर्ध्वनेः। इह च लक्षणया वक्रोक्तिः। साम्प्रतं युक्तं।

---

१. अथ गते च K. T. Jambû ed. २. सङ्कुटमान° K1. K2. Jambû ed. ३. क्षयितां A. B. ४. वायसारुणे° T. Jambû ed. ५. पाटलेस्ताचल° K. T Jambû ed. ६. लेशलम्बालके K. K1. K2. T. Jambû ed. ७. विषमं च K. K1. Jambû ed. ८. न तत्र मे T. Jambû ed. ९. K. K1. K2. T. Jambû ed. omit पुरुष. १०. गोत्रगौरवं K. K1. K2. Jambû ed. तन्त्रगौरवमिति। प्रधानगौरवमित्यर्थः C3. ११. काक्विति। वक्रोतीत्यर्थः C3. १२. बद्ध A. B. १३. K. T. Jambû ed. omit च १४. भगवान्पुरारिर्भुवनगुरुर्गतस्य K1. K2. T. Jambû ed. भगवन्पुराराति: K. १५. भुवनमतिगतस्य A. १६. K. T. Jambû ed, omit शरणं १७. साम्प्रतमाचरिष्यतीत्यवधार्य D. K. T. Jambû ed.

अथान्यस्मिन्नहन्युत्थाय प्रातरेव स्नात्वा धृत[1]धौतधवलदुकूलवासा गृहीताक्षमालः प्रास्थानिकानि सूक्तानि मन्त्रपदानि च बहुशः समावर्त्य देवदेवस्य [2]विरूपाक्षस्य क्षीरस्नपनपुरः सरां सुरभिकुसुमधूपगन्धध्वजबलिविलेपन[3]प्रदीपबहुलां विधाय परमया भक्त्या पूजां [4]प्रथमहुततरलतिलत्वग्विघटनचटुलमुखरशिखाशेखरं [5]प्राज्याज्याहुतिप्रवर्धितदक्षिणार्चिषं भगवन्तमा[6]शुशुक्षणिं हुत्वा दत्त्वा द्युम्नं यथा विद्यमानं द्विजेभ्यः प्रदक्षिणीकृत्य प्राङ्मुखीं [7]नैचिकीं शुक्लाङ्गरागः शुक्लमाल्यः शुक्लवासा [8]रोचनाचित्रदूर्वाग्रपल्लवग्रथितगिरिकर्णिकाकुसुम[9]कृतकर्ण[10]पूरकः शिखासक्तसिद्धार्थकः पितुः कनीयस्या स्वस्रा मात्रेव स्नेहार्द्रहृदयया श्वेतवाससा साक्षादिव भगवत्या [11]महाश्वेतया मालत्याख्यया कृतसकलगमनमङ्गलो दत्ताशीर्वादो बान्धववृद्धाभिरभिनन्दितः परिजनजरतीभिर्वन्दित[12]चरणैरभ्यनुज्ञातो गुरुभिरभिवादितैराघ्रातः शिरसि कुलवृद्धैर्वर्धितगमनोत्साहः [13]शकुनैर्मौहूर्तिकमतेन कृतनक्षत्र[14]दोहदः शोभने मुहूर्ते

अथेत्यादावन्यस्मिन्नहनि [15]प्रीतिकूटान्निरगादिति सम्बन्धः। प्रस्थानं प्रयोजनं येषां। तानि प्रास्थानिकानि सूक्तानि वेदोक्ता मन्त्रविशेषाः। विरूपाक्षस्त्र्यक्षः। प्राज्यं भूरि। आज्यं घृतं। द्युम्नं धनं। यथा विद्यमानमित्यनेन निर्लोभतोक्ता। नैचिकीं वरांगीं होमधेनुं वा शुक्लां वा। गिरिकर्णिकाश्वखुरी मङ्गल्यौषधिः। सिद्धार्थका निसर्षपाः। स्वस्रा भगिन्या। महाश्वेता देवताविशेषो [16]रविस्थदेवतेत्यन्ये। दत्तेत्यादि बान्धववृद्धाभिप्रायेण समुचित एवमभिनन्दित इति प्रतिपदं द्वयमूह्यं [17]जरत्यो वृद्धाः। आघ्रातः शिरसि चुम्बितः। मौहूर्तिका गणकाः। नक्षत्रदोहदं प्रतिनक्षत्रप्राशनं नक्षत्रविषयोभिलाषो वा।

---

१. K. K1. K2.T. Jambû ed. omit धौत. २. विश्वरूपाक्षस्य D. ३. प्रक्षेपक K. T. Jambû ed. ४. प्रथमबहुततरलतिल° D. प्रथमबहुतरतिल° A. ५. प्राज्याहुति° K2. T. Jambû ed. ६. आशुशुक्षणि। वह्नि C3. ७. नैचिकी नूत्तमा गोषु C3. ८. रोचाश्चित° K2. T. Jambû ed. ९. A. B. omit कृत. १०. पूरकशिखा° A. B. पूरःशिखा° K. K2 T. Jambû ed. ११ महाश्वेतयेति । महाश्वेता रविबिम्बमध्यस्थिता देवता C3. १२. °श्चरणैरभ्यनुज्ञातः B १३. शकुनिर्मौहूर्तिक° B. १४. दोहदः। अभिलाषः C3 १५. प्रीतिकूटं निरगात् C2. १६. रविस्था देवतेत्यन्ये C2. १७. जरत्या C2. Jambû ed.

हरितगोमयोपलिप्ताजिरस्थण्डिलस्थापितमसितेतरकुसुममालापरिक्षिप्त[1]कण्ठं [2]दन्तपिष्टपञ्चाङ्गुलपाण्डुरं [3]मुखनिहितनवचूतपल्लवं पूर्णकलशा[4]मीक्षमाणः प्रणम्य कुलदेवताभ्यः कुसुमफलपाणिभिर[5]प्रतिरथं जपद्भिर्निजद्विजैरनुगम्यमानः प्रथमचलितदक्षिणचरणः प्रीतिकूटान्निरगात् ॥

प्रथमेऽहनि [6]तु घर्मकालकष्टं [7]निरुदकं निष्पत्रपादपविषमं पथिकजन[8]र्नमस्क्रियमाणप्रवेशपादपोत्कीर्णकात्यायनीप्रतियातनं शुष्कमपि पल्लवितमिव तृषितश्वापदकुललम्बितलोलजिह्वालतासहस्रैः पुलकितमिव [9]शुष्कगलगोलाङ्गूललिह्यमानमधुगोलचलितसरघासङ्घातैः रोमाञ्चितमिव दग्धस्थलीरूढस्थूलाभीरुकन्दलशतैः शनैश्[10]चण्डिकायतनकाननमतिक्रम्य मल्लकूटनामानं ग्राममगात्। तत्र च हृदयनिर्विशेषेण भ्रात्रा सुहृदा च जगत्पतिनाम्ना सम्पादितस[11]पर्यः सुखमवसत्। [12]अपरेद्युरुत्तीर्य भगवतीं भागीरथीं [13]यष्टिगृहकनाम्नि वनग्रामके निशामनयत्। अन्यस्मि[14]न्दिने स्कन्धावारमुप[15]मणिपुरमन्वजिरवति कृतसं[16]निवेशं समाससाद।

अजिरमङ्गनं। स्थण्डिलं भूः। परिक्षिप्तो वेष्टितः। पिष्ट[17]पञ्चाङ्गुलमाजकोक्ताभिः पञ्चभिरङ्गुलीभिर्मङ्गल्याय दीयते। अप्रतिरथं प्रास्थानिकं मन्त्रं। निजेत्यादिना स्वस्य दातृत्वमुक्तं। उत्कीर्णा निखाता। कात्यायनी दुर्गा। [18]प्रतियातना प्रतिमा। काननत्वात्पल्लवितमिवेत्युत्प्रेक्षा। जिह्वैव लता दीर्घत्वात्। गोलाङ्गूलः कृष्णमुखो वानरः। मधुगोलं माक्षिककरण्डः। सरघा मधुमक्षिकाः। अभीरुः शतावरी। कन्दलानि नवनालानि। भ्रात्रेति चन्द्रसेनेन। हृदयेत्याद्यभिप्रायेण सुखमित्युक्तं। [19]उपमणिपुरं नगरनाम। [20]अन्वजिरवति नदीभेदनिकटे। सन्निवेशो गृहादिरचना।

१. कर्णं T. Jambû ed. २. K. K2. Jambû ed. omit दन्त. ३. विनिहित K2. T. Jambû ed. ४. °उद्वीक्षमानः K. K1. K2. Jambû ed. ५. अप्रतिरथं। प्रास्थानिको यन्त्रविशेषः C3. ६. K. K2. T. Jambû ed. omit तु. ७. निरुदके K. T. ८. °नमक्रियमाणं K2. Jambû ed. ९. अच्छभल्लगोलाङ्गूल° K2. T. Jambû ed. शुष्कवल° K. १०. चण्डिकाकाननमतिक्रम्य K. T. Jambû ed. ११. °सपर्यसुखं° A. १२. अथापरे K. K1. K2. T. Jambû ed. १३. यष्टिग्रहक° A. B. १४. दिवसे K. K1. K2. T. Jambû ed. १५. उपमणितारमन्व° K. K2. C1. C2. Jambû ed. १६. °सन्निवेशमाससाद K. K1. K2. T. Jambû ed. १७. पिष्टपञ्चाङ्गुलमाक्रान्ताभिः C2. १८. प्रतियातनम् C3. १९. मणितारं पत्तनभेदनं C1. C2. Jambû ed. २०. अजिरवतीति। अजिरवती नदीविशेषः C3.

अतिष्ठच्च नातिदूरे राजभवनस्य [1]निर्वर्तितस्नानाशनव्यतिकरो विश्रान्तश्च मेखलकेन [3]सहयाममात्रशेषे दिवसे भुक्तवति भूभुजि [4]प्रख्यातानां क्षितिभुजां बहूञ्छिबिरसन्निवेशान्वीक्षमाणः शनैः शनैः पट्टबन्धार्थमुपस्थापितैश्च [5]डिण्डिमाधिरोहणायाहूतैश्चाभिनवबद्धैश्च विक्षेपोपार्जितैश्च [6]कौशलिकागतैश्च [7]प्रथमदर्शनकुतूहलोपनीतैश्च [8]नागवीथीपालप्रेषितैश्च पल्लीपरि[9]वृढढौकितैश्च स्वेच्छायुद्धक्रीडाकौतुकाकारितैश्च दूतसम्प्रेषणप्रेषितैश्च [10]दीयमानैश्च[11]च्छिद्यमानैश्च [12]मुच्यमानैश्च [13]यामावस्थितैश्च [14]सर्वद्वीपविजिगीषया गिरिभिरिव सागरसेतुबन्धार्थमेकीकृतैर्ध्वजपटपटुपटहशङ्खचामराङ्गरागरमणीयैः पुष्पाभिषेकदिवसैरिव कल्पितैर्वारणेन्द्रैः [15]श्यामायमानमनवरतचलितखुरपुटप्रहतमृदङ्गैश्च [16]नर्तयद्भिरिव

निर्वर्तितेत्यादौ राजद्वारमीदृशमगमदिति सम्बन्धः। निर्वर्तितेत्यादि राजदर्शने। अकातरत्वमात्मनः [17]प्रतिपादयते वारणेन्द्रैः श्यामायमानमिति राजद्वारविशेषणं। डिण्डिमः [18]पटहः। विक्षेपः करः। नागवीथी हस्तिभूः। पल्ली शबरवसतिः। परिवृढः [19]स्वामी। आकारितैराव्हानैः। आच्छिद्यमानैरपह्रियमाणैः। यत्र दिने पुष्पनक्षत्रे राजा स्नाति [20]तद्दिनं पुष्पाभिषेकाख्यं। श्यामायमानं कालत्वमापद्यमानं। अथ च दिवसः श्यामायति रात्रिवदाचरतीति वक्रोक्तिः। अभिषेकदिनानि च ध्वजादिरम्याणी। अनवरते-

---

१. निवर्तित° A. B. २. °व्यक्तिकरो T. Jambû ed. ३. सहयाममात्रावशेषे K. K2. Jambû ed. ४. प्रत्याख्यातानां B. ५. डिण्डिमारोहणाया° A. B. °आहूतैश्च D. ६. कौशलिकोपागतैश्च K2. T. Jambû ed. ७. प्रथममदर्शन° A. प्रथममद्दर्शन° B. ८. नागवेषीपाल° K. नागवीथी। वीथिस्थानं C3. ९. परिवृढः B. १०. K. K2. T. Jambû ed. कौशलिकोपागतैश्च नागवीथीपालप्रेषितैश्च प्रथमदर्शनकुतूहलोपनीतैश्च दूतसम्प्रेषणप्रेषितैश्च पल्लीपरिवृढढौकितैश्च स्वेच्छायुद्धक्रीडाकौतुकाकारितैश्च दीयमाननैश्च। ११. आच्छाद्यमानैश्च D. १२. D. omits मुच्यमानैश्च. १३. यामस्थापितैश्च K. K2. Jambû ed. १४. सर्वद्वीपजिगीषया K. K1. K2. T. Jambû ed. १५. श्यामायमानं। श्यामलीभवत्। अथ च रजनीयमानं करिभिरन्धकारित्वात् C3. १६. मृदङ्गैर्नर्तयद्भिरिव K. K2. Jambû ed. मृदङ्गैश्चेति। मृदाङ्गं शिलापुत्रकस्य शरीरमिति वन्मृदेव। अथ च मृदङ्गो मुरजः C3. १७. प्रतिपादयति C2. Jambû ed. १८. पटलः C2. १९. C1. C2, Jambû ed. omit स्वामी. २० तत्पुष्पाभिषेकाख्यं C3.

राजलक्ष्मीमुपहसद्भिरिव सृक्कि[1]पुट[2]प्रकटफेनाट्टहासेन जवजडजङ्घां हरिणजातिमाकारयद्भिरिव सङ्घ[3]ट्टहेतोर्हर्षहेषितेनोच्चै[4]रुच्चैः अवसमुत्पतद्भिरिव दिवसकररथतुरगगरुषा [5]पक्षायमाणमण्डनचामरमालैर्गगनतलं तुरङ्गैस्तरङ्गायमाणमन्यत्र प्रेषितैश्च प्रेष्यमाणैश्च प्रेषितप्र[6]तिनिवृत्तैश्च बहुयोजनगमनगणना सङ्ख्याक्षरावलीभिरिव [7]वराटिकामालिकाभिर्घटितमुखमण्डनकैस्तारकितैरिव सन्ध्यातपच्छेदैररुणचामरिकारचितकर्णपूरैः सरक्तोत्पलैरिव रक्तशालि[8]शालेयैरनवरतझणझणायमानचारुचामीकरघुरुघुरुकमालिकैर्जरत्करञ्जवनैरिव रणितशुष्कवीजकोशीशतैः श्रवणोपान्तप्रेङ्ख[9]त्पञ्चरागवर्णोर्णाचित्रसूत्रजूट[10]जटालैः कपिकपोलकपिलैः क्रमेलककुलैः कपिलायमानमन्यत्र शरज्जलधरैरिव [11]सद्यः स्नुतपयः पटलधवलतनुभिः कल्पपादपैरिव मुक्ताफलजा[12]लकजायमानालोकलुप्तच्छायामण्डलैर्नारायणनाभिपुण्डरीकैरिवाश्लिष्टगरुडपक्षैः क्षीरोदोद्देशैरिव द्योतमानविकट[13]विद्रुमदण्डैः शेषफणाफलकैरिवोपरि स्फुरत्स्फी-

त्यादौ तुरङ्गैस्तरङ्गायमाणमिति सम्बन्धः। मृदोङ्गं मृदङ्गश्च मुरजः। सृक्किण्योष्टपर्यन्तौ। अन्यत्रेत्यादौ क्रमेलककुलैः कपिलायमानमित्यन्वयः। वराटिकाः श्वेतिकाः। शालीनां भवनं क्षेत्रं शालेयं शालिव्रीह्योर्ढक्-। वीजकोशी शिम्बिका। क्रमेलका उष्ट्राः। अन्यत्रेत्यादिनातपत्रखण्डैः श्वेतायमानमित्यन्वयः। सद्य इत्याद्यभिप्रायेण शरद्ग्रहणं। स्नुतं निर्गतं। पयः क्षीरं जलं च। पटलवत्तेन च धवला तनुराकारो येषां। अन्यत्र धवलाश्च ते [14]तनवः क्षीणाश्च ते। पुण्डरीकग्रहणेनाकारसदृशत्वमप्युच्यते। गरुडपक्षा रत्नभेदा गरुडस्य चाङ्गरुहाः। क्षीरोदेति शुक्लतया राजहंसा [15]मुख्यनृपा

---

१. सृक्कपुट° A. B. २. °प्रसृत° K K1. K2. T. Jambû ed. ३. सङ्घट्टेति। स्पर्धया सङ्घट्टनेत्यर्थः C3. ४. K. T. Jambû ed. omit the second उच्चैः ५. पक्षीयमाण° B. ६. प्रतीपनिवृत्तैश्च K. T. Jambû ed. ७. वराटिकावलीभिः K. T. Jambû ed. वराटकमालिकाभिः A. B. ८. शैलेयैः K2. T. Jambû ed. शालेयैः। शालिक्षेत्रैः C3. ९. पञ्चरागवर्णे। पञ्चप्रकारो रागद्रव्यैर्वर्णो यस्या ऊर्णाया इति C3. १०. °जटाजालैः K. T. Jambû ed. ११. स्नुत° K1. K2. सद्यः स्नुतपय इति। तत्कालदुग्धक्षीरपटलवत्तः। अन्यत्र सद्यो गलितजलपटलेन C3. १२. जालकेति। अवचूलाः कोरकाणि च C3. १३. विद्रुमेति। विशिष्टतरुश्च C3. १४. तरवः C2. १५. प्रख्यनृपाः C2. Jambû ed.

तमाणिक्यखण्डैः [1]श्वेतगङ्गापुलिनैरिव राजहंसोपसेवितैरभिभवद्भिरिव [2]निदाघसमयमुपहसद्भिरिव विवस्वतः प्रतापमापिबद्भिरिवातपं चन्द्रलोकमयमिव जीवलोकं जनयद्भिः कुमुदमयमिव कालं कुर्वद्भिर्ज्योत्स्नामयमिव वासरं [3]विरचयद्भिः फेनमयीमिव दिवं दर्शयद्भिरकालकौमुदीसहस्राणीव सृजद्भिरुपहसद्भिरिव शातक्रतवीं श्रियं [4]श्वेतायमानैरातपत्र[5]खण्डैः श्वेतद्वीपायमानं क्षणदृष्टनष्टाष्टदिङ्मुखं च मुष्णद्भिरिव [6]भुवनमाक्षेपोत्क्षेपदोलायितं दिनं गतागतानीव का[7]रयद्भिरुत्सारयद्भिरिव कुनृपतिर्सं[8]म्पर्ककलङ्ककालीं का[9]लेयीं स्थितिं विकचविशदकाशवनपाण्डुर[10]दंशदिशं शरत्समयमिवोप[11]पादयद्भिर्बिसतन्तुमयमिवान्तरिक्षमा-

रक्तचञ्चुचरणा राजहंसा निदाघस्य तिरस्करणादभिभवद्भिरिवेत्युक्तं। उपहसद्भिरिवेति प्रतापस्योपहास एव समुचितो वैयर्थ्यात्। अथ च। प्रतापपदेन भङ्ग्या विवस्वत आरोपितविजिगीषु व्यवहारत्वात्। शत्रुमनः सन्तापकारियश उक्तं। आतपं प्रकाशमापिबद्भिरिति। तस्य सर्वत एवातिदर्शनात्। जीवलोकमिति यश्च जीवानां लोकस्तत्र कथं चन्द्रलोक इति विरोधः। कुमुदमयमिवेति। कुमुदमयत्वाच्छुक्लं भवति न तु कालं। कुमुदमयं च समयं कार्त्तिकादि। ज्योत्स्नेति वासरे ज्योत्स्नानसम्भवतीति विरोधः। एवं च दिवः फेनमयीत्वं जलदे हि फेनानामभावः। कौमुदी कुमुदिनी कार्त्तिकी च। ज्योत्स्ना पूर्वसामान्येनोक्ता इति। विशेषेण श्वेता इवाचरन्तः श्वेतायमानास्तैस्तत्र तेषां स्वत एव श्वेतत्वाच्छ्वेतपदेन कथमुपमानतेत्युच्यते। श्वेतगुणा इवाचरन्तः श्वेतायमानाः। तेन यथा श्वेतगुणयोगादन्यत्किञ्चिच्छ्वेतते तद्वदेतद्योगाद्राजद्वारमिति। श्वेताः स्फटिका इत्यन्ये। केचित्तु श्वेतमानैरिति पठन्ति। क्षणेत्यादौ। चामराणां सहस्रैर्दोलायमानमित्यन्वयः। कलेरियं कालेयी सर्वत्राग्निकलिभ्यां ढक्।

---

१. श्वेतेति। केदारमार्गे नीला गङ्गापि श्रूयते तद्व्यवच्छेदाय श्वेति C3. २. निदाघसमयं परिभवद्भिरिव A. B. ३. विचरयद्भिः A. ४. श्वेतातपत्र° A. B. ५. षण्डैः K. T. Jambû ed. ६. त्रिभुवनम° K2. Jambû ed. ७. कारयद्भिरिव कुनृपति° D. ८. K. K2. Jambû ed. omit. सम्पर्क. ९. कालेयीं। कले: सम्बन्धिनीं स्थितिं C3. १०. K. K2. T. Jambú ed. omit दश. ११. उन्पादयद्भि. K2. T. Jambû ed.

विर्भावयद्भिः शशिकररु[1]चीनां चलतां चामराणां सहस्रैर्दोलायमानमपि च हंसयूथायमानं करिकर्णशङ्खैः कल्पलतावनायमानं कदलिकाभिर्माणिक्यवृक्षकैर्वनायमानं मायूरातपत्रैर्मन्दाकिनीप्रवाहायमाणंशुकैः क्षीरोदायमानं क्षौमैः कदलीवनायमानं मरकतमयूखैर्जन्यमानान्यदिवसमिव पद्मरागबालातपैरुत्पाद्यमानापराम्बरमिवेन्द्रनीलप्रभापटलैरारभ्यमाणापूर्वनि[2]शमिव [3]महानीलमयूखान्धकारैः स्यन्दमानानेककालिन्दीसहस्रमिव [4]गारुडमणिप्रभाप्रतानैर[5]ङ्गारकितमिव पुष्परागरश्मिभिः [6]कैश्चिदधोमुखैश्च रणनखपतितवदनप्रतिबिम्बनिभेन प्रवेशमलभमानैर्लज्जया स्वाङ्गानीव विशद्भिः कैश्चिदङ्गुलीलिखितायाः [7]क्षितेर्विकीर्यमाणकरनखकिरणकदम्बव्याजेन सेवा[8]चामराणीवा[9]र्पयद्भिः कैश्चिदुरःस्थदोलायमानेन्द्रनीलतरलप्रभापट्टैः [10]स्वामिकोपप्रशमनाय कण्ठबद्धकृ[11]पाणैरिव [12]कैश्चिच्छ्वाससौरभभ्राम्यद्भ्र[13]मरान्धकारितमुखैरपहृतलक्ष्मी [14]शोक[15]धृतलम्बश्मश्रुभिरिवा[16]न्यैः शेखरोड्डीयमानमधुपमण्डलैः प्रणामविडम्बनाभयपलायमानमौलिभिरिव [17]निर्जितैरपि

पद्मरागा [18]एवं बालातपास्तैः। महानीला गरुडमणयः पुष्परागाश्च मणिभेदाः। कैश्चिदित्यादौ [19]शत्रुमहासामन्तैः समन्तादासेव्यमानमित्यन्वयः। सेवेत्यादि त्वयेदानीं चामरग्रहणेन सेवनीय इति तेषां हि क्षितिः कलत्रमतस्तद्द्वारेण सेवनेच्छा। हारस्य यो मध्यमणिस्तरलः स प्रकीर्तितः। चपलो वा। शेखरं मुण्डमालिकं। मौलयः केशाः। निर्जितैः पुरस्कृतन्यक्कृतैः।

---

१. °च्युचीनां K. K2. T. Jambû ed. २. *secunda manu* corrected into °दिशमिव in A. ३. K2. T. Jambû ed. omit महानील. ४. °गरुडमणि° K. K2. T. Jambû ed. ५. अङ्गाराङ्कितमिव K2. T. Jambû ed. ६. कैश्चित्प्रवेशमलभमानैरधोमुखैश्च रणनखपतितवदनप्रतिबिम्बनिभेन लज्जया K2. T. Jambû ed ७. क्षितैः A. D. ८. चामराणीव B. ९. अर्धयद्भिः A. अनायद्भिः K. १०. स्वामिप्रकोप° K. K2. T. Jambû ed. ११. °कृपाणपट्टैरिव K. T. Jambû ed. १२. कैश्चिदुच्छ्वास° K. K2. Jambû ed. १३. °भ्रमरपटलान्ध° K. T. Jambû ed. १४. T. Jambû ed omit शोक. १५. वृतलम्ब° D. १६. अन्यैश्च K2. Jambû ed. १७. निस्तर्जितैरपि A. B. K. K2. १८. इव C2. Jambû ed. १९. शत्रुमहासामन्तादासेव्य° C2.

[1]सुसम्मानितैरिवानन्यशरणैरन्तरान्तरा निष्पततां प्रविशतां चान्तरप्रतीह.राणामनुमार्गप्रधावितानेकार्थजनसहस्राणामनुयायिनः पुरुषानश्रान्तैः पुनः पुनः पृच्छद्भिर्भ[2]द्राढचभविष्यति भुक्ता स्था[3]नं दास्यति दर्शनं परमेश्वरो निष्पतिष्यति बाह्यां क[4]क्षामिति दर्शनाशया [5]दिवसं नयद्भिर्भुज[6]र्निर्जितैः शत्रुमहासामन्तैः समन्तादासेव्यमानमन्यैश्च प्रतापानुरागागतैर्नानादेशजैर्महामहीपालैः प्रतिपालयद्भिर्नरपतिदर्शनकालमध्यास्यमानमेकान्तोपविष्टैश्च [7]जैनैरार्[8]हतैः पाशुपतैः [9]पाराशरिभि[10]र्वर्णिभिः सर्वदेशजन्मभिश्च जनपदैः सर्वाम्भोधिवेलावनवलयवासिभिश्च म्लेच्छजातिभिः [11]सर्वद्वीपान्तरागतैश्च [12]दूतमण्डलैरुपास्यमानं सर्व[13]प्रजानिर्माणभूमिमिव प्रजापतीनां लोकत्रयसारोच्चयरचितं चतुर्थमिव लोकं महाभारतशतैरप्यकथनीयसमृद्धिसम्भारं कृतयुगसहस्रैरिव कल्पितसन्निवेशं स्वर्गार्बुदैरिव विहितरामणीयकं राजलक्ष्मीकोटिभिरिव कृतपरिग्रहं राजद्वारमगात् ॥

[14]अभवच्चास्य जातविस्मयस्य मनसि कथमिवेदमियत्प्रमाणं प्राणिजातं जनयतां प्रजासृजां नासीत्[15]परिश्रमो महाभूतानां वा परिक्षयः परमाणूनां वा [16]विच्छेदः कालस्य वान्त आयुषो वा व्युपरम आकृतीनां

राजसेवाप्राप्तैः सम्मानितैः पूजितैरिव । अनुयायिन इति तेषां स्वयं सुलभत्वात् । जैनैः शाक्यैः । आर्हतैर्नग्नक्षपणकैः । पाशुपतैः शैवभेदैः । पराशरेण प्रोक्तमधीयते पाराशरिणो यतयः । तैर्वर्णिभिर्ब्रह्मचारिभिः । सर्वप्रजेति । अत्र हि स्थित्वा यदि प्रजापतयो न सृजेयुस्तत्कथं सर्वे भावाः कारणभूता इव तत्र लक्ष्येरन् । अर्बुदं दशकोटयः । कोटिर्लक्षशतं । इह तु बहुसङ्ख्यो[17]पलक्षणार्थावर्बुदकोटिशब्दौ । परिसमाप्तिरनारम्भः ।

१. K. T. Jambû ed. omit सु. २. भद्राढ्य° D. K. T. Jambû ed. ३. स्थाने K. T. Jambû ed. ४. कक्ष्यामिति K. K2. T. Jambû ed. ५. दिवसान्नयद्भिः B. ६. निर्जितैश्च K2. T. Jambû ed. ७. जनैः K. D.; जैनैः । बौद्धैः C3. ८. आहूतैः A.; आर्हतैः । केशलुञ्चकैः C3. ९. पाराशिरिभिः A. B.; पाराशरिभिः । भिक्षुभिः C3. १०. वर्णिभिश्च K. T. Jambû ed. ११. सर्वदेशान्तरागतैश्च T. Jambû ed १२. दूतमण्डलैः D.; द्रुतमण्डलैः K2. १३. D. omit. प्रजा.; K2. T. read प्रजापति. १४. अभ्यजायतविस्मयोऽस्य T. Jambû ed. १५. K. T. Jambû ed. omit परिश्रमः १६. परिच्छेदः K. K2. Jambû ed. १७. उपलक्षणार्थरयार्बुदं C2.

वा परिसमाप्तिरिति मेखलकस्तु दूरादेव द्वारपाललोकेन प्रत्यभिज्ञाय-मानस्तिष्ठतु तावत्क्षणमात्रमत्रैव पुण्यभागीति तमभिधायाप्रतिहतः पुरः प्राविशत्। अथ मुहूर्तादिव प्रांशुना कर्णिकारगौरेण वीध्रकञ्चुकच्छन्नवपुषा समुन्मिषन्माणिक्यपदकबन्धबन्धुरवंस्तबन्धलुप्तावलग्नेन हिमशैलशिलाविशालवक्षसा हरवृषभककुदकूटविकटांसतटेन चपलहृषीकहरिणकुलसम्यमनपाशमिव हारमुरसा बिभ्रता कथयतं यदि सोमवंशसम्भवः सूर्यवंशसम्भवो वा युवां भूपतिरभूदेवम्विध इति प्रणुमानीताभ्यां सोमसूर्याभ्यामिव श्रवणगताभ्यां माणिक्यकुण्डलाभ्यां समुद्भासमानेन वहद्रूदनलावण्यविसरवेणिकाक्षिप्यमाणैरधिकारगौरवाह्नीयमानमार्गेणेव दिनकृतः किरणैः प्रसादलब्धया विकचपुण्डरीकमुण्डमालयेव दीर्घया दृष्ट्या दूरादेवानन्दयतानैष्टुर्याधिष्ठानेपि प्रतिष्ठितेन पदे पदे प्रश्रयमिवावनम्रेण मौलिना पाण्डुरमुष्णीषमुद्वहता

तिष्ठत्विति त्रियायुक्ते कदाचिदनादरशङ्केत्येतदर्थमाह। पुण्यभागीति। अथेत्यादावीदृशपुरुषेणानुगम्यमानो निर्गत्यावोचदिति सम्बन्धः। अन्तराले वस्त्वन्तरादिवर्णनाभावादथेत्यादिना समनन्तरमेव निर्गमनेन पुनरादर एव प्रतीयते। अत आह। मुहूर्तादिवेति। पुरुषानुगतत्वेन चादर एव पोष्यते। वीध्रं निर्मलं। बन्धुरं शोभनं। वंस्तं सुवर्णपट्टिका कटीसूत्रं। तस्य बन्धेन निवेशनेन कृशमवलग्नं मध्यं तस्य तेन। हिमशैले हिमग्रहणं राज्ञो धवलत्वात्। हरग्रहणं जराशौक्ल्यप्रतिपादनाय पूर्ववत्। हृषीकाणीन्द्रियाणि। आनीताभ्यामिति। आनयने तस्य प्रभविष्णुताध्वन्यते। यश्च स्रष्टुमानीयते स श्रवणं गच्छति। वेणिका प्रवाहः।

---

१. A. B. omit तावत् २. °च्छत्र° K. T. Jambû ed. ३. °शस्त° K. T. Jambû ed. वस्तेति। वस्त कटीसूत्रं C3. ४. °बन्धकृशावलम्नेन T. Jambû ed. ५. लुप्तेति। लुप्तं कृशं C3.; अवलग्नं मध्यं C3. ६. हरवृषक° K. K1. Jambû ed. ७. °विकटांसतटेनोरसा चपल°. हारं बिभ्रता K. K2. T. Jambû ed. ८. कथयतां B. ९ यदि सोमवंशसम्भवो वा युवां A.; यदि सोमसम्भवः सूर्यसम्भवो वा भूपति° B. १०. B. D. K. Jambû ed. omit युवां ११. मणिमण्डलाभ्यां K. K1.; मणिकुण्डलाभ्यां T. Jambû ed. १२. भासमानेन K. K1. Jambû ed. १३. दिनकृत्किरणैः A. B. १४. °मालिकयेव K. T. Jambû ed. १५. K. K2. Jambû ed. omit पदे. १६. वस्त्वन्तरालवर्णभावादथेत्यादिना C2. १७. शस्तं C1. C2. Jambû ed.

वामेन स्थूलमुक्ताफलच्छुरणदन्तुरत्सरुं[1] करकिशलयेन कलयता कृपाणमितरेणापनीततरलतां ताडनीमिव[2] लतां शातकौम्भीं वेत्रयष्टिमुन्मृष्टां[3] धारयता पुरुषेण[4]ानुगम्यमानो निर्गत्यावोचत् ॥

एष खलु[5] महाप्रतीहाराणामनन्तरश्चक्षुष्यो देवस्य पारियात्र[6]नामा दौवारिकः समनुगृह्णात्वेनमनुरूपया प्रतिपत्त्या कल्याणाभिनिवेशीति [7]दौवारिकस्तु समुपसृत्य कृतप्रणामो मधुरया गिरा सविनयमभाषत । आगच्छत प्रविशत देवं दर्शनाय कृतप्रसादो देव इति बाणस्तु धन्यो[8]ऽस्मि यदेवमनुग्राह्यं मां देवो मन्यत इत्युक्त्वा तेनोपदिश्यमानमार्गः प्राविशदभ्यन्तरम् ॥

वामेनेति । तदा तस्य व्यापारानुपपत्तेः । अपनीतेत्यादिनास्य नियमविधायित्वं पोष्यते । उन्मृष्टामुत्तंसितां । अनेन भास्वरनैव पोष्यते ।

अनन्तरः प्रधानं[10] । चक्षुष्यः प्रियः । आगच्छतेत्यादौ बहुत्वनिर्देशेनादर एवास्यापाद्यते । अथेत्यादावेवमित्रधैर्स्तुरङ्गै[11]रारचितां मन्दुरां विलोकयन्दूरादिभधिष्ण्या[12]गारमपश्यदिति सम्बन्धः । वनायुजादीनि देशविशेषेणाश्वानां नामानि शोणैरित्यादिवर्णविशेषवर्णनं । शोणः पद्मारुणः स्मृतः । पिञ्जरैरीषत्कपिलैः । हरिच्छुकनिभो वर्णः । तित्तिरिः पक्षिभेदः । तद्वच्चित्रैः । सिताश्च यस्य वाजिनः शफाः समस्तकं मुखं । स पञ्चभद्रनामको नृपस्य राज्यसौख्यदः शुक्लपर्यन्ते । असिततारके नयने येषां ते मल्लिकाक्षाः ।

१. त्सरुः । खड्गमुष्टिः C3.; A. gives in a marginal gloss खड्गं २. ताडिनीमिव; A. K. ताडीतीमिव B. ३. उत्कृष्टां A. B.; उत्सृष्टां । ऊर्ध्वसृष्टामुच्चैः कृतामिति भावः C3. ४. वर्षवरेण K2. T. ५. लघुमहा° K2. T. Jambû ed. ६. पारिपात्रा° B. ७ दौवारिकः समुपसृत्य B. T. Jambû ed. ८. K. K2. Jambû ed. omit देव ९. धीव्यास्मि A. १०. प्रधानः C3. ११. तरङ्गैराचितां C2. १२ °आकारम° C2.

अथ [1]वनायुजैः काम्बोजैरारट्टजैर्भारद्वाजैः सिन्धुदेशजैः पारसीकैश्च [2]शोणैश्च श्यामैश्च श्वेतैश्च पिञ्जरैश्च हरिद्भिश्च तित्तिरिकल्माषैश्च [3]पञ्चभद्रैश्च मल्लिकाक्षैश्च कृत्तिकापिञ्जरैश्चायतनिर्मांसमुखैरनुत्कटकर्णकोशैः सुवृत्तश्लक्ष्णसुघटितघण्टिकाबन्धैर्[4]यूपानुपूर्वी[5]वक्रायतो[6]दग्रग्रीवैरु[7]पचयश्चयत्स्क[8]न्धसन्धिभिर्[9]निर्भुग्नोरःस्थलैरस्थूल[10]प्रगुणप्रसृतैर्लोहपीठकठिनखुरमण्डलैरतिजवत्रुटनभयादनिर्मितान्त्राणीवोदराणि [11]वृत्तानि धा-

उक्तं च । पृथुस्निग्धा समाचैव मल्लिकाकुसुमप्रभा । राजीयस्य तु पर्यन्ते परिक्षिप्ये तु लोचने । सहयो मल्लिकाक्षस्तु दृष्टिपर्यन्ततारक इति । [12]तारकाः कदम्बककल्पानेकबिन्दुकल्माषितत्वचः कृत्तिका पिञ्जरा यतः । आयतेत्यादि । तदुक्तं । मुखं तन्वायतनतं चतुरस्रं समाहितं । ऋजु चैवोपदिष्टं च परिपूर्णं च शस्यत इति । कृष्णेनाप्युक्तं । उज्जा अतुङ्गा अत्थं णिम्मं संवाहिराणं अच्च अणमिति । अनुत्कटो ह्रस्वः । कोशो मध्यं । [13]शिरसो ग्रीवायाश्च यन्मध्यं च घण्टिकाबन्धः । यो निगाल इत्युच्यते तस्य सुवृत्तादि शस्यते । यदाह । ग्रीवा शिरोन्तरश्लिष्टो दीर्घवृत्तः समाहितः । नोद्वर्त्तो नार्धितो नातिदुर्नाहोतिविधानतः । सुदिग्धोनुपदिग्धश्च निगालो गदितः शुभ इति । यूपो यज्ञचिन्हं । तस्यै वानुपूर्वी यस्याः । तथा वक्रा आयता उदग्रा उद्धरा ग्रीवा येषां । तदुक्तं । ग्रीवा भूलम्बिनी वृत्ता दीर्घा च सुसमाहिता । गले बद्धा विदीर्वृत्ता तथा शिरसि चोद्यता । निगाले स्याच्च निर्मांसा मृद्वी सा कुञ्चिता भृशं । श्लिष्टमांसाग्रबद्धा च तुरगस्य प्रशस्यत इति । उपचयेत्यादि । तदुक्तं । स्कन्धः सुपरिपूर्णः स्याद्व्यक्तमांसः पृथुत्रिको बहुमांसाङ्गसंश्लिष्टः स्थिरमांसश्च पूरित इति । निर्भुग्नं स्थूलत्वाद्बहिर्निःसृतं । उक्तं च । स्थूलास्थिमहदच्छिद्रं पृथुलं यच्च निर्बलि । उर ईदृक्प्रशंसन्ति स्थूलक्रोडं महत्तरमिति । [14]निर्भुग्नमुत्पन्नद्रोणिकमिति केचित् । अस्थूलप्रगुणप्रस्थितैर्निर्मांस ऋजुजङ्घैः । उक्तं च । जङ्घे वृत्ते दीर्घेनिर्मांसे पूजिते [15]निगूढसिर इति । मण्डलशब्देन वृत्तत्वमुच्यते । तदुक्तं । खुरास्तुरगे वृत्ताश्च ह्रस्वाश्च सुदृढा घना इति । तथा शिलातलनिभैः खुरैरिति । उदराणीति । तदुक्तं । उदरं वृत्तमगुरुमृगस्योपचितं तथा । अच्छिद्रह्रस्ववृत्ताल्पसमकुक्षि च पूजितमिति ।

१. वानायुजैः A. B. $C_3$. वानायुजैः । वानायुजाद्या देशविशेषाः $C_3$. २. शोणैः । शोणाद्या वर्णभेदाः $C_3$. ३. पञ्चभद्रस्तु हृत्पृष्टमुखपार्श्वेषु पुष्पितः $C_3$. ४. यूपानुपूर्वीति । यूपो यज्ञस्तम्भस्तस्येवानुपूर्वीक्रमो यस्याः $C_3$. ५. वक्रायतो° A. B. D. ६. °दग्ध° K. T. ७. उपचयः । वर्धमानः $C_3$. उपचश्चयस्कन्धः D. ८. °सन्ध° A. B. ९. निर्भुग्नः । निष्क्रान्तः $C_3$. १०. प्रगुणेति । सरलजङ्घैः $C_3$. ११. A. B. D. omit वृत्तानि १२. तारककदम्ब° $C_3$. १३. शिरो $C_3$. १४. निर्भुग्नमृत्पन्न° $C_1$. Jambû ed. १५. निगूढासिरे $C_1$.

रयद्भिरुद्वद्द्रोणी विभज्यमानपृथुजघनैर्ज[1]गतीदोलायमानबालपल्लवैः कथमप्युभयतो निखातदृढभू[2]मिपाशसम्यमननि[3]यन्त्रितैरायतैरपि पश्चात्पाशबन्धप[4]रवशप्रसारितैकाङ्घ्रिभिरायततरैरिवोपलक्ष्यमाणैर्बहुगुणसूत्रग्रथितग्रीवागण्डकैरा[5]मीलितलोचनैर्दूर्वारसश्यामफेनलवशवलान्दशनगृहीतमुक्तान्फरफारितत्वचः कण्डूजुषः प्र[6]देशान्प्रचालयद्भिः सा[7]लसवलितवा[8]लधिभिरेकशफविश्रान्तिश्रमस्रस्तशि[9]थिलितजघनार्धानिद्रयाप्रध्यायद्भिश्च स्खलितहु[10]ङ्कारमन्दमन्दश[11]ब्दायमानैश्च ताडितखुरधा[12]रणीरणितमुखरशिखरखु[13]रलिखितक्ष्मातलैर्घासमभिलषद्भिश्च प्रकीर्यमाणयवसग्रा[14]सरसमत्सरसमुद्भूतक्षोभैश्च प्रकुपितचण्डचण्डालहुङ्कारकातरतरतरलतारकैश्च कुङ्कुमप्रमृष्टिपिञ्जराङ्गतया सततसन्निहितनी[15]राजनानलैरिव लक्ष्यमाणैरुपरि विततवितानैः पुरः पूजिताभिमतदेवतैर्भूपालवल्लभैस्तुरङ्गैरा[16]रचितां मन्दुरां विलोकयन्कुतूहलाक्षिप्तहृदयः किञ्चिदन्तरमतिक्रान्तो ह[17]स्तवामेनात्युच्चतया निर[18]वकाशमिवाकाशं कुर्वाणं महता

द्रोणी शोभा विशेषः । यदाह । पृ[19]ष्ठोरः कटिपार्श्वस्य मांसोत्कर्षणनिर्मितां[20] । द्रोणिकेतिप्रशंसन्ति शोभा वाजिनिपञ्च[21]मीमिति । बाला एव पल्लवाः । उभय इति । अत्युद्दामवेगवत्त्वादुभयत्र पाशबन्धः । गण्डको भूषणभेदः । फरफरिताः पुनः पुनरीषत्कम्पिताः । वालधिः पुच्छः । शफः समुद्रयुक्तः पादः । खुरध[22]रणी खुराधःकाष्टपट्टाच्छादिता भूः । चण्डालोऽश्वपालः । प्रमृष्टिः प्रमार्जनं । वितानकं रक्तकं । देवतात्र गोविन्दः । आर[23]चितां भूषितां । हस्तवामशब्दो

१. जगती । पृथ्वी $C_3$. २. भूरिपाश° K. $K_2$. T. Jambû ed. ३. °नित्यं त्रितैर B. ४. K.$K_1$. $K_2$. T. Jambû ed. omit परवश. ५. आमीलल्लोचनैः K. T. Jambû ed. ६. प्रतीकान् K. $K_2$. Jambû ed. ७. सलसलितवालधिभिः A. ८. वारधिभिः $K_2$. T. Jambû ed. ९. K. $K_2$ Jambû ed. omit श्रम १०. हुङ्कुरेति । निरुद्धप्रसरहुङ्कारेण मन्दमन्दशब्दायमानं यथा स्यादेवं तथा ताडिता $C_3$. ११. °शब्दायमानताडित° A. १२. °धरणि° $K_1$. T. Jambû ed. धारिणी । काष्ठच्छन्ना भूमिः $C_3$. १३. D. omits खुर. १४. °ग्रासरसमत्सरोद्भूत° K. T. Jambû ed.; °यवग्रास° D. १५. °नीराजनानलरक्ष्यमाणैरिवोपरि K. T. Jambû ed. १६. आरुञ्चितां D. $C_3$. आपूरितां A. आञ्चितां K. १७. हस्तवामेन । सव्यपार्श्वेन $C_3$. १८. अनवकाशमिवा° A. B. १९. पृष्ठोरः $C_1$. $C_3$. २०. °निर्मिनां $C_3$. २१. पञ्चमीं $C_3$. २२. °धारिणी $C_2$. २३. आरुञ्चितां $C_3$.

क्रि[१]यमाणाकालकोलाहलं विकचकदम्बसंवादिमदसुरासौरभभ[२]रितभुवनं कायवन्तं[३]मिव कालमे[४]घकालमविरलमधुवि[५]न्दुपिङ्गलप[६]द्म[७]जालकितां सरसीमिवा[८]त्यवगाढां दशां[९] चतुर्थीमुत्सृजन्तमन[१०]वरतमवतंसशङ्खैरामन्द्रकर्णतालदुन्दुभिध्वनिभिः पञ्चमी प्रवेशमङ्गलारम्भमिव [११]सूचयन्तमविरतचलनर्तितत्रिपदीललितलास्यलयैर्दोलायमानदीर्घदेहा[१२]भोगवत्तया मेदिनीविदलनभयेन भारमिव ल[१३]ङ्घयन्तं दिग्भित्तितटेषु कायमिव कण्डूयमानमा[१४]हवायोदस्तहस्ततया दिग्वारणानि [१५]वाह्वयमानं ब्रह्मस्तम्भमिव स्थूलनिशितदन्तेन क[१६]रपत्रेण पाटयन्तमर्मा[१७]न्तं भुवनाभ्यन्तरे बहिरिव निर्गन्तुमी-

मयूररुतानि । मेघकालमिति । मेघकालश्च चातककदम्बनीलकण्ठकुलकदम्बकसौरभादियुक्ता अविरलाघनाये मधुबिन्दव इव मधुबिन्दवो माक्षिककणास्तद्वत्पिङ्गलानि पद्मजालिकानि सञ्जातानि यस्यां पद्मकं बिन्दुजालं स्याद्गात्रकं करिणामिति । यथा । पद्मस्वस्तिकसंस्थानो बिन्दुभिश्च कचैस्तथा । स्वङ्किताङ्ग[१८]स्तुषाराभः शात्रः शक्तिकरः करीत्युक्तं । अन्ये । मधुबिन्दवो मकरन्दकणास्तैः पिङ्गलानीति व्याख्येयं । महत्सरःसरसी । अ[१९]त्यवगाढामिति परिणतां द[२०]शां कालावस्थां । चतुर्थीमिति । चतुर्थ्यामवगाढायां लेखाबिन्दुभिराचित इत्युक्तं । शङ्खैः शङ्खशब्दैरित्यर्थः । कर्णेत्यादि कर्णौ च दुन्दुभिध्वनितौ । कर्णौ च करिणः कार्ये कारिणौ सत्प्रशंसिनाविति । पञ्चमी दशा त्रिपदी । ए[२१]कपदोत्क्षेपे पादत्रयावस्थितिः । लयो लीलाः । आहवः सङ्ग्रामः । ब्रह्मस्तम्भो ब्रह्माण्डं । करपत्रं क्रकचं । स्थूलनिशितदन्तं भवति । तच्च भेदयति स्तम्भं । अमान्तमवर्तमानं ।

---

१. क्रियमाणकलकोलाहलं K. T. Jambû ed. २. भरिम्वभवनं D. ३. °इवाकालमेघ° K. T. Jambû ed. ४. कालमेघेति । मेघकालश्च चातककदम्बादियुक्तः स्यात् C3. ५. मधु । माक्षिकं मकरन्दश्च तद्वत्तैश्च C3. ६. वद्विति बिन्दुजालकं कमलसमूहश्च C3. ७ पद्मेति । पद्मानि गात्रजा बिन्दवः C3. ८. अभ्यवगाढां K2. T. Jambû ed. ९. दशां । दशवर्षप्रमाणा दशदशा हस्तिनां किल भवति C3. १०. अनवरतंसशङ्खैः A. B. ११. गायन्तं K2. Jambû ed. १२. °भोगतया K. T. Jambû ed. १३. लघयन्तं A. K. K2. १४. A. B. D. omit आहवाय: १५. आह्वयमानं । युद्धायाकारयन्तं C3. १६. करपत्रेण । क्रकचमण्यतनु तीक्ष्णकण्टक काष्ठमन्थि विदारयति । पत्रं यानं पक्षइछदश्छुरीत्यनेकार्थत्वात्पत्रं क्षुरिका C3. १७. अमान्तं । अत्रापि निमित्तभूतमुत्प्रेक्षान्तरमाह C3. १८. °तुषारम्भः C2. १९. अभ्यवगाढामिति C1. २०. दिशां C1. Jambu ed. २१. एकपत्क्षेपे C3.

हमानं सर्वतः सरसकिस[1]लयलतालासिभि[2]र्लेशिकैश्चिरपरिचयोप[3]चितै[4]र्घनैरिव [5]विक्षिप्तं सशैवलविसविसरशवलसलिलैः सरोभिरिव चा[6]धोरणैराधीयमाननिदा[7]घसमयसमुचितोपचारानन्दमपि च प्रतिगजदानपवनादानदूरोत्क्षिप्तेनानेकसमरविजयगणनालेखाभिरिव [8]र्वलिवलयराजिभिस्तनीयसीभिस्तरङ्गितोदरेणातिस्थवीयसा हस्तार्गलदण्डेनार्गलयन्तमिव सकलं सकुलशैलसमुद्रद्वीपकाननं ककुभां चक्रवालमेकं करान्तरार्पितेनोत्पलाशेन कदलीदण्डेनान्तर्गतशीकरसिच्यमानमूलं मुक्तपल्लवमिवापरं लीलावलम्बिना मृ[9]णालजालकेन समररसोच्चरोमाञ्चकण्टकितमिव [10]दन्तकाण्डमुद्वहन्तं विसर्पन्त्या च [11]दन्तकाण्डयुगलस्य कान्त्या स[12]रः क्रीडास्वा[13]दितानि कुमुदवनानीव बहुधा वमन्तं निजयशोराशिमिव दिशामर्पयन्तं कुकरिकीटपाटन[14]दुर्विदग्धान्सिंहानिवोपहसन्तं कल्पद्रुमदुकूलमुखपटमिव चात्मनः कल्पयन्तं [15]हस्तकाण्डकर[16]दण्डोद्धरणलीलासु च लक्ष्यमाणेन रक्तांशुकसुकुमार[17]तरेण तालुना कवलितान्यने[18]कैर[19]रक्तकमलिनीवनानीव वमन्तमभिनवकिसलयराशीनिवोद्गिरन्तं कमलकवलपीतं मधुरसमिव स्वभावपिङ्गलेन ग[20]लन्तं चक्षुषा चूतचम्पक-

लेशिकैर्घासिकैः । आधोरणैर्गजारोहैः । वलयाकारावलिः बलिवलयं । अर्गलयन्तं सनाटकं कुर्वाणं । कुमुदवनानी[21]त्युत्प्रेक्षया वर्णप्राशस्त्यमाह । पयः कुमुदकुन्दाभौ केतकी कुमुदद्युती । मृगाङ्ककिरणालोकौ कीर्तिकल्याणकारकावित्युक्तं । रक्तांशुकेति । उक्तं च । रक्तौष्ठतालुरसनमिति । स्वभावपिङ्गलेनेति । उक्तं च । शशिसूर्यसमाभासे कलविङ्काक्षसन्निभे । प्रसन्नमधुपिङ्गे च स्थिरे चामोलने तथा । अपरिस्राविणी चैव कुशाग्निनि[22]र्भभास्वरे । नेत्रे शस्ते समे स्निग्धे दीर्घे चाविलपक्ष्मणीति । चूतेत्यादिना

१. किसलयतालासिभिः B. २. लेशिकैः । करिपरिचा–रिकाः C3. ३. उपगतैः A. ४. घनैरिव K2. T. Jambu ed. ५. विक्षिप्तसशैव° K K1. Jambû ed. ६. वार्धो° A. B. ७. निदाघकालसमय° T. Jambû ed. ८. वलितवलय° thus corrected *secunda manu* in A. ९. मृणालजालेन A. B. १०. दन्तकाण्डं वहन्तं K. Jambû ed. ११. दण्डकाण्ड° T. Jambû ed. १२. सरसः A. B. १३. °स्वादितानीव कुमदवनानि K. K2. Jambû ed. १४. दुर्ललितान् K2. Jambû ed. १५. कल्पयन्तमकाण्ड° A. B १६. K.T. Jambû ed. omit कर. १७. तलेन T. Jambû ed, १८. K. K1. K2. Jambû ed. omit अनेक. १९. रक्तपद्म° K. K2. Jambû ed. २०. वमन्तं K. K1. Jambû ed. २१. उत्प्रेक्षा दन्तयो वर्ण° Jambû ed. २२. °निभयभास्वरे C2.

लवलीलवङ्गकक्कोलवन्त्ये[1] लोलतामिश्रितानि[2] ससहकाराणि कर्पूरपूरितानि[3] पारिजातकवनानीवोपभुक्तानि[4] पुनः पुनः[5] करटाभ्यां[6] बहलमदामोदव्याजे-[7]न विसृजन्तमहर्निशं विभ्रमकृतनहस्तस्थितिभिरर्धखण्डितपुण्ड्रेक्षुकाण्ड-कण्डूयनलिखितैरलिकुलवाचालितैर्दानपट्टकैर्[8]विलभमानमिव सर्वकानना-[9]नि करिपत्नीनाम[10]विरलोदबिन्दुस्यन्दिना हिमशिलाशकलमयेन विभ्र-मन[11]नक्षत्रमालागुणेन [12]शिशिरीक्रियमाणं सकलवारणेन्द्राधिपत्यपट्टब-न्धबन्धुरमिवोच्चैस्तरां शिरोदधानं मुहुर्मुहुः स्थगितापावृतदिङ्मुखाभ्यां कर्णतालतालवृन्ताभ्यां वीजयन्तमिव भर्तृभक्त्या दन्तपर्यङ्किकास्थितां[13] रा-

प्रशस्यत्वमाह । यदाह । [14]उभयस्तुतिरप्येष विवर्णो हर्षवर्जितः । यदि स्यादपगन्धश्च तदा सौनसतां मत इति । करटाभ्यां गण्डाभ्यां । अर्धेत्यादिनेक्षुकाण्डकस्य लेखनी सादृश्यमाह । लिखितैः कृतलेखैरप्य-लिकुलेषु सत्सु वाचालितशब्दयोगो येषामित्यनेनालिकुलस्य लिप्यक्षर-रूपतां ध्वनति । लिप्यक्षरेषु च सत्सु पाठ्यमानेषु वाचालता दानपट्टक-[15]लिखितैः किञ्चिद्विलभ्यते । अक्षरपाटिकैश्च तेषां हस्तस्थितिर्न क्रियते । तानि च वाच्यन्ते । यद्वा । स्वहस्तेनाक्षरकरणं हस्तस्थितिः । हिमशिला वातवज्रीभूतं हिमं । केचित्तु हिमानि हिमशकलानि चन्द्रकान्ता इत्याहुः । हिमस्य च तदा वर्णनानुचितत्वात् । पर्वतेभ्यो हिमानयनं[16] सुलभमेवेति पूर्वोक्तमेव श्रेष्ठं । यतश्चन्द्रकान्तानां दिवास्नुतिर्न भवतीति । नक्षत्रमाला हस्त्याभरणभेदः । उच्चैस्तरामिति । उच्चं हि शिरः करिणः शस्यते । यदुक्तं । समं महच्च पूर्णं च नातिस्तब्धोच्चमस्तकं । नाताम्रं नातिपृथुलं वितानाववहं मृद्विति । दन्तावेव तदवस्थानसमुचितत्वात्पर्यङ्किका च

१. A. B. D. omit कक्कोल. २. लालतामिश्रामि A. B. ३. कर्पूरपूरपूरितानि T. Jambû ed. ४. पारिजातकवलानीव A. पारिजातककवलानीव B. ५. पुरः K. T. Jambû ed. ६. करजाभ्यां K. T. ७. °महामोद° A. °मुदामोद° K.T. ८. दानार्थपट्टकैः । एकत्र दानार्थं पट्टकास्ते चेक्षुप्रायया लेखिन्या लिख्यन्ते । अलिकुलप्रायेष्वक्षरेषु सत्सु वाच्यन्ते । राज्ञा स्वहस्तेनाक्षरकरणं च । तत्र हस्तस्थितिः । ततस्तैर्देयादिकं लभ्यत इति C3 ९. T. Jambû ed. omit काननानि. १०. अधिर° A. अविरलबिन्दु° K. T. ११. नक्षत्रमालेति । करिणः शिरोलङ्कारभेदश्च C3. १२. शिशिर-क्रियमाणं A. B. १३. दन्तपर्यङ्कस्थितां A. B. १४. उभयश्रुतिर° C1. १५. दानपष्टके C2. १६. अनवनं C2.

अलक्ष्मी[१]मायतवंशक्रमागतेन गजाधिपत्यचिन्हेन [२]चामरेणेव चलता-वालधिना विराजमानं स्वच्छशिशिरशीकरच्छलेन दिग्विजयपीताः सरित [३]इव [४]पुनः पुनर्मुखेन मुंञ्चन्तं क्षणमवधान[५]दान[६]निःस्पन्दीकृतसकलावयवानामन्यद्विरदडिण्डिमाकर्णनाङ्गवलनानामन्ते [७]दीर्घफूत्कारैः परिभवदुःखमिवावेदयन्तमलब्धयुद्धमिवात्मानमनुशोचयन्त[८]मारोहाधिरूढिपरिभवेन लज्जमानमिवाङ्गुलीलिखितमहीतलं [९]मदं मुञ्चन्तमवज्ञा-गृहीतमुक्त[१०]कवलकुपितारोहारटनानुरोधेन मद[११]तन्द्रीनिमीलितनेत्रत्रिभागं कथं कथमपि मन्दमन्दमनादरादाद[१२]दानं कवलान[१३]र्धजग्धतमालपल्लवस्रुतश्यामलरसेन प्रभूततया मदप्रवाहमिव मुखेनाप्युत्सृजन्तं दलन्तमिव दर्पेण श्वसन्तमिव शौर्येण मूर्च्छन्तमिव मदेन [१४]त्रुटयन्तमिव तारुण्येन द्रवन्तमिव दानेन [१५]वलान्तमिव बलेन माद्यन्तमिव मानेनोद्यन्तमिवोत्साहेन ताम्यन्तमिव तेजसा लिम्पन्तमिव लावण्येन [१६]सिञ्चन्तमिव सौभाग्येन

दन्तमयः। पर्यङ्कः आस्त इति श्लेषः। आयतवंशो वक्रवंशः शरवंशो बालवंशश्चेति चत्वारो वंशास्तेषु बालवंश आयत एव शास्त्रकृतामभिप्रेतः। तथा च। यावत्पूरित[१७]पार्श्वश्च वंशश्चापलता कृतिः। शुभो ज्ञेयो गजेन्द्राणामायतः कुरुते सुखमिति तैरुक्तं। आयताद्वंशात्तत्क्रमेण गोपुच्छवदायत इति विग्रहः। समानार्हो हि बालधिः शोकं करोति। यदुक्तं। वक्रं स्थूलं च ह्रस्वं च पुच्छं कचविवर्जितं। समानार्हं हि नागस्य भर्तुः शोककरं स्मृतमिति। वंशं पृष्ठनाभिः कुलं च। क्रम आनुपूर्वी पारं पर्यं च। बालधिः पुच्छं। लज्जमानमिति यश्च लज्जते स भूमिं लिखति। दर्पं चोज्झति। अङ्गुली करिकराग्रावयवः करशाखा च। तन्द्री आलस्यं गाढनिद्रा वा। चलन्तमित्यादि। दर्पाधिकारणसमुचितक्रियाप्रतिपादनसाभिप्रायं व्याख्येयं।

१. आयतेन्यादि। आयतो वक्रः परो बालश्चेति चत्वारो वंशाः। क्रम आनुपूर्व्यच्छिन्नकुलपारं पर्यं च C3. २. चामरेणैव D. ३. एव T. Jambû ed. ४. पुनर्विमुञ्चन्तं A. B. ५. अवधानधान° D. ६. निस्यन्दी° A. B. ७. दीर्घशीत्कारैः T. Jambû ed. दीर्घसूत्कारैः A. B. दीर्घचुत्कारैः K. K1. ८. आरोहारूढि° A. B. ९. मदमिति। लज्जमानो ह्यङ्गुल्यामही लिखति दर्पं च त्यजति C3. १०. °कवलं कुपिता° A. ११. तन्द्रीति। निद्रा C3 १२. °धानं K. T. १३. अवजग्धत° K. K2. T. Jambû ed. १४. कटचन्तमिव D. १५. वल्गन्तमिव T. Jambû ed. १६. सिञ्चिन्तमिव A. १७. °पाशश्च Jambû ed.

स्निग्धं[१] नखेषु परुषं रोम[२]विषये गुरुं मुखे सच्छिद्रं विनये मृदुं शिरसि दृढं परिचये[३]षु ह्रस्वं स्कन्धबन्धे दीर्घमायुषि दरिद्रमुदरे सततप्रवृत्तं दाने बलभद्रं[४] मदलीलासु कुलकलत्रमायत्त[५]तासु जिनं क्षमासु[६] वह्निवर्षं क्रोधमोक्षेषु गरुडं नागो[७]द्धृतिषु नारदं[८] कलहकुतूहलेषु शुष्का[९]शनिपातमव[१०]स्कन्देषु मकरं वाहिनी क्षोभेष्वाशीविषं दशन[११]कर्मसु वरुणं हस्त[१२]पाशाकृष्टिषु यम[१३]वागुरामरा[१४]तिसंवेष्टनेषु कालं[१५] परिणतिषु राहुं तीक्ष्ण[१६]करग्रहेषु

स्निग्धमिति । उक्तं च । नखाः स्निग्धाः सिताः शस्ता इति। परुषं निष्कृपं । यश्च स्निग्धः प्रीतिमान्स कथं परुषः प्रीतिशून्यो भवतीति विरोधः । एवं गुरुर्विस्तीर्ण आचार्यश्च विनयति । उक्तं च । विनये मुनिभिस्तुल्याः क्रुद्धा नागाश्च राक्षसाः । निस्त्रिंशस्याधिकत्वाच्च शस्त्रं नागा महोपतेरिति। स्कन्धबन्धे ग्रीवामूले । दरिद्रः कृशो दुर्गतश्च । दानं मदवारि वितरणं च । बलभद्रो हलधरः । मदो दानं सुराकृतश्च । नागाः करिणः सर्पाश्च । कलहो रणोपि । अविदितशत्रुसैन्ये पातोवस्कन्दः । मकरं कूर्मं । वाहिनी सेना नदी च । दशनकर्म दन्तव्यापारो दशनरूपा च क्रिया । हस्त एव पाशः प्रशस्तहस्तो हस्तपाश इति वा । हस्ते च पाशः । वागुरा जालं । परिणतिषु दन्तविदारणकर्मसु । कालं यमं । शुभाशुभादिकर्म विपाकेषु च कालमहरादिरूपं । तीक्ष्णं कृत्वा करेण हस्तेन ग्रहणं रविश्च तीक्ष्णकरः । लोहिताङ्गोऽङ्गा-

१. स्निग्धं । अन्यत्र स्निग्धादिषु द्वयोर्द्वयोर्विरोधो भावनीयः । यावत्सततप्रवृत्तं दानमिति C3. २. रोषविषयेषु A. B. ३ परिचये A. B. ४. बलभद्रं । बलेन भद्रो मुसली च C3. ५. आयत्ततासु । मदचेष्टाया आयत्ततायाश्चात्र विरोधः C3. ६. क्षमासु । अत्र क्षमा क्रोधनिर्यातनयोः C3. ७. नागेति । गजाः सर्पाश्च । C3. ८. नारदं । नरसमूहं...द्यति । अथ च मुनिः स हि कलहप्रियः C3. ९. शुष्काशनिमवस्कन्देषु A. B. D. १०. अवस्कन्देषु । अविदितो रिपुसैन्यपातः C3. ११. दशनेति । दन्तौ दंशक्रिया च C3. १२. हस्तपाशेत्यादि । हस्त एव कुण्डलित्वात्पाशो हस्ते च पाशः C3. १३. यमवागुरां पदातिसम्वेष्ट॰ A. B. १४. सम्वेष्टनेष्विति । सम्वेष्टनमेकतः पुञ्जीकरणं सङ्ग्रहणं च C3. १५. कालं । वेधदानेष यमं । अथ पदार्थानां परिपाकेषु समयादिरूपं C3. १६. तीक्ष्णकरेति । तीव्रं करेण ग्रहणं सूर्योपरागश्च C3.

लोहिताङ्गं[1] वक्रचारेष्व्[2]अलातचक्रं मण्डलभ्रान्ति[3]विज्ञानेषु मनोरथसंपादकं चिन्तामणिपर्वतं[4] विक्रमस्य दन्तमुक्ताशैलस्तम्भं[5] निवासप्रासादमभिमानस्य घण्टाचामरमण्डनमनोहरमिच्छासञ्चरणविमानं मनस्वितायाः मदधारादुर्दिनान्धकारं गन्धोदकधारागृहं क्रोधस्य सकाञ्चनप्रतिमं महानिकेतनमहङ्कारस्य[6] सगण्डशैलप्रस्रवणं[7] क्रीडापर्वतमवलेपस्य सदन्ततोरणं[8] वज्रमन्दिरं दर्पस्योच्चकुम्भकूटाट्टालकविकटं[9] सञ्चारिगिरिदुर्गं[10] राज्यस्य कृतानेकबाणविवरसहस्रं[11] लोहप्राकारं पृथिव्याः शिलीमुखशतझाङ्कारितं पारिजातपादपं भूनन्दनस्य तथा च सङ्गीतगृहकं कर्णतालताण्डवानामा-[12][13]

रकः । वक्रं कुटिलं पश्चाच्च । मण्डलाकृत्या भ्रान्तेर्भ्रमणस्य विज्ञानानि कौशलातिशयगतिः । गोमूत्रिकामण्डले त्रिविधा हि गतिः । तत्रालातचक्रमुल्मुकचक्रं भ्रमणं करोति । मनोरथसंपादकमिति [13]शेषे षष्ठीसमासः । [14]कर्मण्यन्निति वा । अणिकृते स्वार्थेकः । दन्तौ मुक्ताशैलस्य श्वेतपाषाणस्य स्तम्भाविव यस्य । अन्यत्र दन्तस्य मुक्ताशैलानां च स्तम्भा यत्र । प्रतिमा दन्तकोशो देवताकृतिश्च[15] । महानिकेतनं[16] साधुदेवगृहं । गण्डावेव शैलौ तत्र प्रस्रवणं दाननिर्यासः । सहतेन वर्तते निर्झरश्च । महतो मुक्तपाषाणान्गण्डशैलान्प्रचक्षते । सञ्चारी जङ्गमः । यदाह कौटिल्यः । हस्तिनो हि जङ्गमं दुर्गमिति । कृतान्यनेकानि बाणैर्विवरसहस्राणि यस्य । तं प्राकारेषु बाणानुत्स्रष्टुं विवरसहस्राणि क्रियन्ते । य इन्द्रकोशा इति चाणक्यादिषु[17] प्रसिद्धाः । भूनन्दनो राजान्देवोद्यानं च नन्दनं । कर्णतालानां ताण्डवानीव ताण्डवानि ।

---

१. लोहिताङ्ग । कुटिलं पश्चाच्च C3. २. अरातिचक्रं T. Jambû ed. ३. मण्डलभ्रान्तीति । शरगतिगोमूत्रिका मण्डलचर्या चेति त्रिधा गतिः C3. ४. पर्वतकं T. Jamûb ed. ५. दन्तमुक्तेति । दन्तौ सितपखाणस्तम्भाविव यस्य । अन्यत्र दन्तानां मुक्ताशैलानां स्तम्भाश्च C3. ६. महाकीर्तनं A. B. C3. ७. गन्धशैलेति । गन्धावेव शैलौ तयोर्मदस्रुतिः । अन्यत्र गुरुभिः पाषाणैर्निर्झरैर्युतः C3. ८. दन्ततोरणं । दन्तावेव दन्तानां च C3. ९. °कूटाज्वालक° K. T. १०. A. B. omit गिरि. ११. विवरसहस्रमिति । प्रकारेपि शरान्मोक्तुं विवराणि क्रियन्ते C3. १२. तालेति । अन्यत्र तालप्रधानानि C3 १३. शेषषष्ठी° C2. Jambû ed. १४. कर्मण्याण्णिति वा C1. Jambû ed. १५. देवमूर्तिश्च C3. १६. महाकीर्तनं C3. १७. चाणिक्यादिषु C1. C2. Jambû ed.

पानमण्डपं मधुपमण्डलानाम[1]न्तः पुरं शृङ्गाराभरणानां मदनोत्सवं मदली-लालास्यानाम[2]क्षुण्णप्रदोषं नक्षत्रमालामण्ड[3]लानामका[4]ण्डप्रावृट्कालं मद-महानदीपूरप्लवानामलीकशरत्समयं सप्तच्छदवनपरिमलानाम[5]पूर्वहिमागमं शीकरनीहाराणां मिथ्याजलधरं गर्जिताडम्बराणां दर्पशातमपश्यत् ॥

आसीच्चास्य चे[6]तसि नूनमस्य निर्माणे गिर[7]यो ग्राहिताः प[8]रिमाणुतां कुतोन्यथा गौरवमिदमाश्चर्यमेतद्विन्ध्यस्य दन्तावादिवराहस्य कर इति वि[9]स्मयमानमेवं तं दौवारिकोऽब्रवीत्पश्य

मिथ्यैवा[10]लिखतां मनोरथशतैर्निःशेषनष्टां श्रियं ।
चि[11]न्तासाधनकल्पनाकु[12]लधियां भूयो वने विद्विषाम् ॥
आयातः कथमप्ययं स्मृ[13]तिपथं शून्यीभवच्चेतसां ।
नागेन्द्रः सहते न मानसगतानाशागजेन्द्रानपि ॥

अन्यत्र लाभप्रधानानि ताण्डवानि । मधुपा भ्रमरा विटाश्च । शृङ्गारः सिन्दूरादिदानं रसभेदश्च । अक्षुण्णः परिपूर्णः । अभ्रादिनानावृतोपूर्वो वा । ग्राहिताः प्रापिताः । मिथ्यैवेति तस्या निःशेषनष्टत्वात्पु[14]नरभावप्रसङ्गात् । निःशेषत्याद्यभिप्रायेणाह । मनोरथशतैरिति । तस्यां व्यापाररहितत्वाच्छून्यमनस्कत्वादेवाह । सहत इत्यादि मानसं म[15]नःसरो भेदोपि । आशा [16]दिशोभिलाषोपि । देवमितीत्यादौ चक्रवर्तिनं हर्षमद्राक्षीदिति सम्बन्धः । मदजलेन

१. अन्तपुरं D. २. अक्षुण्णेत्यादि । न क्षुण्णाः परिशीलिताः प्रकृष्टा दोषा येन । अथ च क्षुण्णो मेघादिनावृतोपूर्वो वा प्रदोषः C3. ३. °मण्डनानां A. B. ४. अकालप्रा° T. Jambû ed. ५. अपूर्वं हिमा° D. ६. मनसि T. Jambu ed. ७. पर्वताः T. Jambû ed. ८. परमाणुतां K. T. Jambû ed. ९. विस्मयमानमेवैतं K2. Jambû ed. विस्मयमानमेतं K. विस्मयन्तमेवं A. १०. °आलिखतां K. T. आखिलतां° B. ११. चित्तासा° D. चिन्तासाधनेति । चिन्तया करिप्रभृतिसैन्यस्य सम्भावनं C3. १२. आकुलेति । दर्पशातस्य स्मरणेनापि भिया विकलतां गते मनसि कुत काल्पनिकगजसम्भावः । तद्धेतोः कल्पनाया अप्यसत्त्वादिति भावः । अथ च मानसाख्ये सरसि विलसतो दिग्गजा न पिनसहत इत्युक्तिलेशः C3. १३. स्मृतिपदं B. स्मृति_ष्ठं K. १४. °पुनरभावे C1. १५. C1. omits मनः १६. C1. omits दिशः

तदेहि पुनरप्येनं[1] द्रक्ष्यसि पश्य तावद्देवमित्येवमभिधीयमानश्च तेन मदजलकज्जलकालकपोलपट्टपतितां मत्तामिव[4] मदपरिमलेन मुकुलितां कथमपि तस्माद्दृष्टिमाकृष्य तेनैव[5] दौवारिकेनोपदिश्यमानवर्त्मा समतिक्रम्य भूपालकुलसहस्रसङ्कुलानि[6] त्रीणि कक्षान्तराणि[7] चतुर्थे भुक्त्वा स्थानमण्डपस्य पुरस्तादजिरे स्थितं दूरादूर्ध्वस्थितेन प्रांशुना[10] कर्णिकारगौरेण व्यायामव्यायतवपुषा[11] शस्त्रिणा[12] मौलेन[13] शरीरपरिवारकलोकेन[14] पङ्क्तिस्थितेन कार्तस्वरस्तम्भमण्डलेनेव परिवृतमासन्नोपविष्टविशिष्टलोकं[15] हरिचन्दनरसप्रक्षालिते तुषारशीकरशीतलतले दन्तपाण्डुरपादे[16] शशिमय इव मुक्ताशैलशिलापट्टशयने समुपविष्टं शयनीयपर्यन्तविन्य-

पङ्किले कपोलपट्टे पतितां मत्तामिवेति। मत्तश्च पतति। मुकुलितदृष्टिश्च भवति। गतिवैकल्यादन्येन कृष्यते। भोजनं भोक्तव्यं। भुक्तेसत्यास्थानं लोकदर्शनं तदर्थं मण्डपस्तस्य। ऊर्ध्वस्थितेत्यादि साधारणं। प्रांशुनोन्नतेन। अन्यत्र प्रकृष्टा अंशवो यस्य तेन। कर्णिकारमारग्वधपुष्पं। व्यायामः श्रमः। व्यायतं विभक्तावयवं विशेषेण दीर्घं च। शस्त्रिणा सायुधेन। स्तम्भा अपि शस्त्रेण बध्यन्ते। मौलभृतकश्रेणिमित्रामित्राटविकभेदेन षट्प्रकाराः सहाया भवन्ति। अन्यत्र मूले बुध्ने भवं मौलं बुध्नप्रतिष्ठमित्यर्थः। पङ्क्तिस्थितेनेति साधारणं। कार्तस्वरं सुवर्णं। यस्योद्घृष्यमाणस्य सतः कुङ्कुमस्येव रागो जायते सौगन्ध्यं च तद्धरिचन्दनं। शशिमय इति वक्ष्यमाणाभिप्रायेण। तुषारेत्यादिना शीतत्वममुष्य दर्शयति। दन्ते तद्वच्च पाण्डुरे पादे रत्नमयोऽपि पादाः। मुक्तेत्यादिना शुक्लतयापि। शशिमय इवेत्येतदेव

१. K. T. Jambû ed. omit एवं २. °मलक° A.B. ३. K.T. omit काल. ४. मत्तामिति। मत्तश्च मलिनेऽपि पतति मुकुलितनेत्रश्च भवति। अन्येन च वैकल्यादाकृष्यत इति C3. ५. D. omits दौवारिकेन. ६. सङ्कुलितानि T. Jambû ed. ७. कक्ष्यान्तराणि K. Jambû ed. ८. सत्या° K2. Jambû ed. ९. पुरस्थाद° B. १०. प्रांशुना। प्रकृष्टदीप्तिः C3. ११. व्यायामेत्यादि। व्यायामः श्रमस्तेन व्यातममांसलतया विभक्तावयवां विशेषेणायत्तं च C3. १२. शस्त्रिणेति। एकत्र शस्त्रं लोहं तद्वद्बन्धात्तद्वत्ता C3. १३. मौलेनेति। क्रमागतः C3. मौकुलकमायातेन marginally corrected in A. १४. परिवारलोकेन D. परिचारक° K. T. Jambû ed. १५. विष्टविशिष्टष्टलोकं K. T. Jambû ed. १६. पाण्डुरेति। करिणा अपि C3.

स्ते समर्पितसकलविग्रहभारं भुजे दिङ्मुखविसर्पिणि देहप्रभावितानै विततमणिमयूखे घर्मसमयसुभगे सरसीव मृदुमृणालजालजटिलजले स[1]राजकं रममाणं तेजसः[2] परमाणुभिरिव केवलैर्निर्मितमनिच्छन्तम[3]पि बलादारोपयितुमिव सिंहासनं सर्वावयवेषु सर्वलक्षणैर्गृहीतं गृहीतब्रह्मचर्यमालिङ्गितं राजलक्ष्म्याः प्रतिपन्नासि[4]धाराधारणव्रतम[5]विसंवादिनं रा[6]जर्षिं विषमराजमार्ग[7]विनिहितपदस्खलनभियेव[8] सुलग्ने धर्मे[9] स[10]कलभूपालपरित्यक्तेन भीतेनेव लब्धवाचा सर्वात्मना सत्येन[11] सेव्यमानमा-

पोषयति । विग्रहः कायो रणश्च । घर्मेत्यादि मणीनां स्वभावत एव शीतत्वात्तदीया मयूखा अपि ल्हादयन्ति । यो हि बलवानारोप्यते स सर्वाङ्गेषु गृह्यते । गृहीतब्रह्मचर्यमिति स्वदारसन्तुष्ट ऋतुकाल[12]गामी गृहस्थोचितव्यापारो ब्रह्मचार्ये[13]वेति श्रुतिः । य[14]त्त्वेवमनुभूयते । यावन्मया न सकला जिता भूमिस्तावन्मे ब्रह्मचर्यमिति श्रीहर्षः प्रतिज्ञातवान् । द्वादशभिश्च वर्षैर्जित्वा तां महीषीमब्रवीत् । प्रतिज्ञा मे निर्व्यूढेति । ततो रोषादहमपि द्वादशवर्षं ब्रह्मचर्यं चरामीति सा प्रतिज्ञामकरोत् । इति ब्रह्मचर्येणाज्ञाकालोतिवाहितः । यश्च गृहीतब्रह्मचर्यः स कथं योषितालिङ्ग्यत इति विरोधः । असिधारा खड्गधारा व्रतविशेषश्च । यत्र स्त्रीपुंसावेक[15]पटौ ब्रह्मचर्येण तिष्ठतः । यश्च प्रतिपन्नेषु विश्वासितेषु खड्गधारां पातयति स कस्मान्न विसंवदते । नान्यथा भवति । कथं च । राजर्षिरसावुच्यत इति विरोधः । यश्च राजर्षिरुत्तममुनिर्गृहीतासिधारो ब्रह्मचारी च स कयाचि[16]दालिङ्ग्येत । विषमोऽशक्यानुष्ठानः ततोन्नतरूपो मार्गो व्यवहारः पन्थाँ[17]श्च । विषमे पथि च स्खलति येन क्वचित्सुलग्नेन भूयते । लब्धवाचेति । सत्यस्य वागेवाश्रयणीयश्च सर्वैस्त्यक्तः सन्भीतः संस्त्वां त्यजामीति वाचं

१. सराजकं A. B. २. तेजः पर° A. B ३. K. T. Jambû ed omit अपि. ४. असिधाराधारिणमपि° A. B. ५. अविसम्वादिनं । यश्चाङ्गीकृतेषु खड्गधारां धारयति स कथं नान्यथावादी कथं च राजर्षिरिति विरोधः C3. ६. राजर्षिविषम° A. B. ७. मार्गनिहित° A. B. ८. पदेति । प्रतिष्ठा च C3. ९. धर्मे । धनश्च C3. १०. सर्वभू° A. B. ११. सत्येनेति । सत्यस्य हि वचनमाश्रयः । यश्च सर्वैस्त्यक्तः स त्यागभयादेव न त्वां त्यजामीति वाचं प्राप्यान्यं न सेवते C3. १२. कालाभिगामी C3. १३. ब्रह्मचार्येवेति श्रुतेः C1. C2. Jambû ed. १४. या त्वेवम° C2. Jambû ed. १५. पुंसावक° C1. C2. Jambû ed. १६. आलिङ्गेत C2. १७. मार्गाश्च C3.

सञ्चारविलासिनीप्रतियातनाभिश्[१]चरणनखपातिनीभिर्दिग्भिरिव दशभि[२]र्विग्रहावर्जिताभिः प्रणम्यमानं दीर्घैर्दिगन्तपातिभिर्[३]दृष्टिपातैर्लोकपालानां कृताकृतमिव प्रत्यवेक्षमाणं मणिपादपीठ[४]पृष्ठप्रतिष्ठितक[५]रेणोपरिगमनाभ्यनुज्ञां मृग्यमाणमिव दिवसकरेण भूषणप्रभासमुत्सारणबद्धपर्यन्तमण्डलेन प्रदक्षिणीक्रियमाणमिव [६]गलितोष्मणा दिवसेनाप्रणमद्भिर्गिरिभिरपि [७]भूभृद्भिर्दूयमानं शौर्योष्मणा [८]फेनायमानमिव चन्दनधवलं लावण्यजलधिमुद्वहन्तमेकराज्यो[९]र्जितेन निजप्रतिबिम्बान्यपि [१०]नृपचक्रचूडामणिधृतान्यसहमानमिव [११]दर्पदुःखासिकया चामरानिलनिभेन बहुधेव श्वसन्तीं राजलक्ष्मीं दधानं सकलमिव [१२]चतुःसमुद्रलावण्यमादायोत्थितया श्रिया [१३]समुपश्लिष्टमा[१४]भरणमणिकिरणजालजायमानानीन्द्रधनुः सहस्राणीन्द्रप्राभृतप्रहितानि विलम्बमानमिव राज्ञां सम्भा[१५]षणेषु परित्यक्तमपि मधुवर्षन्तं [१६]काव्यकथास्वपीतमप्यमृतमुद्वमन्तं विस्रम्भभाषितेष्वनाकृष्टमपि हृदयं

लब्ध्वान्यं सेवते। वारविलासिनी शरीरोपचारचतुरामुख्यललना। प्रतिबिम्बदशभिरिति नखानां दिशां च दशसंख्याकत्वात्। मणिपादेति मणिसम्बन्धप्रतिष्ठानमेव पोषयति। करो हस्तोपि। फेनायमानमिति जलं सन्तापेन सफेनं भवति। असहमानमिवेति। कथं सामान्येन समान इति। सकलमित्यादि सकलपदेन चतुःशब्देन च शौरेरस्य विशेषमाह। यतो लवणत्वस्य तत्राद्यापि शिष्यमाणत्वात्। अलं लावण्यमादाय। एकस्माच्च समुद्रादुत्थाय लक्ष्म्याः शौरिः समुपश्लिष्टः लावण्यं लवणता सौन्दर्यं च।

---

१. चरणनखेति। यश्च नमति स पादनखेषु पतति C3. २. K. K1. K2. T. Jambû ed. omit this विग्रहेति। युद्धेन वशीकृताभिः शरीरं च विग्रहः C3. ३. °सृष्टिपातै K. T. ४. °पृष्ठ° A. B. सृष्ट° K. ५. करेणेति। यश्च देशं प्रार्थयति स हस्ताभ्यां पादपीठं स्पृशतीति C3. ६. K. K1. K2. T. Jambû ed. omit गलितोष्मणा. ७. K. K1. T. Jambû ed. omit भूभृद्भिः ८. फेनायमानं। तापेन हि जलं सफेनं स्यात् C3. ९. °राज्योर्जित्येन A. B. K. १०. नृपतिचक्र° T. Jambû ed. ११. K2. T. Jambû ed. omit दर्पदुःखा° down to सकलमिव; दर्पदुःखेति। बलादहमनेन स्थिरीकृता C3. १२. चतुः समद्रेति। एकस्मादेव जलधेरुत्थाय लक्ष्म्याः शौरिरालिङ्गितः। अयं चतुर्भ्य इति व्यतिरेकः C3. १३. समाश्लिष्टं A. B. १४. आभरणप्रभाजाल° K. K1. Jambû ed. १५. सम्भाषणेपि T. Jambû ed. १६. काव्यकथास्ववमपीतमपि marginally noted in A., काव्यकथास्वधीतमपि K., काव्यकथासु पीतमपि T. Jambû ed.

दर्शयन्तं प्रसादेषु निश्चलामपि श्रियं स्थाने[1] स्थाने स्थापयन्तं वीरगोष्ठीषु पुलकितेन कपोलस्थलेनानुरागसन्देशमिवोपांशु[2] शृण्वन्तमतिक्रान्तसुभट[3]कलहालापेषु स्नेह[4]वृष्टिमिव तृष्टिमिष्टे कृपाणे पातयन्तं परिहासस्मितेषु गुरुप्रतापभीतस्य राजकस्य स्वच्छमाशयमिव दशनांशुभिः कथयन्तं सकललोकहृदयस्थितमपि न्याये निष्क्रा[5]न्तमगोचरे गुणानामभूमौ[6] सौभाग्या[7]नामविषये वरप्रदानानामशक्य आशिषाममार्गे मनोरथानामतिदूरे दैवस्यादिश्युपमानानाम[8]साध्ये धर्मस्यादृष्टपूर्वं लक्ष्म्या[9] महत्त्वे स्थितमरुणपादपल्लवेन सुगतमन्थरोरुणा[10] वज्रायुध[11]निष्ठुरप्रकोष्ठपृष्ठेन वृषस्कन्धेन भास्वद्बिम्बाधरेण प्रसन्ना[12]वलोकितेन चन्द्रमुखेन[13] कृष्णकेशेन वपुषा सर्वदेवतावतारमिवैकत्र दर्शयन्तमपि च मांसलमयूख[14]मालामलिनितमहीतले[15] महति महार्हे[16] माणिक्यमालामण्डितमेखले महानीलमये पादपीठे

प्राभृतं ढौकनिकं। मधु मद्यममृतं च। विस्रम्भ आश्वासः। उपांशु प्रकटं। अतिक्रान्ते कलहे रणे शस्त्राणां स्नेहो दीयते। रुधिरादि सलिलनिवारणाय। स्वच्छं निर्मलं। सुप्रसादमाशयं भावं। प्रकृष्टतापभीतस्य च स्वच्छो निर्मल आशयो जलाधारो दृश्यते। अत्र प्रतापेत्यादि प्रकरणसाहचर्यात्स्वच्छतान्यथानुपपत्त्या च जलशब्दं विना जलाशय एव प्रतीयते। न्याये तिष्ठन्तं न्यायसमुञ्चन्तमित्यर्थः। यः सर्वेषां हृदयस्थितः स एकस्मिन्नेव तिष्ठतीति विरोधः। अरुणो लोहितोनूरुश्च। शोभनं गमनं ययोस्तौ मन्थरावूरू यस्य बुद्धश्च सुगतः। वज्राख्यमायुधं तद्वन्निष्ठुरं कठोरं प्रकोष्ठस्य पृष्ठं यस्य तेनेन्द्रश्चास्य वज्रमायुधं। प्रकोष्ठमन्तरं विद्यादरत्निमणिबन्धयोः। वृषो दान्तो धर्मश्च। भास्वद्भास्वरं रविश्च भास्वान्। बिम्बं फलभेदो मण्डलं च। अवलोकितं वीक्षितं बुद्धिभेदश्चावलोकितः। कृष्णः कालः हरिश्च कृष्णः।

१. स्थानस्थानेषु A. B. २. इवोपांश्वरण° A. ३. A. B. omit सुभट. ४. स्नेहेति। अनेन जितकाशिनो वयमिति स्नेहः C3. ५. तिष्ठन्तं। संसजन्तमित्यर्थः C3. ६. अभूमौ। भाग्यादीनि तावन्महत्त्वस्य कारणान्यस्य च तेषामसाध्यमपूर्वमेवेति [C3. ७. भाग्यानां A. B. ८. दैवस्यादिशित उपमा° K. [दैवस्यादिश्यमानानां T. Jambû ed. ९. लक्ष्म्येति। देवतापक्षे सर्वत्र रूपकं C3. १०. सुगतमन्थरोरुणा K. ११. वज्रायुधेति। वज्ररूपमायुधमिन्द्रश्च C3. १२. प्रसन्नेति। बुद्धभेदश्चावलोकितस्ततो विशेषणसमासः C3. १३. मुखचन्द्रेण T. Jambû ed. १४. °मूख° T. Jambû ed. १५. महीमण्डले A. B. १६. महार्हमाणिक्य° A. B.

[१]कलिकालशिरसीव सलीलं विन्यस्तवामचरणमाक्रान्तकालियफणाचक्रबालं बालमिव [२]पुण्डरीकाक्षं क्षौमपाण्डुरेण [३]चरणनखदीधितिप्रतानेन प्रसरता महीं महादेवीपट्टबन्धेनेव महिमानमारोपयन्तमप्रणतलोकपालकोपेनेवातिलोहितौ सकलनृपतिमौलिमालास्वातिपीतं पद्मरागरत्नातपमिव वमन्तौ सर्व[४]तेजस्विमण्डला[५]स्तमयसन्ध्यामिव धारयन्तावशेषराजककुसुमशेखरमधुरसस्रोतांसीव स्रवन्तौ समस्तसामन्तसीमन्तोत्तंसस्रक्सौरभभ्रान्तैर्भ्रमरमण्डलैरमित्रोत्तमाङ्गैरिव मुहूर्तमप्यविरहितौ सम्वाहनतत्परायाः श्रियो विकच[६]रक्तपङ्कजवनवासभवनानीव कल्पयन्तौ [७]जलजशङ्खमीन[८]मकरसनाथतलतया कथितचतुरम्भोधिभोगचिह्नाविव चरणौ दधानं दिङ्नागदन्तमुसलाभ्यामिव विकट[९]मकरमुखप्रतिबन्धबन्धुराभ्यामुद्वेललावण्यपयोधिप्रवाहाभ्यामिव [१०]फेनाहितशोभाभ्यां कल्पचन्दनद्रुमाभ्यामिव [११]भोगिमण्डलशिरोरत्नरश्मिरज्यमानमूलाभ्यां हृदयारोपितभूभार[१२]धारणमाणिक्यस्तम्भाभ्यामूरुदण्डाभ्यां [१३]राजमानममृतफेन[१४]पटल[१५]पाण्डुना

कलिकालेति कलिकालस्य मलिनत्वादेवमुत्प्रेक्षा । वामपादेन पराभवनीयत्वमेव पोष्यते । कालियो नागभेदः । पुण्डरीकाक्षमिति [१६]राज्ञो विशेषणं । तेजस्विनो वीरा आदित्याश्च । जलजेत्यादीनि महाराजविशेषणानि लक्षणानि । एवमादि च सम्भवति मकरमुखं जानुसन्धिर्मकरमुखचिह्नितान्तकपोलश्च । उद्वेलतया लावण्यस्य समुच्छलद्रूपत्वमाह । फेनो रससन्तानो डिण्डीरश्च । भोगिनो नृपाः सर्पाश्च । फेनवत्तैश्च पाण्डु ।

---

१. कलिकालेति । मलिनत्वात्कलिकालस्यैवमुत्प्रेक्षा C3. २. पुण्डरीकं T. Jambû ed. ३. चरणेन नख° A. ४. तेजस्वीति । वीरसमूहो रविबिम्बं च C3. ५. °स्तःपमय° D. ६. °रत्न° T. Jambû ed. ७. जलजेत्यादि । एकत्र जलजादीनि चक्रवर्तिलक्षणानि । अन्यत्र समुद्रे तेषां सम्भवादवगाहमानस्य पादयोस्तानि लग्नान्ति C3. ८. मकरेति । एकत्रोरुजानुसन्धिर्मकरमुखचिन्हितदन्तकोशश्च C3. ९. K2. T. Jambû ed. omit मकर. १०. फेनाहितेति । कृष्णफनसत्को झामको गौडप्रसिद्धः । तेन हि रोमाणि घर्षयित्वापनीयन्ते C3. ११. भोगिमण्डलेति । बलवद्गृहीतैराजचूडामणिभिः कट्याभरणस्य कृतत्वात् C3. १२. °भरण° A. B. °चरण° D. १३. विराजमानं K. T. १४. °पिण्डपाण्डुना K. T. Jambû ed. १५. पाण्डुनेति । तद्वत्तेन च C3. १६ राज्ञोपि वि° C3.

मे[1]खलामणिमयूखखचितेन नि[2]तम्बबिम्बव्यासङ्गिना वि[3]मलपयोधौतेन ने[4]त्रसूत्रनिवेशशोभिनाधरवाससा वासुकिनिर्मोकेणेव मन्दरं द्योतमानम[5]घनेन स[6]तारागणेनोपरिकृतेन द्वि[7]तीयाम्बरेण भुवनाभोगमिव भासमान[8]मिभपतिदशनमुसलसहस्रोल्लेखक[9]ठिनमसृणेनाप[10]र्याप्ताम्बरप्रथिम्ना विविधवाहिनीसङ्क्षोभकलकलसम्मर्दसहिष्णुना कैलासमिव म[11]हता स्फटिक[12]तटेनोरुणोरः क[13]पाटेन विराजमानं श्रीसरस्वत्योरुरोवदनोपभोगविभागसूत्रेणेव पातितेन शेषेणेव च त[14]द्भुजस्तम्भवि[15]न्यस्तसमस्तभूभारलब्धविश्रान्तिसुखप्रसुप्तेन हारदण्डेन परिवेष्टितकन्धरं जीर्णितावधिगृहीतसर्वस्वमहादानदीक्षा[16]चीवरेणेव हारमुक्ताफलानां किरणनिकरेण प्रा[17]वृतवक्षःस्थलमजजिगीषया बालैर्भुजैरिवापरैः प्ररोहद्भिर्बाहूपधानशायिन्याः श्रियः कर्णोत्पलमधुरसधारासन्तानैरिव गलद्भिर्भुजजन्मनः प्रतापस्य[18] निर्गमनमार्गैरिवा[19]विभवद्भिररुणैः

मेखला रशना पर्वतमध्यभूमिश्च । पयो जलं क्षीरं च । नेत्रसूत्रं पट्टसूत्रं मन्थनरज्जुश्च । अघनेन छातेनानभ्रेण च । ताराः सूत्रबिन्दवो नक्षत्राणि च । अम्बरं वासो नभश्च । इभपतीत्यादि साधारणं । अपर्याप्तमम्बरं वासो यस्य तादृक्प्रथिमा यस्य । अम्बरं च खं । वाहिनी सेना नदी च । अन्यपर्वतसाधारण्येपि छायावत्त्वादुन्नतत्वाच्च कैलासमिवेत्युक्तं । हारेत्यादिना । उरुत्वं काठिन्यमाह । परिवलिता परिवेष्टितेति पाठे व्याप्तेत्यर्थः । अजो हरिः । भुजेत्यादिना सेनादिकृतं नयादिकृतं च प्रतापं व्यवच्छिनत्तिमा-

१. मेखलेति । कट्याभरणं गिरिमध्यभूश्च C3. २. नितम्बेति । जघनं कटकश्च C3. ३. विमलपय इति । जलं दुग्धं च C3. ४. नेत्रसूत्रेति । पट्टसूत्रं मन्थनरज्जुश्च । तस्य निवेशे स्थाने शोभते । वासुकेर्नेत्रीभूतत्वान्निर्मोकस्य तत्र सम्भवः C3. ५. अघनेन *secunda manu* corrected into जघनेन in A. अघनेन । अच्छेन निरभ्रेण च C3. ६ सतारेति । पुल्लिकाश्च C3. ७. द्वितीयाम्बरेण । उत्तरीयवस्त्रमपरं नभश्च C3. ८. इभपतीति । ऐरावणोपि C3. ९. कठिनमसृणितेना° A. B. १०. अपायासाम्बरेति । रसनस्य नभसश्च C3. ११. महास्फटिक° A. B. १२. तटेनोरः A. B. १३. कवाटेन K. T. १४. A. B. omit तत्. १५. °न्यस्तभूभार° A. B. १६. °चीरेणेव K. K2. Jambû ed. १७. प्रावृतोरः स्थलं A. B. १८. निर्गममार्गैः A. B. १९. अविक्रामद्भिर° A. B. २०. हासेत्यादिना C1.

केयूररत्नकिरणदण्डैरुभयतः प्रसारितमणिमयपक्षवितानमिव माणिक्यमहीधरं सकललोकालोकमार्गार्गलेन चतुरुदधिपरिक्षेपखात[1]शातकुम्भशिलाप्राकारेण [2]सर्वराजहंसबन्धवज्रपञ्जरेण भुवनलक्ष्मी प्रवेशमङ्गलमहामणितोरणेनाति[3]दीर्घदोर्दण्डयुगलेन दिशां दिक्पालानां च युगपदायतिम[4]पहरन्तं [5]सौन्दर्यलक्ष्मीचुम्बनलोभेन कौस्तुभमणेरिव मुखावयवतामुपगतस्याधरस्य गलतारागेण पारिजातपल्लवरसेनेव सिञ्चन्तं दिङ्मुखान्यन्तरान्तरामुद्गतपरिहासस्मितैः [6]प्रकीर्यमाणविमलदशनशिखा[7]प्रतानैः प्रकृतिमूढाया [8]राजश्रियाः प्रज्ञालोकमिव दर्शयन्तं मुखजनितेन्दुसन्देहागतानि [9]कुमुदिनीवनानीव [10]प्रेषयन्तं स्फुट[11]स्फटिकधवलदशनपङ्क्तिकृतकुमुदवनशङ्काप्रविष्टां शरज्ज्योत्स्नामिव [12]विसर्जयन्तं मदिरामृतपारिजातगन्धगर्भेण भरितसकलककुभामुखामोदेनामृतमथनदिवसमिव सृजन्तं विकचमुखकमलकर्णिकाकोशेनानवरतमापीयमानश्वाससौरभमिवाधोमुखेन नासावंशेन चक्षुषः क्षीरस्निग्धस्य धवलिम्ना दिङ्मुखान्यपूर्ववदनचन्द्रोदयोद्वेल[13]क्षीरोदोत्प्लावितानीव कुर्वाणं विमलकपोलफलकप्रतिबिम्बितां चामरग्राहिणीं विग्रहिणीमिव [14]मुखनिवासिनीं सरस्वतीं दधानमरुणेन चूडामणिशोचिषा सरस्वतीर्ष्याकुपितलक्ष्मी[15]प्रसादनलग्नेन चरणालक्तकेनेव लोहितायितललाटतटमापाटलांशु[16]तनुतन्त्रीसन्तानवलयिनीं कुण्डलमणिकुटिलकोटिबाल-

णिक्यमुत्कृष्टो मणिश्चतुर्णामुदधीनां सम्बन्धीपरिक्षेप एव खातं परिखायस्य । स तादृग्दाढर्याच्छिलाप्राकार इव तेन परिखां कृत्वान्तरे प्राकारो दीयत इति स्थितिः । राजहंसा राजोत्तमा हंसभेदाश्च । आयतिर्दैर्घ्यं प्रतापश्च[17]। कर्णिका कोशश्चक्रं च । आपीयमानं श्वाससौरभ यस्य तं । अधोमुखेनेत्यनेन सुलक्ष्यत्वं सौरभस्य । तथापीयमानानुमितिं दर्शयति । अंश एव तन्त्रीसन्तानः स एव वलयाकारत्वाद्वलय विद्यते यस्यास्तां । कुण्डलमणिकुटिलकोटिमिव बालवीणां सप्ततन्त्रीकां विपञ्चीं वादयतां । अनवरतेत्यादिना व्यापारसा-

१. K. K2. T. Jambû ed. omit शातकुम्भ. २. सर्वराजेति । विशिष्टा राजानश्च Cs. ३. अतिदीर्घेण B. ४. अपहसन्तं A. B. ५. सौदर्य° K. T. Jambû ed. सौदर्य° A. B. ६. प्रकीर्यमाणैर्विमल° T Jambu ed. ७. °ज्योत्स्नाप्रतानैः A. B. ८. राज्यश्रियः A. B. ९. कुमुदवना° A. B. १०. प्रक्षयन्तं A. B. ११. K. K2. T. Jambû ed. omit स्फटिक. १२. विवर्जयन्त D. १३. क्षीरोद्रसप्लाविता° A.B.K. १४. D. omits मुखानिवासिनी. १५. °प्रसाधन° T. Jambû ed. °प्रसादलग्नेन A. B. १६. K. K2. Jambû ed. omit तनु. १७. here Cs. shows a *hiatus valde deplorandus* of 159 Folios.

वीणामनवरतचलितचरणानां वादयतामुपवीणायतामिव स्वर[1]व्याकरण-विवेकविशारदं श्रवणावतंसमधुकरकुलानां कलक्वणितमाकर्णयन्तमुत्फु[2]ल्लमालतीमयेन राजलक्ष्म्याः कचग्रहलीलालग्नेन नखज्योत्स्नावलयेनेव मुखशशिपरिवेषमण्डलेन मुण्डमालागुणेन परिकलित[3]केशान्तं शिखण्डाभरणभुवा मुक्ताफलालोकेन मरकतमणि[4]किरणकलापेन चान्योन्यसम्बलनवृजिनेन प्रयागप्रवाहवेणिकावारिणेवागत्य स्वयमभिषिच्यमानं श्रमजलविलीनवहलकृष्णागुरुपङ्क[5]तिलककलङ्ककल्पितेन कालिम्ना प्रार्थनाचाटुचतुरचरणपतनशतश्यामिकाकिणेनेव नीलायमानललाटेन्दु[6]लेखाभिः क्षुभितमानसोद्गतैरुत्कलिकाकलापैरिव हारैरुल्लसद्भिरवष्टभ्यमानाभिर्विलासवल्गन[7]चटुलैर्भ्रूलताकम्पैरीर्ष्ययाश्रियमिव तर्जयन्तीभिरायामिभिःश्वसितैरविरलपरिमलैर्मलयमारुतमयैः पाशैरिवाकर्षन्ती[8]भिर्विकटवकुलावलीवराटक[9]वेष्टितमुखैर्वृहद्भिः स्तनकलशैः स्वदारसन्तोषरसमिवाशेषमुद्धर[10]न्तीभिः कुचोत्कम्पिकाविकारप्रेङ्खितानां हार[11]तरलमणीनां रश्मिभिराकृष्यहृदयमिव हठात्प्रवेशयन्तीभिः प्रभामुचामाभरणमणीनां मयूखैः प्रसारितै

हृदयेनोक्तं वदतामिति । वीणया उपगायतामुपवीणयतामिति । गानस्य प्राधान्यं प्रतिपादयति । स्वर[12]व्याकरणं विशाखि[13]लादिकमित्यादिना गानं दर्शयति। परिवेषः परिधिः । वृजिनेन शकलेन कलुषेण वा। प्रयागो गङ्गायमुनासङ्गमः । तत्प्रवाहस्य वेणिकारूपेण वारिणेव । श्रमजलेत्यादौ वारविलासिनीभिः सर्वतो विलुप्यमानसौभाग्यमिवेति सम्बन्धः । प्रार्थनाचाट्वित्यादौ प्रार्थनादीनि सर्वाणि श्रीहर्षविषयाणि ज्ञेयानि । मानसं सरश्चेतश्च । उत्कलिका रुहरुहिका वीचयश्च । अविरलेत्यादिना धारणं । आकर्षणं वशीकरणं समीपप्रापणं च । विकटेत्यादिना । उद्दीपनभावमेव पोषयति । वराटको[14] रज्जुः । वृहद्भिरिति बृहत्त्वेन हृद्यत्वमेषामाह । बृहत्वादेव च वक्ष्यति । अशेषमिति । स्तनकलशैरिति कलशैः[15] । किलरज्जुवेष्टितमुखैः ।

---

१. स्वर° T. Jambû ed. स्वरविवेक° A. B. २. तत्फुल्ल° K. K2. ३. परिकरित° A. B. परिकल्पित° K. T. ४. A. B. omit मणि. ५. A. B. omit पङ्क. ६. ललाटलेखाभि. K. K2. T. Jambû ed. ७. °वलानचतु° A. B. K. ८. आकर्षयन्तीभिः K2. T. Jambû ed. ९. °वटारक° A. B. °वटाकर° K. K2. T. १०. उद्वहन्तीभिः B. D. ११. महातर° A. B. १२. स्वरव्याकरणं C2. Jambû ed. १३ विशालिक° C1. C2. Jambû ed. १४. वटाकरः C1. १५. स्तनैः C1. C2 Jambû ed.

बहुभिरिव[1] बाहुभिरालिङ्गन्तीभिर्जम्भानुबन्धबन्धुरवदनारविन्दावरणीकृतैरुत्तानैः करकिसलयैः सरभसप्रधावितानि मानसानीव निरुन्धतीभिर्[2] मदनान्धमधुकरकुलकीर्यमाणकर्णकुसुमरजः कणकूणितकोणानि कुसुमशर[3]शरणिकाप्रहारमूर्च्छामुकुलितानीव लोचनानि चतुरं सञ्चारयन्तीभिरन्यो[4]न्यमत्सरादाविर्भवद्भङ्गुरभ्रु[5]कुटिविभ्रमक्षिप्तैः कटाक्षैः कर्णे[6]न्दीवराणीव ताडयन्तीभिरनिमेषदर्शनसुखरस[7]राशिमन्थरितपक्ष्मणा चक्षुषा पीतमिव कोमलकपोलपालीप्रतिबिम्बितं वहन्तीभिरभिलाषलीला[8]निर्निमित्तस्मितैश्चन्द्रोदयानिव मदन[9]सहायकाय सम्पादयन्तीभिरङ्गभङ्गवलनान्योन्यघटितोत्तानकरवेणिकाभिः स्फुट[10]नमुखराङ्गुलीकाण्डकुण्डलीक्रियमाणनखदीधितिनिवहनिभेनाकिञ्चित्करकामकार्मुकाणीव रुषा भञ्जन्तीभिर्वारविलासिनीभिर्विलुप्यमानसौभाग्यमिव सर्वतः स्पर्शस्विन्नवेपमानकर[11]किसलयगलितचरणारविन्दां चरणग्राहिणीं विहस्य कोणेन लीलालसं शिरसि ताडयन्तमनवरतकरकलितकोणतया चात्मनः प्रियां वीणामिव श्रियमपि शिक्षयन्तं निःस्नेह इति [■] धनैरनाश्रयणीय इति दोषैर्निग्रहरुचिरितीन्द्रियैर्दुरुप[12]सर्प इति कलिना नीरस इति व्यसनैर्भीरुरित्ययशसा दुर्ग्रहचित्तवृत्तिरिति चित्तभुवा स्त्रीपर इति

रसो जलमुद्भ्रियते। रसोऽभिलाषो जलं च। बन्धुरं हृद्यं। कूणितः सङ्कोचितः। [13]मदनादिशब्दे विद्यमानेपि मदनान्धेत्यभिप्रायेण कुसुमशरग्रहणं। अत्र पक्षे कर्णपद त्यज्यते। अनिमेषदर्शनसुखरसराशिमिव श्रीहर्षं प्रतिबिम्बितमिति। अथ च रसो जलादिर्विमले मणिभाजनादावन्तर्वर्त्यपि प्रतिबिम्बितो लक्ष्यते। करवेणिका परस्परा[14]नुबन्धस्थितकरद्वयाङ्गुलिविन्यासः। विलुप्यमानसौभाग्यादिना ताः सुभगा इत्यर्थः। कोणो वीणादिवादनभाण्डं। प्रियामिति वीणायाः श्रियाश्च विशेषणं। निःस्नेह इत्यादा-

१. बाहुभिरिव बहुभिरा° A B २. निरुन्धयन्तीभि° K2. T. Jambû ed. ३. °शरशरप्रहार° A. °शरप्रहार° B. °शरशरनिकरप्र° K. T. ४. अन्योन्यमत्सराविर्भ° A. B ५. °भ्रुकुटि° A. B. ६. कर्णेन्दीवरैरिव A. B. कर्णेन्दीवरावताड° K. ७. °रसरसराशि° K1. T. Jambû ed. °रसरासमन्थरित° A. B. ८. °लीलानिमित्त° D. ९. °सहायकाय A. K. १०. स्फुटमुख° A. B. ११. °विसलय° K.2 T. Jambû ed. १२. दुरुपस्पर्शः A. B. १३. मदादि C1. १४. °अनुबन्ध° C1. C2.

सरस्वत्या शण्ठे इति परकलत्रैः काष्ठामुनिरिति यतिभिर्धूर्त इति वेश्याभिर्नेय इति सुहृद्भिः कर्मकर इति विप्रैः सुसहाय इति शत्रुयोधैरेकमप्यनेकधागृह्यमाणं शन्तनोर्महावाहिनीपतिं भीष्माज्जितकाशितमं द्रोणाच्चापलालसं गुरुपुत्रादमोघमार्गणं कर्णान्मित्रप्रियं युधिष्ठिराद्बहुक्षमं भीमादनेकनागायुतबलं धनञ्जयान्महाभारतरणयोग्यं कारणमिव कृतयुगस्य वीजमिव विबुधसर्गस्योत्पत्तिद्वीपमिव दर्पस्यैकागारमिव

वेतैरेकमप्यनेकधागृह्यमाणमिति सम्बन्धः। शण्ठः प्रजननाक्षमः। काष्ठा पराधारा तत्प्रधानो मुनिः काष्ठामुनिः। अतिशयवांस्तपस्वी। नेयः परवशः। शन्तनुर्नाम राजाभीष्मस्य पिता वाहिन्या गङ्गायाः पतिः। अयं तु तस्मादपि महतीनां वाहिनीनां सेनानां पतिः शन्तनुरितिपञ्चमी विभक्त इति पञ्चमी भीष्मो जितकाशी जितेन्द्रियः। यतस्त्वयिर वत्पुत्रे वासत्यस्मद्दौहित्रस्य कुतो राज्यमिति। यदा हि दाशाधिपतिना स्वसुता मत्स्योदरोद्गता मात्स्यावती नामास्मै पित्रर्थमर्थयते न दत्ता। तदैतेन प्रतिज्ञातं। नाहं राज्यं विवाहं वा करिष्यामीति। अत एव ब्रह्मचार्येवाभूत्। राजा च ततोपि जितकाशितमो जितकाशी वा। जितेन जयेन काशते शोभतेयः। तथा हि भीष्मेण रामो जितः सर्वराजमहितं च काशिराजं च जित्वा भ्रात्रर्थमम्बादिकन्या त्रयमनैषीत्। राजा तु ततोपि जितकाशितमः। द्रोणश्चापाचार्यः। स चापे धनुषि लालसः। चापलं न करोतीत्यर्थः। यद्वाचः समुच्चये। अपगता लालसा यस्य सोपलालसो निरभिलाष इत्यर्थः। गुरुपुत्रोश्वत्थामा तस्य सफलशरता। तथा शस्त्रोपसंहारोक्षमयाचितोपि कस्यचिदेकस्य मारणमन्तरेण न तदुपसञ्जहार। तत उत्तराया उदरस्थे परीक्षिति पातिते तस्मिंस्तदुपसंहृतवान्। अन्यत्रामोघा मार्गणा याचका यस्येति। मित्रः सूर्यः सुहृच्च मित्रं। क्षमा क्षान्तिः भूश्च। अनेकानि बहून्यनन्यसदृशानि च। एकशब्दस्य च साधारणार्थे तृच्। बलं सामर्थ्यं सैन्यं च। धनञ्जयोर्जुनः। महाभारतानां कुरूणां यो रणः स-

---

१. °खण्ड° B. २. काष्ठमुनिः A. B. ३. नय इति A. B. ४. शक्तयोधैः A. B. शक्रयोधैः D. ५. शान्तनोः D. ६. काशिनं K. K2. Jambû ed. ७. मार्गणत्वं D. F. ८. प्रियत्वं° ९. °द्भूता C1.

करुणायाः प्रातिवेशिकमिव[1] पुरुषोत्तमस्य खनिपर्वतमिव पराक्र-
मस्य सर्वविद्यासङ्केतकगृहमिव[2] सरस्वत्या द्वितीयामृतमन्थनदिवसमिव[3]
लक्ष्मीसमुत्थानस्य बलदर्शनमिव वैदग्ध्यस्यैकस्थानमिव[4] स्थितीनां
सर्वस्वकथनमिव कान्तेरपवर्गमिव रूपपरमाणुसर्गस्य[5] सकलदुश्च-
रितप्रायश्चित्तमिव राज्यस्य सर्वबलसन्दोहावस्कन्दमिव कन्दर्पस्यो-
पायमिव पुरन्दरदर्शनस्यावर्तनमिव धर्मस्य कन्यान्तःपुरमिव[6] कलानां
परमप्रमाणमिव[7] सौभाग्यस्य राजसर्गसमाप्त्यवभृथस्नानदिवसमिव
सर्वप्रजापतीनां गम्भीरं च प्रसन्नं च त्रासजननं च रमणीयं च
कौतुकजननं[8] च पुण्यं च चक्रवर्तिनं हर्षमद्राक्षीत् ॥

दृष्ट्वा चानुगृहीत इव निगृहीत इव साभिलाष इवातृप्त[9] इव रो-
माञ्चमुचा मुखेन मुञ्चन्नानन्दबाष्पवारिबिन्दून्[10] दूरादेव विस्मयस्मे[11]-
रः समचिन्तयत् । सोऽयं सुजन्मा सुगृहीतनामा तेजसां राशिश्चतुरुदधि-

ङ्गमः । अन्यत्र महतो भारस्य कार्यधुरायास्तरणं निर्वाहणं । प्रातिवेशिकं[12]
प्रतिबिम्बं । खनिराकरः । अपवर्गः समाप्तिः । सन्दोहः समूहः । अवभृथो
यज्ञान्तः । गम्भीरं प्रसन्नं चेति परस्परापेक्षं बोद्धव्यं । तथा च सति गम्भी-
रत्वे प्रसन्नत्वं । ऋजुत्वं चेन्न स्यात्ततो जिह्मप्रकृतित्वं प्रसज्येत । एवं
त्रासेत्यादौ बोद्धव्यं । तथा च कालिदासः । भीमकान्तैर्नृपगुणैः स बभूवो-
पजीविनां । अधृष्यश्चाभिगम्यश्च यादोरत्नैरिवार्णवः[13] । इति दिलीपं प्रति-
वर्णितवान् । कौतुकजननमपुण्यत्वादपि[14] सम्भाव्यते । अत आह । पुण्य-
मिति । गम्भीरं च प्रसन्नं चेत्यादौ सर्वत्र विरोध उद्भाव्यः । गम्भीरं
सतमिस्रं[15] प्रसन्नं निर्मलं न भवतीति । अनुगृहीत इवेत्यादि[16] ।
एवं विधमहीपतिप्रसादवशात् । निगृहीत इवेति सङ्कोचवशात् । सा-
भिलाष इवेति तस्य दर्शनीयत्वात् । तृप्त इवेति तथैव तस्य कृतार्थत्वात् ।

---

१. प्रतिवेशकमिव A. B. २. °सङ्केतगृहमिव A. B. ३. °मथन° A. B. K. ४. वैदग्धस्य सर्वास्थानमिव A. B. ५. °परमाणुमार्गस्य D. ६. °अन्तर्धानमिव A. B. ७. °प्राणमिव T. Jambû ed. ८. कौतुककरं A. B. ९. इव तृप्त K. T. Jambû ed.; D. omits आतृप्त इव. १०. A. B. omit बाष्प ११. Here D. breaks up and shows a *hiatus valde deplorandus* of 98 Folios. १२. प्रातिवेशकं C1. C2. १३. पादै रत्नैरिव C2. १४. अपिः C1. C2. १५. तमिस्रं C1. १६. इवेति C2.

केदारकुटुम्बी भोक्ता ब्रह्म[1]स्तम्भफलस्य सकलादिराजचरितजयज्येष्ठ[2]म-
ल्लो देवः परमेश्वरो हर्षः । एतेन च[3] खलु राजन्वती पृथ्वी नास्य
हरेरिव वृषविरोधीनि बालचरि[5]तानि न च पशुपतेरिव दक्षजनोद्वे[4]-
गकारीण्यैश्वर्यविलसितानि न च शतक्रतोरिव गोत्रविनाशपिशुनाः
प्रवादा न यमस्येवातिवल्लभानि दण्डग्रहणानि न वरुणस्येव निस्त्रिंशग्रा-
हसहस्ररक्षिता रत्नालया न धनदस्येव निष्फलाः सन्निधिलाभा न
जिनस्येवार्थवादशून्यानि वि[6]ज्ञानदर्शनानि न चन्द्रमस इव बहुलदो-
षोपहताः श्रियश्चित्रमिदमत्यमरं राजत्वमपि चास्य त्यागस्यार्थिनः
प्रज्ञायाः शास्त्राणि कवित्वस्य वाचः सत्त्वस्य साहसस्थानान्युत्सा-
हस्य व्यापाराः कीर्तिर्दिङ्मुखान्यनुरागस्य लोकहृदयानि गुणगणस्य
सङ्ख्या[7] कौशलस्य कला न पर्याप्तो विषयो[8] यस्मिंश्च राजनि यतीनां

विरोधोऽत्र सुबोधः । केदारं क्षेत्रं । ब्रह्मस्तम्भं जगत् । फलं रत्नादि[9] ।
यच्च स्तम्भस्य फलं धान्यादि तद्भोक्ता कर्षको भवति । राजन्वती प्रश-
स्तराजयुता । वृषो धर्मः । अरिष्टासुरो दान्तरूपश्च । बालेति बाला हि वि-
वेकहीनत्वाद्धर्मविरुद्धमाचरन्ति । अस्य तु तस्यामपि दशायां धर्मविरो-
धाभावः । दक्षः कुशलः प्रजापतिभेदश्च । महेश्वरपक्ष ऐश्वर्यशब्दो मुख्यवृ-
त्तिः । इतरत्र गौणः । गोत्रं कुलं कुलपर्वताश्च गोत्राः । अतिवल्लभानीति ।
अतिशब्देन युक्तदण्डत्वमाह । दण्डः करो यमायुधं च । निस्त्रिंशग्राहाः
खड्गहस्ताः । तत्र जलचरभेदाश्च । रत्नालया भाण्डागाराणि समुद्राश्च ।
निष्फला ऐश्वर्यादिफलप्राप्तिशून्या दानादिविनाकृताश्च । सन्निधिः सन्नि-
धानं । एतस्य दर्शनं सर्वस्य फलदायि भवतीत्यर्थः । अन्यत्र सन्निधयः शो-
भनानि निधनानि । अस्य दर्शनानि जिनस्येव नार्थवादशून्यानि । अर्थो-
धनं तस्य वादः । अनेनेदं लब्धमिति तेन शून्यानि । सर्वे तद्दर्शिनोऽर्थेन
युज्यन्ते । जिनस्य पुनरर्थवादशून्यानि महायानयोगाचारमाध्यमिकदर्श-
नानि बहुलाः प्रभूता दोषारागाद्याः । बहुलदोषाश्च कृष्णपक्षरात्रयः । श्रि-
यः समृद्धयः शोभाश्च । पर्याप्तः परिपूर्णः । योगपट्टका[10] यतीनामुपकरणं

---

१. °स्तम्ब° A. B. C1. २. °जगज्ज्येष्ठ° A. B. ३. A. B. K. K2. omit च. ४. दक्षोद्वेग° K. T. Jambû ed. ५. °चरितानि T. Jambû ed. ६. K. K1. T. Jambû ed omit विज्ञान. ७. सङ्ख्याः कौशलस्य B. ८. विषयोस्मिंश्च K. K1. Jambû ed. ९ रत्नानि C.2. १०. योगपट्टकः C2.

योगपट्टकाः पुस्तकमणां पार्थिवविग्रहाः षट्पदानां दानग्रहणकलहा वृत्तानां पादच्छेदा अष्टापदानां चतुरङ्गकल्पना पन्नागानां द्विजगुरुद्वेषो वाक्यविदामधिकरणविचारा इति समुपसृत्य चोपवीती स्वस्तिशब्दमकरोत् ॥

अथोत्तरेण नातिदूरे राजधिष्ण्यस्य गजपरिचारको मधुरमपरवक्त्रमुच्चैरगायत् ।

करिकलभविमुञ्च लोलतां चर विनयव्रतमानताननः ।
मृगपतिनखकोटिभङ्गुरो गुरुरुपरि क्षमते न तेङ्कुशः ॥

राजा तु तच्छ्रुत्वा दृष्ट्वा च तं गिरिगुहागतसिंहबृंहितगम्भीरेण स्वरेण पूरयन्निव नभोभागमपृच्छत् । एष स बाण इति देवे यथा ज्ञापयति देवः सोयमिति विज्ञापितो दौवारिकेण न तावदेनमकृतप्रसादं

पर्यङ्कबन्धनार्थं ते यतीनां चतुर्थाश्रमिणामेव न पुनर्योगेन युक्ताः पट्टकाः कूटप्रधानानि लेख्यपत्राणि केषाञ्चित् । एवमन्यत्रापि पुस्तकर्म लेप्यं । पार्थिवविग्रहा मृन्मयशरीराणि राजभिः सहवैराणि च दानग्रहणं मदजलदानं ऋणव्यवहारश्च । वृत्तानां गुरुलघुनियमात्मकानां । समाश्च समविषमानां पादच्छेदा भागविरामाश्चरणकर्तनानि च । अष्टापदानां चतुरङ्गफलकानां । चत्वार्यङ्गानि सेनाया हस्त्यश्वरथपत्तयः । तेषां कल्पना रचना चतुर्णामङ्गानां पाणिपादस्य च छेदः । द्विजगुरुर्गरुडोपि । वाक्यविदां मीमांसकानां । अधिकरणविश्रान्तिस्थानानि । राज्ञां च धर्मनिर्णयस्थानानि । अधिकबलो वारणः सङ्ग्राम इति केचित् । उपवीती दक्षिणावीतीकरः । उक्तं च । उद्धृते दक्षिणे पाणावुपवीत्युच्यते द्विज इति । गंजपरिचारक इति । अन्यगजपरिचारकस्य स्वजातिसमुचितं वस्तु राज्ञः प्रकृतस्मारकं जातं । तत्र करिणां स्वभावत एव रागित्वादस्यापि रागवत्त्वाद्गुजं गता स्मृतिः सञ्जातेति । भङ्गुरो वक्रः । मृगपतिनखकोटिवद्वक्र इति स्पष्टाव्याख्या । गुरुर्भारः शासिता च । उपरि पृष्ठदेशे प्रभुभावे च । अङ्कुश इवाङ्कुश इत्यपि । अत आह । तच्छ्रुत्वेति । बृंहितं गर्जितं ।

---

१. °द्वेषः A. B. २. °विच्चारः K. T. Jambû ed. ३. अथोत्तरेणातिदूरे A. B. ४. °ताननस्त्वं *secunda manu* corrected in A. ५. K. K2. Jambû ed. omit देव. ६. ज्ञापयस्ययमिति विज्ञापिते A. B. ७. °प्रसादः K. T. Jambû ed. ८. लेख्यं C1. ९. दानमहं C2. Jambû ed. १०. गजपरिचार° C2.

पश्यामीति तिर्यङ्नीलधवलांशुकशारां तिरस्करिणीमिव[1] भ्रमयन्नपा-ङ्गनीयमानतरलतारकस्या[2] यामिनीं चक्षुषः[3] प्रभां परिवृत्य प्रेष्ठस्य पृष्ठतो निषण्णस्य मालवराजसूनोरकथयत्। महानयं भुजङ्ग इति तूष्णीं[4] भावेन त्वगमित[5]नरेन्द्रवचसि तस्मिन्मूके च राजलोके मुहूर्तमिव तूष्णीं स्थित्वा बाणो[6] व्यज्ञापयत्। देवाविज्ञाततत्त्व इवाश्रद्दधान इव नेय इवाविदितलोकवृत्तान्त इव च कस्मादेवमाज्ञापयसि स्वैरिणो विचित्राश्च लोकस्य स्वभावाः प्रवादाश्च महद्भिस्तु यथार्थदर्शिभिर्भवितव्यं नार्हसि मामन्यथा सम्भावयितुमविशिष्टमिव। ब्राह्मणोस्मि जातः सोमपा[7]यिनां वंशे वात्स्यायनानां यथाकालमुपनयनादयः कृताः संस्काराः[8] सम्यक्पठितः[9] साङ्गो वेदः श्रुतानि च[10] यथाशक्ति शास्त्राणि दारपरिग्रहादभ्यागारिकोस्मि कामे[11] भुजङ्गता लोकद्वया विरोधिभिस्तु चापलैः शैशवमशून्यमासीत्। अत्रानपलापोस्म्यनेनैव[12] च गृहीतविप्रतीसारमिव[13] मे हृदमिदानीं तु सुगत इव शान्तमनसि[14] मनाविव कर्तरि वर्णाश्रमव्यवस्थानां समवर्तिनीव च साक्षाद्दण्डभृति[15] देवे शासति सप्ताम्बुराशिरशनाम्

अंशव एवांशुका अंशुकं च वस्त्रं। तिरस्करिणी जवनिका। प्रेष्ठस्यातिप्रियस्य। नेयः परवशः। स्वैरिणः स्वतन्त्राः। सोमपायिनां सोमपानां। शिक्षा कल्पो व्याकरणं ज्योतिषं निरुक्तं छन्दो विधिरिति षडङ्गानि वेदस्य। अभ्यागारिको गृहस्थः। सम्यग्वृत्तिस्थितो वा। कामे भुजङ्गतेति कामभुजङ्गता शृङ्गारित्वं। कामे मदने भुजङ्गता ज्ञेया न मादृशेषु। न हि मे काचिद्भुजं बाहुं गता प्राप्तेत्यर्थः। लोकद्वयेत्यादिना त्रिवर्गस्यानुपघातं दर्शयति शास्त्रविरोधप्रसङ्गात्। शतायुर्वै पुरुषः[16] कालमन्योन्यानुबद्धं परस्परस्यानुपघातेन त्रिवर्गं सेवतेत्यत एव[17] आह। शैशवमित्यशून्यमित्यनेन तदेकासक्तत्वं परिहरति। अनपलापो निरपह्नवः। विप्रतीसारः पश्चा-

---

१. तिरस्करणीमिव A. B. २. °पीयमान B. °अपाङ्गं पीयमान° A. ३. चक्षुः A. B. ४. तूष्णींभावेन A. B. ५. तु गमित° K. T. °भावेनानुमित° A. B. ६. बाण एव व्यज्ञापयत् A. B. ७. °पीथिनां A. B. ८. कृता मे सम्यक् संस्काराः पठितः A. B. ९. सम्पठितः K.T. १०. K.K2 Jambû ed. omit च. ११. कामौ A. कामो B. १२. अनपलापोसि B. १३. °विप्रतिसारं A. B. C1. १४. चेतसि A. B. १५. °धृति° A. B. १६. शतायुर्वा पुरुषः C1; १७. C1. omits एव.

शेषद्वीपमालिनीं महीं क इवाविशङ्कः सर्वव्यसनबन्धो रविनयस्य मनसाप्य[1]भिनयं कल्पयिष्यति। आसतां च[2] तावन्मानुष्यकोपेतास्त्वत्प्रभावादलयोपि भीना इव मधु पिबन्ति रथाङ्गनामानोपि लज्जन्त इवा[3]भ्यनुवर्त्तिव्यसनैः प्रियाणां कपयोपि चकिता इव चपलायन्ते शरारवोपि सानुक्रोशा इव श्वापदगणाः पिशितानि भुञ्जते। सर्वथा कालेन मां ज्ञास्यति स्वामी स्वयमेवानपाचीनचि[4]त्तवृत्तिग्राहिण्यो हि भवन्ति प्रज्ञावतां प्रकृतय इत्यभिधाय तू[5]ष्णीमेवाभूत् ॥

भू[6]पतिरप्येवमस्माभिः श्रु[7]तमित्यभिधाय तू[8]ष्णीमेवाभवत् । सम्भाषणासनदानादिना तु प्र[9]सादेनैनमन्वग्रहीत् । केवलममृततृ[10]ष्टिभिः स्नपयन्निव स्नेहगर्भेण दृष्टिपातमात्रेणान्तर्गतां प्रीतिमकथयत् । अस्ताभिलाषिणि च लम्बमाने सवितर्युत्थाय वि[11]सर्जितराजलोकोभ्यन्तरं प्राविशत् । बाणोपि निर्गत्य धौतारकू[12]टकोमलातपत्विषि निर्वाति वासरेस्ताचलकूटकिरीटे निचुलमञ्जरीभांसि तेजांसि मुञ्चति वियन्मुचि मरीचिमतिरोमन्थमन्थरकुरङ्गकु[13]टुम्बाध्यास्यमानम्रदिष्ठगोष्ठीनपृष्ठास्वरण्यस्थलीषु शोकाकुलकोककामिनीकूजितकरुणासु

त्तापः। सुगतो बुद्धः। समवर्ती यमः। म[14]नुषस्य भावो मानुष्यकं। रथाङ्गनामानश्चक्रवाकाः। चपलायन्ते चपलत्वमाचरन्ति। शरारवो हिंस्राः। श्वापदगणाः प्राणिसमू[15]हः। पिशितं मांसं । अनपाचीनामष्टाविपरीतेत्यर्थौ निर्दोषा वा। बाणोपीत्यादौ बाणोप्यस्मिन्सति वि[16]नाशस्थानमगादिति सम्बन्धः। रीतिः स्त्रिया मारकूटमित्यमरः। निर्वाति शाम्यति। निचुलो वेतसवृक्षः। भुक्तोद्गीर्णाहारचर्वणं रोमन्थः। म्रदिष्ठं मृदुतमं। गोष्ठी पूर्वं गोष्ठीनं गोष्ठात्खञ्भूतपूर्वे। उक्तं च। गोष्ठं गोस्थानकं तत्तु गोष्ठीनं भूतपूर्वकमि-

१. °अवकाशं A. B. °अभयं K. T. २. K. K1. T. Jambû ed. omit. च. ३. °अस्यनुवृत्ति° A. B. ४. A. B. omit °चित्त°. ५. तूष्णीमभवत् A. B. ६. नृपतिर° A. B. ७. श्रुतमित्येवमभिधाय K. K1. ८. तूष्णीमिवाभूत् A. B. ९. प्रसादेन नैनमन्वग्रहीत्. A. B. १०. °वृष्टिभिस्तर्पयन्निव A. B. ११. K2. T. Jambû ed. omit विसर्जित. १२. कूटताम्रकोमला° K. K1. १३. °कुटुम्बकाध्यास्यमानाम्रदिष्ट° A. B. १४. मनुष्यस्य C2. १५. °समूहाः Jambû ed. १६. नियम° C2.

तरङ्गिणीतटीषु वासविटपो[1]पविष्टवाचाटचटकचक्रवाले[2]ष्वालवालावर्जितसेकजलकुटे[3]षु निष्कुटेषु दिवसविहृतिप्र[4]त्यागतं प्रस्नुतस्तनं स्तनन्धये धयति धेनुवर्गमुद्गन्[5]क्षीरं क्षुभिततर्णकव्राते क्रमेण चा[6]स्तधराधरधातुधुनीपूरप्लावित इव लोहितायमानमहसि मज्जति स[7]न्ध्यासिन्धुपानपात्रे पातङ्गे मण्डले कमण्डलुजलशुचिशयचरणेषु चैत्यप्रणतिपरेषु पाराशरिषु [8]यज्ञपात्रपवित्रपाणौ प्रकीर्णब[9]र्हिषि प्रोत्तेजसि जातवेदसि हवींषि वषट्कुर्वति यायजूकजने निद्राविद्राण[10]द्रोणकुलकलिलकुलायेषु कापेयविकलकपिकुलेष्वारामतरुषु निर्जिगमिषति जरत्तरुकोटरकु[11]टीकुटुम्बिनि कौशिककुले मुनिकरसहस्रप्र[12]कीर्णे सन्ध्यावन्दनोदबिन्दुनिकर इव दन्तुरयति ना[13]कपथस्थलीं स्थवीयसि तारकानिकु[14]रुम्बेम्बराश्रयिणि शर्वरीश[15]बरीशिखण्डे खण्डपरशुकण्ठकाले कवलयति बाले ज्योतिः शेषं सान्ध्यमन्धकारावतारे तिमिरतर्जननिर्गतासु दहनप्रविष्टदिनकरकरशाखास्विव स्फुरन्तीषु दीपलेखास्वररसम्पुटसङ्क्रीडनक[16]थितावृत्तिष्विव गोपुरेषु

ति । कोकाश्चक्रवाकाः । तरङ्गिणी न[17]दी । आलवाल[18]मावापः । कुटा घटाः । निष्कुटाः स्वगृहारामाः । स्तनन्धयस्तर्णकश्च वत्सः । धुनी नदी । सिन्धुः समुद्रः । शयः करः । चैत्यमायतनं । पाराशरिषु भिक्षुषु । ह[19]वींषि कुशाः। वषडिति दानक्रियासु मोचनमन्त्रः । वषट्कुर्वति जुह्वतीत्यर्थः । यायजूकोत्यर्थं यजनशीलः। निद्राणोलसः । द्रोणः काकः । कलिला आकुला । कुलायो नीडं[20] स्त्रियां । कापेयं चापलं । कौशिका उलूकाः। स्थवीयसि स्थूलतरे । शिखण्डो जूटकः। खण्डपरशुः शिवः। करा एव शाखास्तदाकारत्वादङ्गुलयश्च करशाखाः । अ[21]ररः क[22]पाटः । सङ्क्रीडनं शब्दः। आवृत्तिः स्थगनं ।

---

१. °पोष° A. २. आलवालापवार्जित° A. B. ३. °कुटेषु A. B. ४. °प्रत्यागतप्रस्तुत° A. B. K. ५. °क्षीरक्षुधित A. K. क्षीरक्षुधितवर्णक B. ६. च मन्दरधरा A. B. ७. सन्ध्यासीधुपान° A. B. ८. A. B omit यज्ञ. ९ बर्हिष्युत्तेजसि K. T. Jambû ed. १० A. B. read द्रोणकाककुल ११. कुटीर B. कुलीय A. १२. प्रकीर्णसन्ध्या T. Jambû ed. १३. सुरपथ A. B. १४. निकुरम्बे K2. T. Jambû ed. १५. A. B. omit शबरी १६. कथितावृत्तिषु A. B. १७. नदी Jambû ed. १८. अवायाः C2. १९. बर्हींषि C1. C2. २०. नीडम° C1. C2. Jambû ed. २१. अररिः C1. २२. कवाटः C1. C2.

शयनोपजोषजुषि जरतीकथितकथे शिशयिषमाणे शिशुजने जर-न्माहिषमषीमलीमसतमसि जनितपुण्य[1]जनप्रजागरे वि[2]जृम्भमाणे भीष-णतमे तमीमुखे [3]मुखरितविततज्याधनुषि वर्षति शरनिकरमनवरतम-शेषसंसार[4]शेमुषीमुषि मकरध्वजे रताकल्पारम्भशोभिनि शम्भलीसुभा-षिनभाजि भजति भूषां भुजिष्याजने सैरन्ध्रीवध्यमानरशना[5]जालज-ल्पाकजघनासु [6]जनीषु वशिकविशिखाविहारिणीष्वनन्यजानुप्लवासु प्र-चलितास्वभिसारिकासु विरलीभवति वरटानां वेशन्तशायिनीनां मञ्जु-नि म[7]ञ्जीरशि[8]ञ्जितज[9]डे जल्पिते निद्रावि[10]द्राणद्राघीयसि द्रावयतीव च विरहिहृदयाणि [11]सारसरसिते भाविवासरबीजाङ्कुरनिकर इव च[12] विकीर्य-माणे जगति [13]प्रदीप[14]प्रकरे निवासस्थानमगात् ॥

अकरोच्च चेतस्यतिदक्षिणः खलु देवो हर्षो यदेवमनेकबालच-रितचा[15]पलोपचितकौलीनकोपितोऽपि मनसा स्नि[16]ह्यत्येव मयि यद्यहम-क्षिगतः स्यां न मे दर्शनेन प्रसादं कुर्यात् । इच्छति तु मां गुणवंतम् । उपदिशन्ति हि विनयमनुरूपप्रतिपत्त्यु[17]पपादनेन [18]वाचा-विनापि भर्तव्या[19]नां स्वा[20]मिनोऽपि च धिङ्मां स्वदोषान्धमा[21]नसमना-दरपीडितमेवमतिगुणवति राजन्यन्यथा [22]चान्यन्यथावचिन्तयन्तं सर्वथा

गोपुरं स्यात्पुरद्वारं द्वारमात्रेऽपि गोपुरं । उपजोषः सुखं तूष्णीं भावो वा । जरती वृद्धा । शिशयिषमाणे सुषुप्सति । यक्षाः स्युः पुण्यजनाः। तमी रात्रिः। शेमुषी बुद्धिः। आकल्पो वेशः। शम्भली कुट्टनी । भुजिष्या दासी । सैरन्ध्री [23]प्रसाधनोपचारज्ञा जनी । वशिका शून्या । विशिखा रथ्या । अनन्यजः कामः । अनुप्लवः सहायः। कान्तार्थिनी तु यायाति सङ्केतं साभिसारिका हंस-स्य योषिद्वरटा वेशन्तः पल्वलं । कासारमत्यल्पसरः। मञ्जीरं नूपुरं । दक्षिणोनु-

---

१. जनजागरे A. B. २. जृम्भमाणे A. B. ३. मुखरितधनुषि A. B. K2. T. ४. सेमुखी A. ५. जल B. ६. रजनीषु *secunda manu* corrected in A. ७. मञ्जरी A. B. ८. शिञ्जिते T. Jambû ed. ९. °जले A. B. १०. A. B. omit विद्राण. ११. सरसि रसिते K. T. १२. A. B. omit च. १३. दीप A. B. १४. निकरे K. १५. चापलोचित K. K2. Jambû ed. १६. स्निह्यतीव T Jambû ed. १७. उपदानेन K2.T. Jambû ed. १८. वाचं विना K1 Jambû ed. १९. कर्तव्यानां A. K. २०. A. B. omit अपि च. २१. मनस° K. २२. चान्यथा च K. T. चान्यथ चिन्तयन्तं K2. Jambû ed. २३. प्रसाधनोप.° C2.

तथाकरोमि यथा यथावस्थितं जानाति मामयं कालेनेत्ये[1]वमवधार्य चापरे द्वार्निष्क्रम्य कटकात्सुहृदां बान्धवानां च भवनेषु तावदतिष्ठद्या-वदस्य स्वयमेव गृहीतस्वभावः पृथिवीपतिः प्रसादवानभूत्[2] । अविशच्च पुनरपि नरपतिर्[3]भवनं स्वल्पैरेव चाहोभिः [4]परमप्रीतेन प्रसादजन्मनो मानस्य प्रेम्णो विश्रम्भस्य द्रविणस्य [5]नर्मणः प्रभावस्य च परां कोटि-मानयित नरेन्द्रेणेति ॥

[6]इति श्रीमहाकविचक्रचूडामणिश्रीबाणभट्टविर[7]चिते हर्षचरिते म-हाकाव्ये राजदर्शनं नाम द्वितीय उच्छ्वासः सम्पूर्णः ॥ २ ॥

कूलः । कौलीनं जनापवादः । अक्षिगतो द्वेष्यः । विश्रम्भस्याश्वासस्य द्र-विणस्य धनस्य । नर्मणः परिहासस्य ॥ [8]इति श्री[9]शंङ्करकविविरचिते हर्षच-रितसङ्केते द्वितीय उच्छ्वासः समाप्तः ॥ २ ॥

---

१. एवमेवावधार्य T. Jambû ed. २. अभवत् A. B. ३. भवनमल्पैरेव A. B. ४. परं प्रीतेन A. B. ५ नर्मणा A. B. ६. इति द्वितीय उच्छ्वासकः समाप्तः A. B. इति श्रीबाणविरचिते हर्षचरिते राजदर्शनं नाम द्वितीय उच्छ्वासः सम्पूर्णः K2. T. Jambû ed. ७. कृते K. ८. इति द्वितीय उच्छ्वासः C1. ९. श्रीशङ्करविरचिते C2. Jambû ed.

## ॥ तृतीय उच्छ्वासः प्रारभ्यते ॥



निजवर्षा हितस्नेहा बहुभक्तजनान्विताः।
सुकाला इव जायन्ते प्रजाः पुण्येन भूभुजः ॥ १ ॥
साधूनामुपकर्तुं लक्ष्मीं द्रष्टुं विहायसा गन्तुं।
न कुतूहलिकस्य मनश्चरितं च महात्मनां श्रोतुम् ॥ २ ॥

अथ कदाचिद्विरलितबलाहके चातकातङ्ककारिणि क्वणत्कादम्बे दर्दुरद्विषि मयूरमदमुषि हंसपथिकसार्थसर्वातिथौ धौतासिनिभेनभसि भास्वरभास्वति शुचि शशिनि तरुणतारागणे गलच्छुनासीरशरासने सीद-

निजेति निज आत्मीयः। वर्षो लोकः। वृष्टिश्च वर्षं। वर्षमपि निजं समुचितकालप्राप्तं। स्नेहः प्रीतिरार्द्रता च। भक्ता अनुरक्ता अदेनाश्च भक्तं। भक्तरूपाणां भूभृतां सुकालानां च प्रजाः पुण्यं हेतुः। अनेन महानुभावपुष्यभूतिवर्णना सूचिता ॥ १ ॥

साधुनामित्यादिनापि भैरवाचार्योपकारकरणं स्वयं लक्ष्मीदर्शनं विहायसा गमनं भैरवाचार्यस्य। महात्मचरितश्रवणकुतूहलं च निजभ्रात्रादीनां सूचितं ॥ २ ॥

अथेत्यादावेवंविधे शरत्समयारम्भे बन्धून्द्रष्टुं बाणो ब्राह्मणाधिवासमगादिति सम्बन्धः। विरलितान पुनरेकान्ततोपगताः। बलाहका मेघाः। चातकाः स्तोकाख्याः पक्षिणः। कादम्बाः कृष्णहंसाः। दर्दुरा मण्डूकाः। हंसा एव पथिकसार्थाः। तेषां निर्मलजलदानादिनास्यात्सर्वातिथित्वं। शुचिर्निर्मलः। शुनासीर इन्द्रः। सौदामनी विद्युत्।

१. K1. K2. C1 C2. prefix ओं २. प्रजापुण्येन A. B. C1. C2. K. Jambû ed. ३. भूभृतः A. B. ४ धर्तुं K1. T. Jambû ed. ५. *secunda manu* corrected into °तिनभसि in A. B. ६. भास्करभास्कति A. B. ७. The best Mss. read पुष्यभूति and not पुष्पभूति; °अनुभावे पुष्यभूतेनाह वर्णना C1. C2.

त्सौदामनीदाम्नि दामोदरनिद्राद्रुहि द्रुतवैदूर्यवर्णार्णसि घूर्णमानमिहिकाले[1] मेघमोघ[2]मघवति निमीलन्नीपे निष्कुसुमकुटजे निर्मुकुलकन्दले कोमलकमले मधुरस्यन्दीन्दीवरे [3]कह्लाराह्लादिनि शेफा[4]लिकाशीतलीकृत[5]निशि यूथिकामोदिनि मोदमानकुमुदावदातदशदिशि सप्तच्छदधूलिधू[6]सरसमीरे स्तवकितबन्धुरबन्धूकाबध्यमानाकाण्डसन्ध्ये नीराजितवाजिन्यु[7]द्दामदन्तिनि दर्पक्षीवोक्षके क्षीयमाणपङ्कचक्रवाले बालपुलिनपल्लवितसिन्धुरोधसि परिणामश्यानश्यामाके जनितप्रियङ्गुमञ्जरीरजसि [8]कठोरत्रपुसत्वचि कुसुमस्मेरशरे शरत्समयारम्भे राज्ञः समीपाद्ब्राणो बन्धून्द्रष्टुं पुनरपि तं ब्राह्मणाधिवासमगात् । समुपलब्धभूपालसं[9]मानातिशयपरितुष्टास्त्वस्य ज्ञातयः श्लाघमाना निर्ययुः । क्रमेण च कांश्चिदभिवादयमानः कैश्चिदभिवाद्यमानः कैश्चिच्छिरसि चुम्ब्यमानः कांश्चिन्मूर्ध्नि सं[10]माजिघ्रन्कैश्चिदालिङ्ग्यमानः कांश्चिदालिङ्गन्नन्यैराशिषानु[11]गृह्यमाणः परानुगृह्णन्बहुबन्धुमध्यवर्ती परं मुमुदे । सम्भ्रान्तपरिजनोपनीतं चासनमा-

दामोदरो हरिः । अस्य नि[12]द्रां द्रोग्धि यस्तस्मिंस्तदा किल हरिर्विबुध्यत इति वार्त्ता । अर्णो जलं । घूर्णमाना भ्रमन्तीया । मिहिका नीहारः । तद्वल्लघवस्तुच्छाये मेघास्तैर्मोघो निष्फलो मघवानिन्द्रो यत्र तस्मिन्वर्षाभावादिन्द्रस्य मोघत्वं । इन्द्रादेशे न मेघा हि वर्षन्ति । मेघवर्ज्जितमित्यन्ये । नीपाः कुटजाः । कन्दलाश्चवृक्षभेदाः । कह्लाराणि सौगन्धिकापरनामानि श्वेतोत्पलानि । जलकुसुमपत्रिकेत्यन्ये । शेफालिका पुष्पभेदो रात्रावेव विकसति । यूथिका हरिणिका । मोदमानानि विकसन्ति । सप्तच्छदाः सप्तपर्णाख्या वृक्षभेदाः । बन्धुरा हृद्याः । बन्धूका बन्धुजीवाख्या वृक्षभेदाः । नीराजिताः कृतशान्तिविधानाः । क्षीवाणीवोक्षकानि दान्तसमूहा यत्र तस्मिन् । चक्रवालं समूहः । बालं तत्क्षणस्रुतजलं । सिन्धवो नद्यः । श्यामाको नीवा[13]रः प्रियङ्गुर्व्रीहिभेदः । त्रपुसं लाडुकं । सम्भ्रान्तः सत्वरः ।

१. मेघे K. C. २. मायमति A. B. ३. कराह्लादिनि K. T. ४. शेफालिकानिलशीतलितनिशे निशीथयूथिका° A. B. ५. °निशे K. T. ६. °धुसरित° K. T. ७. तद्रामदन्तिनि K. T. उन्मदद्दन्तिनि A. B. ८. °कठोरितत्र° A. B. K. ९. °सन्माना° A. B. १०. समाजिघ्रः K. T. ११. अनुगृह्यमाणापरान° A. १२. निद्राया C1. १३. C1. C2. omit नीवारः

सोनेषु गुरुषु भेजे भजमानश्चार्चादिसत्कारं नितरां ननन्द । प्रीयमाणेन च मनसा सर्वांस्तान्पर्यपृच्छत् । कच्चिदेता[1]वतोऽपि दिवसान्सुखिनो यूयमप्रत्यूहा वा सम्यक्करणपरितोषितद्विजच[2]क्रा क्रातवी क्रिया क्रियते यथावदविकलमन्त्रभाञ्जि भुञ्जते वा[3] हवींषि हुतभुजो यथाकालमधीयते वा बटवः प्रतिदिनमविच्छिन्नो वा वेदाभ्यासः क[4]च्चित्स एव चिरन्तनो यज्ञविद्याकर्मण्यभियोगस्ता[5]न्येव व्या[6]करणे परस्परस्पर्धानुबन्धाबन्ध्यदिवसं[7]दर्शितादराणि व्याख्यानमण्डलानि सैव वा पुरातनी परित्यक्तान्यकर्तव्या प्रमाणगोष्ठी स एव वा मन्दीकृतेतरशास्त्ररसो मीमांसायामतिरसः क[8]च्चित्त एवाभिनवसुभाषितसुधावर्षिणः काव्यालापा इति । अथ[9] ते तमूचुस्तात सन्तोषजुषां सततसन्निहितविद्याविनोदानां वैतानवह्निमात्रसहायानां कियन्मात्रं[10] नः कृत्यं सुखितया सकलभुवनभुजि भुजङ्गराजदेहदीर्घे रक्षति क्षितिं [11]क्षितिपो भुजे सर्वदा सुखिन एव वयं विशेषेण तु त्वयि विमुक्तकौसीद्ये परमेश्वरपार्श्ववर्तिनि वेत्रासनमधितिष्ठति । सर्वे च यथाशक्ति यथाविभवं यथाकालं च सम्पाद्यन्ते विप्रजनोचिताः क्रियाकलापा इत्येवमादिभिरालापैः स्कन्धावारवार्ताभिश्च शैशवातिक्रान्तक्रीडा[12]नुस्मरणैः पूर्वजकथाभिश्च [13]विनोदितमनास्तैः सह सुचिरमतिष्ठत् । उत्थाय च[14] मध्यन्दिने य[15]थाक्रियमाणाः स्थितीरकरोद्धुक्तवन्तं च तं सर्वे ज्ञातयः पर्यवारयन् । अत्रान्तरे दुगूलपट्टप्रभवे शिख[16]-

सत्कारं पूजां । कच्चिदितीष्टप्रश्ने । प्रत्यूहो विघ्नः । सम्यक्करणं यथाशास्त्रं सम्पादनं । क्रतूनां यज्ञानामियं क्रातवी । अधीयत इति वेदपाठो बालानामेवोचितः । प्रमाणं तर्कविद्या । मीमांसा ब्रह्मनिदर्शनं । अत एवाह । अतिरस इति । तात इति पूजावचनं । वैतानः क्रातवः । कौसीद्यमालस्यं निष्प्रयत्नतेत्यर्थः । अत्रेत्यादौ सुदृष्टिः पुस्तकवाचक आजगामेति सम्बन्धः । दुगूलेति । एकस्माद्दुगूलपट्टाद्दीर्घाच्छित्त्वा गृहीते शिखण्डयपाङ्गपाण्डुत्वेन कौ[17]र्कश्यमपि दर्शितं ।

१. एतावन्तः A. B. २. °चक्राक्रातवी क्रियते क्रिया A. B. K. ३. K. K2. Jambû ed. omit वा. ४. कश्चिच्च स A. B. ५. तान्येव वा A. ६. व्याकरणस्य A. B. ७. °दर्शितानि T. Jambû ed. ८. कश्चिच्च त एवा° A. B. ९. A. B. omit अथ. १०. °मात्रया नः A. B. ११. क्षितिभुजः A. B. T. १२. अनुस्मरणैश्च A. B. K2 १३. A. B. omit विनोदितमनाः १४. A. B. K1. omit च. १५. यथाक्रियमाणां क्रियामकरोत् A. B. १६. शिखण्डचापाङ्ग° B. १७. कार्चकश्यमपि C1. C2.

ण्डयपाण्डुपाण्डुनीपौण्ड्रे वाससी वसानः स्नानावसानसमये वन्दितया तीर्थमृदा गोरोचनया च रचिततिलकस्तैलामलकमसृणितमौलिरनुच्चचूडाचुम्बिना निविडेन कुसुमापीडकेन[1] समुद्भासमानः[2] सकृदुपयुक्तताम्बूलविरलाधररागकान्ति[3]रेकशलाकाञ्जनजनितलोचनरुचिरचिरभुक्तो[4] वि-[5]नीतमार्यं च वेषं दधानः पुस्तकवाचकः सुदृष्टिराजगाम नातिदूरवर्त्तिन्यां चासन्द्यां निषसाद। स्थित्वा च मुहूर्त्तमिव तत्कालापनीतसूत्रवेष्टनमपि नखकिरणैर्मृदुमृणालसूत्रैरिवावेष्टितं[6] पुस्तकं पुरोनिहित[7]शरशलाकायन्त्रके निधाय पृष्ठतः सनीड[8]सन्निविष्टाभ्यां मधुकरपारावताभ्यां[9] वांशिकाभ्यां[10] दत्ते स्थानके[11] प्राभातिकप्रपाठकच्छेद[12]चिन्हीकृतमन्तरं[13] पत्रमुत्क्षिप्य गृहीत्वा च कतिपयपत्रलघ्वीं कापालिकां[14] क्षालयन्निव मषीमलिनान्यक्षराणि दन्तकान्तिभिरर्चयन्निव च[15] सितकुसुममुक्तिभिर्ग्रन्थं मुखसन्निहितसरस्वतीनूपुररवैरिव[16] गमकैर्मधुरैराक्षिपन्मनांसि श्रोतॄणां

पौण्ड्रे पुण्ड्रदेशजे। गोरोचना रक्षाद्रव्यभेदः। मौलयः केशाः। अनुच्चेति। अदीर्घतया कुसुमापीडकस्य श्रोत्रियत्वं विनीतत्वं चास्य दर्शितं निविडेन संहतपुष्पेण। रुचिरं[17] नैर्मल्यं भोजनं भुक्तमचिरं[18] भुक्तं यस्य सः। अनेन तस्या नवलिप्तत्वमुक्तं। आसन्द्यां वेत्रपीठिकायां स्थित्वेत्यादौ पुराणं पपाठेति सम्बन्धः। सनीडे समीपे। प्रपाठको वाचकः प्रपठनं वा तस्य तत्र वाछेद इयन्मात्रं वाचितं नान्यदिति। तेन चिन्हीकृतं[19] लक्षीकृतं। गमयन्ति रागस्वरूपमिति गमकाः। असाधारणानि स्वराणां निमीलनानि। ये[20] लक्ष्येष्वनन्तरं[21] मार्ग इति प्रसिद्धास्तैर्गमकैः स्वरयति विशेषैः।

---

१. आपीडेन A. B. २. समुद्भासमानोसकृदु° K. K2. Jambû ed. ३. K. K1. K2. Jambû ed. omit राग. ४. रुचिररुचिरचिर° A. B. ५. विनतमार्यं वंशं च दधानः K2. T. Jambû ed. ६. °सूत्रैरिव वेष्टितं A. B. K. ७. पुरोनिहिते A. B. ८. समोप° A. B. ९. परावाताभ्यां K. T. परापताभ्यां A. B. १०. K. K2. T. Jambû ed. omit वांशिकाभ्यां. ११. स्थाने A. B. १२. प्राभातिकपाठच्छेद° A. B. १३. °अन्तरपत्रमु° B. K. °अन्तरमुत्क्षिप्य T. Jambû ed. १४. कपटिकां K. K1. कपाटिकां T. Jambû ed. १५. K. T. Jambû ed. omit च १६. °स्खलनैरिव A. B. १७. रुचिः C2. १८. C1. omits भुक्तमचिरं. १९. चित्रीकृतं C2. २०. यानि Jambû ed. २१. लक्ष्यष्वान्तरमार्गः Jambû ed.

गीत्या [१]पवमानप्रोक्तं पुराणं पपाठ। तस्मिंश्च तथा श्रुतिसुभगगीतिगर्भं पठति सुहृष्टो नातिदूरवर्ती [२]वन्दी सूचीबाणस्तारमधुरेण [३]गीतिध्वनिमनुवर्तमानः स्वरेणेदमार्यायुगलम[४]गायत् ॥

तदपि मुनिगीतमतिपृथु तदपि जगद्व्यापि पावनं तदपि।
हर्षचरितादभिन्नं प्रतिभाति हि मे पुराणमिदं ॥
वंशानुगमविवादिस्फुटकरणं [५]भरतमार्गभजनगुरु।
श्री[६]कण्ठविनिर्यातं गीतमिदं हर्षराज्यमिव ॥

तच्छ्रुत्वा बाणस्य चत्वारः पितामहमु[७]खपद्मा इव वेदाभ्यासर्प[८]विच्चमूर्तय उपाया इव सामप्रयोगललितमुखा गणपतिरधिपतिस्तारापतिः श्यामल इति पितृव्यपुत्रा भ्रातरः प्रसन्नवृत्तयो

पवमानो वायुः। वन्दी स्तुतिपाठकः। पृथुरादि नृपोपि। पवमानं वायुप्रोक्तमपि गीतपक्षे। वंशेन वेणुना। अनुगमो ययोस्तौ विवादिनौ स्वरौ विश्रुत्यन्तरौ गान्धारनिषादौ स्वरौ यत्र तत्करणमपदः सताल आविद्धः स्वरसन्निवेशः। उच्चारणस्थानं वा भारतं भरतमुनिकृतो ग्रन्थः। श्रीकण्ठः श्रीयुक्तः कण्ठो वैस्वर्यादिदोषाभावात्। यद्वा श्रीकण्ठो हर एव सर्वविद्यानां तत एवोत्पत्तेः। हर्षराज्यमपीदृशमेव। तथा च वंशं कुलमनुगच्छत्यनुसरति यत्तद्वंशानुगं। तथाविद्यमाना विवादिनो यत्र तदविवादि। सौराज्यं न केचित्तत्र विवदन्ते। करणमधिकरणं यत्र विद्या परीक्षा धर्मनिर्णयो वा क्रियते। व्यापारो वा भरतो नाम पूर्वं राजाभूत्। श्रीकण्ठो देशभेदः। गीतमपि हर्षस्य प्रमोदस्य राज्यमिव तस्य विजृम्भमाणत्वात्। तच्छ्रुत्वेत्यादौ बाणस्य च[९]त्वारो भ्रातरः परस्परस्य मुखानि व्यलोकयन्निति सम्बन्धः। तच्छ्रुत्वेत्यादिनास्य प्रकरणस्य प्रकृतानुगुणत्वं दर्शितं। तेषां च[१०] प्रस्ताववेदित्वं। मुखपद्मा अपि चत्वारः। सामवेदभेदः सान्त्वं च मुखमारम्भोपि।

---

१. पवनप्रोक्तं A. B.; all other Mss. read as given in the text. २. वन्दि° A. B. ३. °गीत° A. B. ४. अपठत् K2. T. Jambû ed. ५. भारतमार्गणभाजन° K. T. ६. श्रीकण्ठकनिर्यातं K. K2. T. ७. °वदनपद्माः A. B. ८. °पांविभित्त° A. B. K. ९. चत्वारः परस्परस्य C2. Jambû ed. १०. च ते प्रस्ताव° C2. Jambû ed.

गृहीतवाक्याः कृतगुरुपदन्यासा [1]न्यायवेदिनः सुकृतसङ्ग्रहाभ्यासगुरवो लब्धसाधु[2]शब्दालोक इव व्याकरणेपि सकलपुराणराजर्षिचरिताभिज्ञा महाभारतभावितात्मानो विदितस[3]कलेतिहासा महाविद्वांसो महाकवयो महापुरुषवृत्तान्तकुतूहलिनः सुभाषितश्रवणरसरसायनावितृष्णा वयसि वचसि यशसि तपसि स[4]दसि महसि वपुषि यजुषि च प्रथमाः पूर्वमेव कृतसङ्के[5]ता विवक्षवः स्मितसुधाधवलितकपोलोदराः परस्परस्य मु[6]खानि व्यलोकयन्। अथ तेषां कनीयान्कमलदलदीर्घलोचनः श्यामलो नाम बाणस्य प्रेयान्प्राणानामपि वशयिना दत्तसं[7]ज्ञस्तैः सप्रणयं दशनज्योत्स्नास्नपितककुभा मुखेन्दुना बभाषे तात बाणद्विजानां राजा

प्रसन्ना शुद्धा सु[8]बोद्धा च । वृत्तिर्वर्तनं सूत्रविवरणं च । गृहीतमादृतं ज्ञातार्थं च । वाक्यं विवरणं वार्त्तिकं च । यत्करणात्कात्यायनो वा[9]र्तिककार उच्यते । कृतो गुरूणां सम्बन्धिनि पदे स्थाने न्यासः स्थितिर्येषां ते । सर्वेणोपदेष्टपदे स्थापितास्त इत्यर्थः । यद्वा कृतो गुरुणि पदे न्यासो यैर्महति पदे स्थिता इत्यर्थः । अन्यत्र कृतोभ्यस्तो गुरुपदे दुर्बोधशब्दे न्यासो वृत्तिर्विवरणं यैः । न्यायोयुक्तमुपपत्त्यनुपपत्तिविचारश्च । सुकृतं पुण्यं सुष्ठुविहितं च । सङ्ग्रहः सञ्चयो व्याकरणे व्याडिकृतो ग्रन्थश्च । गुरवो महान्त उपाध्यायाश्च साधुशब्दः साधुवादः साधवोमी इत्येवं रूपो वा । साधवः संस्कृताः शब्दाश्च । पाण्डित्यप्रकटनेनानेन द्रष्टुमिष्टस्य वस्तुत उत्कृष्टतोच्यते । सकलेत्यादि विशेषणत्रयेण द्विजराजादिवृत्तन्तेभिज्ञतोच्यते । महापुरुषेत्यादि हर्षचरिते शुश्रूषाया हेतुः । सुभाषितेत्यादि स्वकाव्यप्रशंसासूचनपरं । सदसि सभायां । स[10]ङ्केतं सङ्केतः कनीया नित्यनेन प्रियवचनत्वमस्य दर्शितं । ब्रूहीति दत्तसंज्ञः । तात बाणेत्यादिना पूर्वराजदोषोद्भावनद्वारेण हर्षस्य गरीयस्तां ख्यापयति । अत्र क्वचिच्छब्दद्वारेण क्वचिच्चार्थद्वारेण य[11]थायोग्यं दोष [12]उद्भाव्यः । चन्द्रादिशब्दाभिधानेन राजत्वप्रतीतिर्न स्यादिति द्विजानां राजेत्युक्तं ।

---

१. न्यायवादिनः $K_2$. T. Jambû ed. २. शब्दालोका इव T. Jambû ed. ३. निखिलेति° A. B. ४. महसि सदसि A.B. $K_2$. ५. °सज्ञानाविवक्षवः A. B. ६. मुखान्यवलोकयत् A. B. ७. °संज्ञास्तैः K. T. ८. स्वरोधा $C_2$. ९. वाक्यकारः $C_2$. Jambû ed. १०. सज्ञानं $C_2$. ११. यथायोगं $C_1$. $C_2$. १२. उद्भावः $C_1$.

गुरुदारग्रहणमकार्षीत्। पुरूरवा ब्राह्मणधन[१]तृष्णया दयितेनायुषा व्ययुज्यत। न[२]हुषः परकलत्राभि[३]लाषी महाभुजङ्ग आसीत्। ययातिराहितब्रा-

गुरुर्बृहस्पतिः पित्राद्याश्च गुरवः। अत्र कथा पुरा पूर्णचन्द्रमुदितं वीक्ष्य कामयमानां गुरुपत्नीं ताराख्यामभिगच्छत्। तदसहमानेन च बृहस्पतिना यदेन्द्राद्याः प्रोत्साहितास्तदानयनाय तदा च[४]न्द्रेण शुक्रः शरणमाश्रितस्ततः शुक्रप्रेरितैर्दैत्यैः सह तेषामन्योन्यं दिव्यं वर्षसहस्रं युद्धमासीत्। तारापि नारदबोधिता सगर्भा सती पुनो गुरुमेवाभिगतेति। दयितेनायुषा प्रियेण जीवितेन। पुत्रेणायुर्नाम्ना। कथा चात्र। पुरूरवाः पूर्वां दिशं जेतुं गच्छन्केनाप्याहृतप्रभूतधनेन विप्रेण यज्ञे निमन्त्रितो लोभाक्षिप्तस्तद्धनं जिहीर्षुस्तच्छापान्नष्टस्तस्मिन्मृते स विप्रो नृपं विना प्रजा निवर्[५]तेत इति ज्ञात्वा तदायुषा राजर्षिमायुर्नामानमजीजनदिति। भुजङ्गो विटोपि पुरा वृत्रं हत्वा ब्रह्महत्यया शक्रः पलाय्यमृणालच्छिद्रान्तरे यदा तिष्ठत्तदा नहुषो यज्वा शूरैश्च देवैरिन्द्रत्वं नीतो दर्पाच्छचीं प्रार्थयमाणो बृहस्पत्युपदेशात्तयोक्तो यथायानेनापूर्वेणागच्छेति। ततो ब्रह्मर्षीन्वाहनीकृत्य व्रजन्कामवशात्त्वरमाणः पादेनाताड्य सर्प सर्प इति चोदयन्नगस्त्येन सर्पो भवेति शप्तः सर्पो भवन्पपातेति नरकगामी बभूव। स्वाचारभ्रष्टत्वात्पतितश्चाभूत्। वृषपर्वणोऽसुरराजस्य दुहित्रा शर्मिष्ठया कलहायमाना। अस्मद्भृत्यसुता वराकीभूत्वा स्पर्धत इत्युक्त्वा कूपान्तः पातितां शुक्रसुतां देवयानीं ज्ञात्वा ययातिर्वनविहारी पाणिं गृहीत्वोज्जहार गते ययातौ परिभवोद्विग्नो वन एवा[६]वसत। अथ नारदाद्यथावृत्तं ज्ञात्वा वृषपर्वा शुक्रस्य प्रार्थनामकरोत्। सन्दिष्टा च[७] कुमारी श[८]तपरिचारवती यं शर्मिष्ठा यदा मेदास्यं करोति। तदागच्छामीति शुक्रशापभीतेन च[९] वृषपर्वणा सम्पादितमनोरथा देवयानी पुनरपि दासीभूतया शर्मिष्ठया सह वने क्रीडन्ती ययातिमायातं दृष्ट्वा बभाषे क्वा[१०]द्यमां त्यक्त्वा पाणिग्राहो महानुभावो गतो भूरिति। ततो ययातिर्ब्राह्मणीं त्वादनङ्गीकुर्वंस्तत्पित्रा शोकविधुरेण शुक्रेण पापं मास्तु क्रियतामयं विधिरिति बुध्द्वा तां स्वीचक्रे कालेन चासौ पपातेति। सुद्युम्नो

१. द्रविण° A. B. २. नघुषः A.B. T. ३. अभिलाषात् A. B. K2. ४. इन्द्रेण C2. ५. वर्तन्ते C2. ६. एवास्त C2. ७. C1. C2 omit this word. ८. अत्यधात् C2. ९. C1. C2. omit च. १०. शतं परिचारयति। मेदास्यं करोति C2. ११. क्वापीत्युक्त्वा C2.

मपत्नीपाणिग्रहणः पपात । सुद्युम्नः स्त्रीमय एवाभवत् । सोमकस्य प्रख्याता जगति[1] जन्तुवधनिर्घृणता मान्धाता मार्गणव्यसनेन सपुत्रपौत्रोरसातलमगात्[2] । पुरुकुत्सः कुत्सितं कर्म तपस्यन्नपि मेकलकन्यकायामकरोत्[3] । कुवलयाश्वो भुजङ्गलोकपरिग्रहादश्वतरकन्यामपि न जहार । पृथुः प्रथमपुरुषकः परिभूतवान्पृथिवीं[4]

राजशोभनं द्युम्नं बलमस्येति च । स्त्रीमयो महिलाकृतिः कान्तानुरक्तश्च । योत्रयमुपयोक्ष्यति स स्त्रीत्वमापत्स्यत इति भगवता । भवान्याभ्यर्थितेन भवेन शप्तः सन्सरसः पीत्वातोयं सुद्युम्नो मृगया विहारी स्त्रीमयो भूदिति । जन्तुर्नाम सोमकस्य राज्ञः पुत्रः । जन्तवः प्राणिनश्च । सोमकस्य राज्ञो जन्तुर्नामैकः पुत्रोभूत् । स चैकपुत्रत्वादपुत्रत्वं वरमिति । जानन्नुद्विग्नः पुरोधसाभ्यधायि बहून्पुत्रांश्चेदिच्छसि । तदस्य सुतस्य वपयाहोमः क्रियतां ततोयावत्योधूममाजिघ्रन्तिताः । पुत्रैर्युज्यन्त इति । स चापि घृणामपहाय । तथा कारितवानिति । मार्गणं याच्ञाशराश्च मार्गणाः । मार्गणेषु व्यसनं युद्धं व्यसनं रसातलमगमदधस्ताज्जगाम विनष्ट इत्यर्थः । रसातलं पातालं च । मान्धाता च भुवं जित्वा स्वर्गं जेतुं गतः शक्रेणोक्तं पातालं जित्वागतस्य तवदास्यं यास्यामि स च तद्वचनादविचार्यैव रसातलं गतस्तत्र हरप्रसादादासादितत्रिशूलेन लवणेन नाम्ना दानवेन सह्रुतसैन्योन्तमनीयत इति[5] । मेकलकन्यका नर्मदा पुरुकुत्सः पुरा तपश्चरन्नर्मदायां स्नानं कुर्वन्कामप्यङ्गनामालोक्य कामाविष्टो नीतिमुत्ससर्जेति[6] भुजङ्गा विटा अपि । अश्वतरकन्यां वडवामपि । कुवलयाश्वो राजा । मृगया क्रीडा । प्रसङ्गेन घर्मातुरोमज्जनरभसेन । सरसीमवतीर्णो रसातलं प्राप्तोश्वतराभिधां नागकन्यामूढवानिति । प्रथम आद्यः प्रधानश्च । कुत्सितः पुरुषः पुरुषकः । पृथुरादिनृपो भूधराक्रान्तां सर्वाङ्गां विलोक्य । चापकोट्या[7] गिरीन्भुवः पर्यन्तेषु चिक्षेप । धरणकारणभूतभूभृत्परिभवाद्भवो विभवः । अत एवास्य कापुरुषत्वं विष्णुपुराणे त्वा कृष्टकार्मुकेन पृथुना देहि मे भर्तव्यभरणोपायमित्यनुवध्यमाना भूर्भुवनानि[8] बभ्राम

१. K. K1. K2. Jambû ed. omit जगति. २. अगमत् A. B. ३. कन्यायां A. B. ४. पृथ्वीं A. B. T. ५. प्रासादाग्सादित° C1. ६. पुरक्रम C1. ७. चापकांट्या चिरभुवः C2. चापकोट्याभुवः Jambu ed. ८. अतिभूर्भुव° C2.

नृगस्य कृकलासभावेपि* वर्णसङ्करः समदृश्यत । सौदासेन नरक्षिता पर्याकुलीकृता क्षितिः । नलमवशाक्षहृदयं कलिरभिभूतवान् । सम्वरणो मित्रदुहितरि विक्लवतामगात् । दशरथ इष्टरामोन्मादेन मृत्युमवाप । कार्तवीर्यो गोब्राह्मणातिपीडनेन निधनमयासीत् । रामो मनोभवभ्रान्तहृदयो जनकतनयामपि न परिहृतवान् ।

ततः शरणमलब्ध्वा सास्य सर्वाः सस्य सम्पदो जनयदिति वर्णितं । एतस्मात्परिभूताभूदिति । कृकलासः प्राणिभेदः । तद्भावेपि तस्यां दशायामपि किं पुना राज्यस्थस्येति निन्द्यत्वं । वर्णः शुक्लादिर्ब्राह्मणादिश्च । नृगो राजा दानप्रस्तावेकस्य त्रिद्विप्रस्य सम्बन्धिनीं गामविज्ञायैव द्विजाय ददौ । कदाचिच्च तस्या गोः स्वामी तां गां परिज्ञाय तं ययाचे न च तस्माद्गां लेभे । ततस्तौ द्वावपि राजद्वारं राजविज्ञापनाय गतौ ग्राम्यभोगासक्तराजदर्शनमलभमानौ च क्रोधात्कृकलासो भवेति राज्ञः शापं दत्त्वा कस्मैचिद्गां वितीर्य यथागतं प्रतिजग्मतुरिति । नरान्क्षिणोतीति नरक्षिता न पालिता च । सौदासो नाम राजा मृगयाखिन्नः पथिगच्छन्कदाचिन्मुनिं शक्तनामानं मार्गमध्ये स्थितमपसर्पेत्यवदत् । पन्था देयो ब्राह्मणायेति वचनात् । न्यायमनुवर्तमानो यावन्न चलितस्तावद्राज्ञा कशयाभिहतः । अथ रोषावेशाद्गच्छ मनुष्यभक्ष्यो राक्षसो भवेति तं शशाप । अवशमायत्तं । अक्षहृदयमक्षज्ञानं । अक्षाणीन्द्रियाणि हृदयं च । तच्च नलो नाम राजा द्यूतव्यसनी तत्स्वरूपानभिज्ञश्च कलिनाभिभूत इति प्रसिद्धं । मित्रो रविः सुहृच्च मित्रं तपती नाम मित्रस्य रवेर्दुहिताभूत्। तस्यां सम्वरणो नाम राजा व्यसनी बभूव । रामो दशरथसुतो रामा स्त्री च । दशरथो मृगया सक्तो घटपूरणरवं श्रुत्वा बृंहितशङ्कया शब्दपातिना शरेण मुनिपुत्रं व्यापादयंस्तेन च बोधितान्वयः पित्रोः समीपं । तं निनीय तद्वचनाच्छल्यमुद्धरति नृपे शिशुर्मृतः । अथ च सदारेण वृद्धतापसेन पुत्रादहमिव त्वमपि प्राप्स्यस्यन्तमिति शप्तो रामवियोगात्प्राणांस्तत्याजेति । गोनिमित्तं ब्राह्मणस्य जमदग्नेरतिपीडनं । निधनमयासीज्जामदग्न्ये-

१. भूमिः K2. T. Jambû ed. २. अवसाक्ष° B. K1. ३. अतिव्रीडनेन K1. K2. T. ४. K. K1. K2. Jambû ed. omit this whole sentence. ५. कृकिलासः C1. C2. ६. राजज्ञापनाय C1. C2. ७. ग्रास्यसक्तभोगा° C2. ८. निनाय तं उद्धरणाच्छल्य° C1. C2. ९. मुनिवृद्ध° C2.

[1]मरुत्त इष्टबहुसुवर्णको[2]ऽपि देवद्विजबहुमतो न बभूव । [3]शन्तनुर[4]ति-व्यसनादेकाकी वियुक्तो वाहिन्यां [5]विपिने विललाप । पाण्डुर्वनमध्यगतो

न हत इत्यर्थः । कार्तवीर्यो गवां कोटेरप्यधिकतरां धेनुमपहरञ्जमदग्निं व्यापादितवान् । अथ च तत्सुतेन रामेण क्रोधात्परशुच्छिन्नबाहुसहस्रोऽसौ सर्वक्षत्रियैः सह मृत्युं लेभे । इष्टः कृतोऽभिमतश्च । देवद्विजो बृहस्पतिः । अन्यत्र देवाश्च द्विजाश्चेति द्वन्द्वः । मरुत्तो नाम राजा । बहुसुवर्णकाख्येन क्रतुनापि यक्ष्यमाणो देवपुरोधसं मां याजयेति याचमानस्तेन मनुष्यांयमेव दृष्ट इति [6]स चोपहसति भिषणे नारदेनोक्तः । [7]यथागच्छास्यैव भ्राता सम्वर्तको नाम ग्रहगृहीतच्छद्मनावाराणस्यां स्थितस्तं प्रार्थयस्वेत्युक्त्वा च नारदोऽग्निं विवेश । स च नारदोक्तचिह्नैस्तं भगवत्प्रणामं कृत्वा निर्यान्तं परिज्ञाय बहुशो [8]गालीर्ददतमपि । अनुद्विजमानो याजनाय प्रार्थयामास । सम्वर्तकेन कथितं च नेदं तवोक्तं । यावत्तं वक्ष्यामि देवेभ्यश्च भुत्वा यज्ञभागो न दातव्य इति । राजा यथोक्तमनुतिष्ठंस्तेन [9]योजितो देवद्विजस्य नाभिमतो भवदिति । अतिव्यसनाद[10]त्यन्तरागात् । वाहिनी नदो सेना च । महाभिषः [11]पुरा ब्रह्मसदसि गङ्गायाश्चामर[12]ग्राहिण्याश्चलितवाससोऽङ्गादर्शनहृतहृदयः शृङ्गारपदानि वदन्ब्रह्मणाशप्तः । [13]पतित्वा क्षत्रियगृहे शान्तनुर्नामाभूत् । गङ्गापि [14]मत्कृतेयमिमां दशां [15]प्राप्ते इति मत्वा सखेदम[16]वतरन्ती धेनुहरणकुपितवसिष्ठशापसम्पन्नमनुष्यलोकावतरणदुःखितैर्वसुभिर्विदितवृत्तान्तैरभ्यधायि । [17]तत्र नृपे चेत्तव प्रीतिस्तद्वयं त्वय्येवोत्पत्स्यामहे । जातमात्राश्च वयं त्वया स्वजले क्षेप्तव्या इति । सा तु तथेत्यङ्गीकृत्य वने विहरन्तं प्रार्थयमानं शन्तनुमवोचत् । यदहं करोमि तत्र त्वया निर्बन्धो न विधेयो न चाहं त्वया ज-

१. मरु K. T. २. A. B. T. omit अपि. ३. शान्तनुः A. B.T. ४. अपि instead of अति° K.K1. K2. Jambû ed. ५. विजिने K2. Jambû ed. ६. सत्त्वोपहसितो धिषणे C1. C2. ७. यथा गच्छामीव C2. ८. गालीन्द° C1. C2. ९. याजितः Jambû ed. १०. अभ्यन्तरागात् C2. अत्यन्तसङ्गात् Jambû ed. ११. महाभिषिक्तो भिषकपुरा C1. C2. १२. ग्राहिण्यायतश्चलित° C2. १३. पतिगृहे C1. C2. १४. न मत्कृते C1. C2. १५. प्राप्तमिति C1. C2. १६. खेदमवन्ती C1. C2. १७. ततो नृपचेत्तत्र C1. C2.

मत्स्य इव मदनरसाविष्टः प्राणान्मुमोच । युधिष्ठिरो गुरुभयविषण्णहृदयः समरशिरसि सत्यमुत्सृष्टवान् । इत्थं नास्ति राजत्व[1]मपकलङ्कमृते देवदेवादमुतः सर्वद्वीपभुजो हर्षात् । [2]अस्य हि बहून्याश्चर्याणि श्रूयन्ते । तथा ह्यत्र बलजिता निश्चलीकृताश्चलन्तः कृतपक्षाः क्षितिभृतोऽत्र प्रजापतिना शेषभोगिमण्डलस्योपरि क्षमा कृता । अत्र पुरुषोत्तमेन

न्म प्रष्टव्येति । तथेति । तेनाङ्गीकृतवता बहुतरं कालमरंस्त । अथ यः कश्चित्सूनुरुदपादि सर्वस्तया स्वजले क्षिप्तः । एवं सप्तस्वतीतेषु गङ्गा मासे[3]ऽयं निःसन्तानोऽयं माभूदिति मन्वानैः सप्तभिरेव वसुभिः कृतात्मसन्निधिर्भीष्मो जातः । ततस्तमपि जले क्षिपन्ती शन्तनुना निषिद्धा सापराधो भवानित्युक्त्वा सा प्रतिजगाम । ततस्तद्वियोगविधुरधीर्बहु विललापेति व्यसननिमित्तकः सेनया वि[4]योगेन च विलापो विजिगीषोरनुचित एव । वनं तोयं विपिनं च । मदनः कामः फलविशेषश्च मदनं । पाण्डुर्वने मृगरूपया ब्राह्मण्या सह सुरतकर्मसक्तं मृगरूपं [5]कर्दमाख्यं मुनिं शरेण जघान । तेन च म्रियमाणेन स्त्रीसम्भोगस्थो मरिष्यसीति शप्तो माद्र्या सह स्मरार्त्तः क्रीडन्विपन्न इति । गुरोर्द्रोणाचार्यस्य [6]भयेन गुरुणा महता च त्रासेन । युधिष्ठिरो बलानि दग्धु[7]मुद्यतं द्रोणाचार्यं रणमूर्ध्न्यश्वत्थामा हत इत्यु[8]क्त्वा पुत्रशोकाकुलमसत्येना[9]सूनत्याजयदिति । इत्थमिति । इत्थं कृतयुगादारभ्य कलिप्रारम्भपर्यन्तं राज्ञां नास्त्यपकलङ्कं राजत्वमिति । बलजित्प्रजापतिमुखाः शब्दा राज्ञि यथार्था वेदितव्याः । बलं सैन्यं बलाख्यश्चासुरः । निश्चलीकृता इति सहायाभावाच्छत्रुषु यानं [10]न विदधिर इति । अन्यत्र स्थावरत्वं लम्भिताः । पक्षाः सहायाः पतत्त्राणि च । क्षितिभृतो राजानो गिरयश्च । प्रजापतिना राज्ञा ब्रह्मणा च । शेषस्यावशिष्टस्य भोगिमण्डलस्य राजसमूहस्योपरि विषये क्षान्तिः कृता । अन्यत्र शेषाख्यस्य भोगिनो नागस्य मण्डलमाभोगस्तत्पृष्ठे भूमिर्निहिता । पुरुषोत्तमो नरोत्कृष्टो राजा हरिश्च । सिन्धु-

१. अकलङ्कमृते A. B. T. २. अस्यातिबहून्याश्च° K. T., अस्य बहून्याश्च° A. B. ३. निशन्तनो नामायं मा C2. ४. वियोगो न C.2. ५. कन्दमाख्यं C1. C2. ६. भवेन C2. ७. दग्धमुद्धृतं C2. ८. इत्युक्तः C2. ९. आसून्नत्याजयत् C2. १०. न विदधेति C2.

सिन्धुगजं प्रमथ्य लक्ष्मीरात्मीया कृता । अत्र बलिना मोचितभूभृद्दृष्टनो मुक्तो महानागः । अत्र देवेनाभिषिक्तः कुमारः । अत्र स्वामिनैकप्रहारप्रपातितारातिना ख्यापिता शक्तिः । अत्र नरसिंहेन स्वहस्तविशसितारिणा प्रकटीकृतो विक्रमः । अत्र परमेश्वरेण तुषारशैलभुवो दुर्गाया गृहीतः करः । अत्र लोकनाथेन दिशां मुखेषु परिकल्पिता लोकपालाः सकलभुवनकोशश्चाग्रजन्मनां विभक्तः । इत्येवमादयः प्रथमकृतयुगस्येव दृश्यन्ते महान्तः समारम्भाः । यतो यस्य सुगृहीतनाम्नः पुण्यराशेः पूर्वपुरुषवंशानुक्रमेणादितः प्रभृतिचरितमिच्छामः श्रोतुम् । सुमहान्कालो नः शुश्रूषमाणानामयस्कान्तमणय इव लोहानि

राजः सिन्धुदेशाधिपतिः क्षीरोदधिश्च । लक्ष्मीश्छत्रचामरादिरूपा देवता कृतिश्च । बलिना बलवता सुरेश्वरेण च । भूभृद्राजा श्रीकुमाराख्यः । श्रीकुमारो नाम राजा किल दर्पशातेनोपजातमदेन हस्तिनावेष्टितः । ततः श्रीहर्षेणाकृष्य खड्गम् तस्मान्मोचितोसौ दन्ती च रोषाद्वने परित्यक्त इति वार्त्ता । भूभृच्च पर्वतो मन्दराख्यः । महानागो दर्पशातो वासुकिश्च । मोचितभूभृद्दृष्टनोमृतमन्थनार्थे । मन्थनार्थे कुमारः कुमारगुप्ताख्यः कुमारो वायोर्दर्पशातान्मोचितः । कुमारो गुहः पुत्रश्च । स्वामी प्रभुः कुमारश्च । अरातयः शत्रवः । तारकश्चासुराधिपतिः । शक्तिः सामर्थ्यमायुधभेदश्च । नरसिंह उत्तमो नरो नृसिंहरूपो हरिश्च । स्वहस्तेनेति । न तु साधनबलेन। अन्यत्र तु चक्रादिनिजायुधेन । परमेश्वरेण सार्वभौमेन न तु मण्डलमात्रस्य भोक्त्रा हरेण । दुर्गाया दुर्गमाया गौर्याश्च । करो दण्डः पाणिश्च । लोकनाथो राजा हरिर्बुद्धश्च । दिशां मुखेषु सीमासु । लोकनाथाः सीमापतय इन्द्राद्या दिक्पालाश्च । कोशो गञ्जं मध्यं ग्रन्थभेदश्च । अग्रजन्मनो द्विजा आदिनृपाः श्रमणाश्च । एवमादय इति न त्वेतावन्त एव प्रथमकृतयुगस्येवेति पर्वतपक्षशातनादयो वृत्तान्ता अभवन् । मणय इवेति मणिशब्देनोपमेयानां गुणानां रत्नत्वमुक्तं ।

---

१. सिन्धुनाथं A. B. २. आत्मीकृता K. K1. Jambû ed. ३. आरातिना K. K2. Jambû ed. ४ अग्र्य° K.T. Jambû ed. ५. महासमा° T. Jamû ed. ६. अतोस्य K. T. यतोस्य K2. Jambû ed. ७. T. Jambû ed. omit सु. ८. मन्दराक्ष° C1. ९. सुमुमोचितभु° C1. C2. १०. गुहश्च C2. ११. तारकासुरश्चासुराधिपतिः C1. C2.

नीरसानि[1] निष्ठुराणि क्षुल्लकानामप्याकर्षन्ति मनांसि महतां गुणाः[2] किमुत[3] स्वभावसरस[4]मृदूनीतरेषां कस्य न द्वितीयमहाभारते भवेदस्य चरिते कुतूहलमाचष्टां भवान् । भवतु भार्गवोयं वंशः शुचिनानेन पुण्य[5]राजर्षिचरित[6]श्रवणेन सुतरां शुचितर इत्येवमभिधाय तुष्णीमभूत् । बाणस्तु विहस्याब्रवीत् । आर्य न युक्त्यनुरूपमभिहितमघटमानमनोरथमिव[7] भवतां कुतूहलमवकल्पयामि शक्याशक्यपरिसंख्यानशून्याः प्रायेण स्वार्थतृषः परगुणानुरागिणी प्रियजनकथाश्रवणरसरभसमोहिता च मन्ये महतामपि मतिरपहरति प्रविवेकम् । पश्य[8]त्वार्य क्व परमाणुपरिमाणं वटुहृदयं क्व समस्तब्रह्मस्तम्भ[9]व्यापि देवस्य चरितं क्व परिमितवर्णवृत्तयः कतिपये शब्दाः क्व संख्या[10]तिगास्तद्गुणाः सर्वज्ञस्याप्ययमविषयो वाचस्पतेरप्यगोचरः सरस्वत्या अप्यतिभारः किमुतास्मद्विधस्य कः खलु पुरुषायुषशतेनापि शक्नुयादविकलमस्य चरितं वर्णयितुं । एकदेशे तु यदि कुतूहलं[11] वः संज्ञा[12] वयमियमधिगतकतिपयाक्षरलवलघीयसी जिह्वा क्वोपयोगं गमि[13]ष्यति भवन्तः श्रोतारो वर्ण्यते हर्षचरितं किमन्यत्पश्यतु[14] परिणतप्रा-

[15]लोहितान्यपि नीरसनिष्ठुराणि । क्षुल्लकाः खला बाला इत्यन्ये । आचष्टामाख्यातु । भार्गव इति भृगुगोत्रत्वं । अवकल्पयामि न तु निश्चिनोमि । शक्तमिदमित्येवं रूपेण परिसंख्यानेन गणनया स्वार्थतृषो गृध्नवः । शून्याः शक्याशक्यविवेकं गृध्नवो ननु जानन्तीत्यर्थः । वटुर्द्विजशिशुः । ब्रह्मस्तम्भं जगत् । पुरुषायुषेत्यादिना । योग्येपि मयि वर्णयितरि व[16]र्णनीयस्य भूयस्त्वं । अल्पीयस्त्वाच्चायुषः सामस्त्येन वर्णनं न घटत इति प्रतिपादितं । अत एवाह । एकदेश इति । संज्ञा वर्णनाभिमुखा इति । भवन्त इति न तु यादृशतादृशाः । हर्षचरितमिति न तु यदेव किञ्चित् ।

---

१. नीरसनिष्ठु° K. K1. Jambû ed. २. महतां मनांसि गुणाः T. Jambû ed. ३. किं पुनः A. B. ४. °स्वर° T. Jambû ed. ५. K. K2. Jambû ed. omit पुण्य. ६. K. T. Jambû ed. read वंशः instead of चरित. ७. K. K. Jambû ed. read अपि for इव. ८. पश्यन्त्वार्याः A. B. ९. °स्तम्ब° A. B. T१०. सङ्ख्यातीतास्तस्य गुणाः A. B. K. ११. कौतूहलं A. B. K1. १२. संज्ञा K. T. १३. यास्यति T. Jambû ed. १४. किमन्यदस्य तु परि A. B. K१५. लोहान्यपि Jambû ed.१६.कर्णनीयस्य C2.

यो दिवसः पश्चाल्लम्बमानकपिलकिरणजटाभार[1]भास्वरो भगवान्भार्गवो राम इव [2]समन्तपञ्चकरुधिरमहाह्रदे निमज्जति सन्ध्यारागपटले पृपा श्वो निवेदयितास्मीति सर्वे च ते तथेति प्रत्यपद्यन्त नातिचिरादुत्थाय च सन्ध्यामुपासितुं शोणमयासीत् । अथ [3]मधुमदपल्लवितमालवीकपोलकोमलातपे मुकुलितेऽह्नि कमलिनी[4]मीलनादिव लोहिततमेनमोऽङ्घ्रि रवौ लम्बमाने रविरथतुरगमार्गानुसारेण यममहिष इव धावति नभसि तमसि क्रमेण च गृहतापसकुटीरकपटलावलम्बिषु रक्तातपच्छेदैः सह संहृतेषु वल्कलेषु [5]कलिकल्मषमुषि [6]मुष्णाति गगनमग्निहोत्रधामधूमे सनियमे [7]यजमानजने मौनव्रतिनि विहारवेलाविलोले पर्यटति पत्नीजने विकीर्यमाणहरितश्यामाकशालिपूलिकासु दुग्धासु होमकपिलासु [8]हूयमाने वैताने तनूनपाति पूतविष्टरोपविष्टे कृष्णाजिनजटिले जटिनि जपति वटुजने ब्रह्मासना[9]ध्यासिनि ध्यायति योगिगणे तालध्वनिधावमाना[10]नन्तान्ते वासिन्यलसवृद्धश्रोत्रियानुमते [11]गलद्ग्रन्थदण्डकोद्गारिणि [12]सन्ध्यां समवधीरयति

[13]समन्तपञ्चकं कुरुक्षेत्रं । तथेति एवमस्त्विति । प्रत्यपद्यन्त अङ्गीकृतवन्तः । अथेत्यादावस्मिन्नस्मिन्सति बाणस्तथैव गोष्ठ्या तस्थाविति सम्बन्धः । कपोलकोमलो गण्डसदृशः । मुकुलिते प्राप्तसङ्कोचे कुटीरं जरद्गृहं । [14]पटलं छादनं । विहारो वह्निसन्धुक्षणमग्निहोत्रार्थं । पूलको वरण्डः परिमाणभेदः । तनूनपाद्वह्निः । विष्टरमासनं । तालध्वनिरङ्गुलिजः शब्दः । अन्तेवासिनः शिष्याः । श्रोत्रियो वेदोपाध्यायः । तदनुमतेन [15]सन्ध्यां स सन्धारयति । वदनव्यग्रत्वाद्गलतो विस्मरतः । [16]बन्धमाने व्यग्रत्वाद्गलन्ति विस्मरन्तं ग्रन्थदण्डकं ऋग्गणं । उद्गिरति यस्तस्मिन् ।

---

१. °भासुरो A. B. २. स्यमन्त° K2. T. ३. मधुरमधुमद° A. B. T. ४. °मलनादिव K. K1. Jambû ed. ५. A. omits कलि. ६. पुष्णाति° K. K2. Jambû ed. ७. यजमाने A. B. ८. हूयमानवैतानतनून° K2. T. Jambû ed. ९. अभ्यासिनि T. Jambû ed. १०. A. B. omit अनन्त. ११. न गलद्° A. B. K. Jambû ed. १२. सन्ध्यामवधीरयति A. B, समवधारयति K. Jambû ed. १३. स्यमन्तपञ्चकं C1, सामन्तपकं C2. १४. पटलं सङ्कोचं छोदनं छेतरो भेदकृतः C2. १५. स व्योम सन्धारयति C1. C2. १६. Jambû ed. omits this whole sentence.

वठरविटवटुसमाजे समु[1]न्मज्जति च ज्योतिषि तारकाख्ये खे प्राप्ते प्रदोषारम्भे भवनमागत्योपविष्टः स्निग्धैर्बन्धुभिश्च सार्धं तयैव गोष्ठ्या तस्थौ नीतप्रथमयामश्च ग[2]णपतेर्भवने परिकल्पितं शयनीयमसेवत । इतरेषां तु सर्वेषां निमीलितदृ[3]शामप्यनुपजातनिद्राणां कमलवनानामिव सूर्योदयं प्रतिपालयतां कुतूहलेन कथमपि सा[4]क्षिपाक्षयमगच्छत् । अथ यामिन्यास्तुर्ये यामे प्रतिबुद्धः स एव वन्दी श्लोकद्वयमगायत् ।

पश्चादङ्घ्रिं प्रसार्य त्रिकननिविततं द्राघयित्वाङ्गमुच्चै-
रासज्याभुग्नकण्ठो मुखमुरसि सटाधूलिधूम्रां विधूय ।
घासग्रासाभिलाषादनवरतचलत्प्रोथतुण्डस्तुरङ्गो
मन्दं शब्दायमानो विलिखति शयनादुत्थितः क्ष्माङ्खुरेण ॥
कुर्वन्नाभुग्नपृष्ठो मुखनिकटकटिः कन्धरामा तिरश्चीं
लोलेनाहन्यमानं तु हिनकणमुचा चञ्चता केसरेण ।
निद्राकण्डूकषायं कषति निविडितश्रोत्रशुक्तिस्तुरङ्ग-
स्त्वङ्गत्पक्ष्माग्रलग्नप्रतनुबु[5]सकणं कोणमक्ष्णः खुरेण ॥

बाणस्तु तच्छ्रुत्वा समुत्सृज्य निद्रामुत्थाय प्रक्षाल्य वदनमुपास्य च[6] भगवतीं सन्ध्यामुदिते च भगवति सवितरि गृहीतताम्बूलस्त[7]त्रैवातिष्ठत् । अत्रान्तरे सर्वस्य ज्ञातयः समाजग्मुः परिवार्य चा-

वठरा मूर्खाः । विटा भुजङ्गप्रायाः । वटवो बालाश्च । गृहश्रोत्रियैर्बालाः सन्ध्यां वदनाय प्रव[9]र्त्यन्ते निर्विवेकत्वात् । तुर्यश्चतुर्थः । त्रिकं पृष्ठकटीसन्धिः । द्राघयित्वा दीर्घतरीकृत्वा । आभुग्नो नमितः कण्ठो यस्य तत् । मुखमुरसि । आसज्यकृत्वा । धूम्रा धूसराः । प्रतानस्योपरिप्रोथः प्रतानमुत्तरोष्ठमध्यं । वक्त्रास्येव दनं तुण्डमाननं लपनं मुखं । तुहिनमवश्यायः । केसराणि ललाटतटस्थाः केशाः । अश्वकृकाटिकालम्बनः केशपाशो वा । कषायमापिङ्गलं । त्वङ्गदुच्चं । कोणं प्रान्तं ।

१. समुन्मिषति A. B. T. २ गणपतिभवने K2. T. Jambû ed. ३. नयनानां instead of दृशां A. B. ४. साक्षपाक्षयमगात् K2. Jamb ed. ५. बुसकलं K. T. ६. सन्ध्यामुदिते भगवति K. K2. T. Jambû ed. ७. तथैव A. B. ८. चासाञ्चक्रुः K. T. Jambû ed. ९. प्रवर्तते C2.

साञ्चक्रिरे । असावपि पूर्वोद्घातेन विदिताभिप्रायास्तेषां पुरो हर्षचरितं कथयितुमारेभे । श्रूयतामस्ति पुण्यकृतामधिवासो वासवावास इव वसुधामवतीर्णः सततमसङ्कीर्णवर्णव्यवहारस्थितिः । कृतयुगव्यवस्थः स्थलकमलवनबहुलतया पोत्रोन्मूल्यमानमृणालैरुद्गीतमेदिनीसारगुणैरिव कृतमधुकरकुलकोलाहलैर्हलैरुल्लिख्यमानक्षेत्रः क्षीरोदपयः पायिपयोदसिक्ताभिरिव पुण्ड्रेक्षुवाटसन्ततिभिर्निरन्तरः प्रतिदिशमपूर्वपर्वतकैरिव खलधानधामभिर्विभज्यमानैः सस्यकूटैः सङ्कटसकलसीमान्तः समन्तादुद्घातघटीसिच्यमानैर्जीरकजूटैर्जटिलितभूमिरुर्वरावरीयोभिः शालेयैरलङ्कृतः पाकविशरारुराजमाषनिकरकिर्मीरितैश्च स्फुटितमुद्गफलकोशीकपिशितैर्गोधूमधामभिः स्थलीपृष्ठैरधिष्ठितो महिषपृष्ठप्रतिष्ठितगायद्गोपालपालितैश्च कीटपटललम्पटचटकानुसृतैरवटुघटितघण्टाघटीरटितैरमणीयैरटद्भिरटवीं हरवृषभपीतमामयाशङ्कया बहुधाविभक्तं क्षीरोदमिव क्षीरं क्षरद्भिर्वाप्पच्छेद्यतृणप्रैर्गोधनैर्धव-

उद्घातः कथाप्रस्तावः । अस्तीत्यादौ श्रीकण्ठनामा जनपदोस्तीति सम्बन्धः । पुण्यकृतो देवा अपि । अधिवासो वसतिः । वासवावासः स्वर्गः । पोत्रं हलमुखं । सारा उत्कृष्टाः । अतिमाधुर्यात्क्षीरोदेत्याद्युत्प्रेक्षा निरन्तरो निर्विवरः । तदैव कल्पितत्वादपूर्वत्वं । खलधानधामभिः खलपालैः । उद्घातोरघट्टः । जीकरोजाजी । जूटः समूहः । उर्वरा सर्वसस्याढ्या भूः । वरीयोभिरुरुतरैः । शालेयैः शालिक्षेत्रैः । युगपत्पाकसम्भवाद्विशरारुत्वं । किर्मीरैः शवलैः । कोशी शिम्बिका । गोधनस्य क्षतपृष्ठत्वात्कीटसम्भवः । अवटुर्ग्रीवा । घण्टेव घटी घण्टाघटी । आमयोजीर्णं । हरवृषभेन पीतं सन्तमजीर्णं सम्भावनया बहुधा विभक्तं ।

---

१. कृतकृतयुग° A. B. २. उन्मील्यमान° A. B. ३. K. K2. Jambû ed. omit this word. ४. कोमलहालैः B. T. ५. सम्यक्कूटैः K2. Jambû ed. ६. K. K1. K2. Jambû ed. omit this word. ७. शालीयैः T. Jambû ed. ८. किर्मीरैश्च A. B. ९. कपिलितैः B. T. १०. A. B. omit पटल. ११. A. B. T. omit घटित. १२. रणित A. B. K2. १३. रसमयैः A. B. T. १४. बहुविभक्तं K. K. Jambû ed. १५. पुण्यदेवाः C1. देवा अपि C2. १६. सर्वसस्याढ्या C1. C2. १७. शालीयैः C2. १८. Jambû ed. omits this.

लितविपिनो विविधमखहोमधूमान्धशतमन्युसक्तैर्लोचनैरिव सहस्रसं-ख्यैः कृष्णशारैः[1] शारीकृतो[2] देशो धवलधूलिमुचां केतकीवनानां रजोभिः पाण्डुरीकृतैः [3]प्रमथनाथोद्धूलनभ[4]स्मधूसरैः शिवपुरस्येव प्रवेशैः प्रदेशैरुप-शोभितः शा[5]ककन्दलश्यामलितग्रामोपकण्ठकाश्यपीपृष्ठः पदे पदे करभ-पालीभिः पीलुपल्लवप्रस्फोटितैः करपुटपीडित[6]कोमल[7]मातुलुङ्गीदलरसो-पलिप्तैः स्वेच्छा[8]विचितकुङ्कुमकेसरकृतपुष्प[9]प्रकरैः प्रत्यग्रफलरसपानसु-खप्र[10]सुप्तपाथिकैर्वनदेवतादीयमानामृतरसप्रपागृहैरिव द्रा[11]क्षालतामण्डप-कैः स्फु[12]टत्फलानां च बीजलग्नशुकचञ्चुरागाणामिव समारूढकपिकु-लकपोलसन्दिह्यमानकुसुमानां दाडिमीनां वनैर्विलोभनीयोपनिर्गमो वनपालपीयमाननारि[13]केलरसासवैश्च पथिकलोकलुण्ट्यमानपिण्डखर्जू-रैर्लाङ्गललिह्यमानम[14]धुरामोदपिण्डीरसैश्च कोरचञ्चु[15]जर्जरितारुकैरुप-वनैरभिरामस्तुङ्गार्जुनपा[16]लीपरिवृतैश्च गोकुलावतारकलुषितकूलकीला-लैरध्वगशतशरण्यै[17]ररण्यवरुणधराबन्धैरबन्ध्यपवनरन्ध्रैः करभीयकुमा-रकपा[18]ल्यमानैरौ[19]ष्ट्रकैरौरभ्रकैश्च कृतसम्बाधो दिशि दिशि रविरथतु-

वाष्पच्छद्येति सौकुमार्यकथनपरं विपिनं गहनं । मुक्तैः पतितैः । लोचना-न्यपि कृष्णशाराणि सहस्रसंख्यानि च । कृष्णशारा मृगभेदाश्च । प्रमथा गणाः । प्रवेशैर्मार्गैः । काश्यपी भूः । करभपालीभिरित्थं भूतलक्षणे तृती-या । करभो बालोष्ट्रः । पीलु वृक्षभेदः । प्रपा पानीयशालिका । प्रस्फो-टितैर्नीराजनीकृतैः । उपनिर्गमनानि निर्गमनमार्गाः । उद्यानानीति के-चित् । अर्जुनाः ककुभवृक्षाः । कीलालं तोयं धरा[20] बन्धास्तडाकानि । करभेभ्यो हिताः करभीयाः । औष्ट्रकैरुष्ट्रसमूहैः । कृतसम्बाध आवृतः ।

---

१. °सारैः A. B. T. २. शारितो देशः K2. T. Jambû ed. ३. प्रमथोद्धूलन-धूसरैः K. K2. T. Jambû ed. ४. K. K1. Jambû ed. omit भस्म. ५. श्याककन्दे-ल° K. T. ६. K1. K2. Jambû ed. omit कोमल. ७. मान्तवतुङ्गी K. T. ८. अव-चित A.B. ९. पुष्य° A. १०. K. K2. Jambû ed. read श्रम instead of प्रसुप्त. ११. द्राक्षामण्डपैः K.K2. T. Jambû ed. १२. स्फुरत् K2. T. Jambû ed. १३. नालिकेर A. B. १४. मधुरमोच° A. B. T. १५. जर्जरिततारकैः A. B. १६. पालि B. T. १७. अर-ण्यधराबन्धैः K2. Jambû ed. अरण्यपराबन्धैः K. T. १८. लाल्यमान A. B. १९. आष्ट्रकैरौरभ्रकैश्च K.T. २०. धरबन्धास्तडाकानि C2.

रगविलोभनायेव विलोठनमृदितकुङ्कुमस्थली रससमालब्धानामुरःप्रोथपुं-टैरुन्मुखैरुदरशायि किशोरकजवजननाय प्रभञ्जनमिव चापि बन्तीनां वातहरिणीनामिव स्वच्छन्दचारिणीनां वडवानां वृन्दैर्विचरद्भिराचितः। अनवरतक्रतुधूमान्धकारप्रवृत्तैर्हंसयूथैरिव गुणैर्धवलितभुवनः सङ्गीतशं-समुरजरवमत्तैर्मयूरैरिव विभवैर्मुखतजीवलोकः शशिकरावदातवृत्तैर्मुक्ता-फलैरिव गुणिभिः प्रसाधितः पथिकशतविलुप्यमानस्फीतफलैर्महातरु-भिरिव सर्वानिथिभिरभिगमनीयो मृगमदपरिमलवाहिमृगरोमाच्छादितै-र्हिमवत्पादैरिव महत्तरैः स्थिरीकृतः प्रोद्दण्डसहस्रपत्रोपविष्टद्विजोत्तमैर्ना-रायणनाभिमण्डलैरिव तोयाशयैर्मण्डिता मथितपयः प्रवाहप्रक्षालितक्षि-तिभिः क्षीरोदमथनारम्भैरिव महाघोषैः पूरिताशः श्रीकण्ठो नाम जनपदः॥

किशोरका वत्साः। प्रभञ्जनं वातं। वडवा अश्वा। धूमान्धकार-प्रवृत्तैर्वर्णैर्वर्धितभुवनमिति विरोधच्छाया। हंसानामप्यन्धकारप्रवृत्तत्वं त-मसि प्रचारात्। वृत्तैराविर्भूतैः। हंसपक्षे पलायितैः। वृत्तं चरितं परिव-र्तुलं च। गुणिभिः शौर्यादिगुणयुक्तैः सस्त्रैश्च। फलमैश्वर्यमपि। अभि-गमनीयः सेव्यः। मृगमदः कस्तूरिका। मृगरोमशब्देन तत्कृतवस्त्रमुच्यते। यस्य राङ्कवमिति संज्ञा। तथा च राङ्कवं मृगरोमजं। अन्यत्र मृगाणां रोमाणि पादाः प्रत्यन्तपर्वताः। महत्तरैर्वृद्धैर्विपुलैश्च। सहस्रपत्त्राणि प-द्मानि। द्विजोत्तमाः पक्षिश्रेष्ठा ब्राह्मणाश्च द्विजोत्तमाः। मथितं तक्रं विलो-डितं च पयः। क्षीरमुभयत्रापि मथनमन्थात्क्षीरोदस्य घोषो गोष्ठः श-ब्दश्च। आशा आशंसादिश्च। दक्षिणाग्निर्गार्हपत्याहवनीयास्त्रयोऽग्नयः। अग्नि-त्रयमिदं त्रेतेत्यमरसिंहः। अनेकार्थवर्गेऽपि त्रेताग्नित्रितये युगे। त्रेताग्निरू-पोऽग्निरित्यग्निप्रकर्षार्थं त्रेतापदं। अन्यथा तादृशस्याग्नेर्ग्रहणं प्रसज्येत।

---

१. विलोभनायैव B. K2. २. पुटैर्मुखैरु° ३. वृन्दैः K. T. ४. वर्णैः K2. T. Jambû ed. ५. गत K. Jambû ed. ६. शशिबिम्बावदात° A. B. ७. हिमभवत् K. T. ८. मृगो रोम° C1. ९. ब्राह्मणश्च Jambû ed. १०. त्रेता-रूपोऽग्निरिति C1. C2.

यत्र त्रेताग्निधूमा[1]स्रुपातजलक्षालिता इवाक्षीयन्त कु[2]दृष्टयः पच्यमानच-यनेष्टकादहनद[3]ग्धानीवादृश्यन्त न दुरितानि छिद्यमानयूपदारुपरशुपा-टित इव व्य[4]दीर्यता धर्मः। मखशिखिधूमजलधरधाराधौत इव ननाशवर्णस-ङ्करः। दीयमानानेकगोसहस्र[5]शृङ्गखण्ड्यमान इवापलायत कलिः। सु-रालयशिलाघ[6]ट्टनटङ्कनिकरनिकृत्ता इव व्यदीर्यन्त विपदः। महादान-[7]विधानकल्क[8]कलाभिद्रुता इव प्रा[9]द्रवन्नुपद्रवाः। दीप्यमानसत्रमहान-सहस्रानल[10]सन्तापिता इव व्यलीयन्त व्याधयो वृषविवाहप्रहतपुण्य-पटहपटुरवत्रासिता इव नोपासर्पन्नपमृत्यवः। स[11]न्ततब्रह्मघोषबधिरी-कृता इवापजग्मुरीतयः। धर्माधिकार[12]परिभूतमिव न प्राभवद्दैवं तत्र चैवं-विधेनारामाभिरामकुसुमगन्धपरिमलसुभगो यौवनारम्भ इव भुवनस्य कुङ्कुममल[13]नापञ्जरितबहुमहिषीसहस्रशोभितोन्तःपुरनिवेश इव धर्म-

त्सितानि लोकायतादीनां वेदविरुद्धानि दर्शनादीनि। कुत्सिताश्च दृष्टयः कुदृष्टयः। यत्र त्रेताग्नयो हयन्ते तत्र क्षा[14]लिता आविर्भावाद्दृष्टिर्निर्मला भवति। त्रयनं चित्याविशिष्टाग्निस्थानं। घनधाराधौतोह्यवश्यं सङ्कीर्णो वर्णो नीला-दिर्नश्यति। वर्णाश्च विप्रायाः। टङ्कः पाषाणदारणः। सत्रं सदादानं। महानसं पाकस्थानं। वृषविवाहो नीलवृषोत्सर्गो यत्र चतसृभिर्गोभिः सह दान्तोरण्ये स्वैरविहाराय परित्यज्यते। ब्रह्मघोषो वेदध्वनिः। अतिवृष्टिरनावृष्टिर्मू-षकाः शलभाः शुकाः। अत्यासन्नाश्च राजानः षडेते[15] ईतयः स्मृता इति। तत्र चेत्यादौ स्थाण्वीश्वराख्यो जनपदविशेष इति सम्बन्धः। आरा-मा उपवनानि रामाश्च भार्याः। गन्धस्य परिमलस्याभोगोनुभवः सं-स्कारः। मलनं निवर्तनं समालम्भनं च। महिषी मुख्या जायापि।

---

१. अश्रुजलपातप्रक्षालिता A. B. K2. २. Jambû ed. omit this word. ३. दग्धानीव नादृश्यन्त दुरितानि A. B. ४. व्यशीर्यताधर्मः A. B. T. ५. °खुर° A. B. ६. °घट° A. B. K2. ७. A. B. omit विधान. ८. °कलापद्रुता A. B. T. °कलाविद्रुता K. ९. प्रादुद्रवन् A. B. K1. १०. K. K1. K2. Jambû ed. omit °अनल.° ११. सतत° A. B. १२. प्राविभूतमिव K. T. १३. °मलिन° B. १४. अक्षालिताग्न्या विर्भावात् C1. C2. १५. एता ईतयः C1. C2.

स्य मरुद्धूयमानचमरीबालव्यजनशोभनधवलितप्रान्त एकदेश इव सुरराज्यस्य ज्वलन्मखशिखिसहस्रदीप्यमानदशदिगन्तः शिबिरसन्निवेश इव कृतयुगस्य पद्मासनावस्थितब्रह्मर्षिध्यानाधीयमानसकलाकुशलप्रशमः प्रथमोवतार इव ब्रह्मलोकस्य कलकलमुखरमहावाहिनीशानसङ्कुलो विक्षेप इवोत्तरकुरूणामीश्वरमार्गणसन्तापानभिज्ञसकलजनो विजिगीषुरिव त्रिपुरस्य सुधारससिक्तधवलगृहपङ्क्तिपाण्डुरः प्रतिनिधिरिव चन्द्रलोकस्य मधुमदमत्तकासिनी भूषणरवभरितभुवनो नामाभिहार इव कुबेरनगरस्य स्थाण्वीश्वराख्यो जनपदविशेषः ॥ यस्तपोवनमिति मुनिभिः कामायतनमिति वेश्याभिः सङ्गीतशालेति लासकैर्यमनगरमिति शत्रुभिश्चिन्तामणिभूमिरित्यर्थिभिर्वीरक्षेत्रमिति शस्त्रोपजीविभिर्गुरुकुलमिति विद्यार्थिभिर्गन्धर्वनगरमिति गायनैर्विश्वकर्ममन्दिरमिति विज्ञानिभिर्लाभभूमिरिति वैदेहकैर्द्यूतस्थानमिति वन्दिभिः साधुसमागम इति सद्भिर्वज्रपञ्जरमि-

मरुतो वाता देवाश्च । शिबिरसन्निवेशाः कटकबन्धाः । कृतं प्रतिसमाहितं । युगं द्वयं । स्वपक्षपरपक्षरूपं येन स राजोच्यते । कृतं युगं वा द्योयुगभेदः । पद्मासनमासनभेदः पद्ममेवासनं च । ब्रह्मर्षय उत्तमाङ्गजा ब्रह्मा चासावृषिश्चासाविति च । यद्वा पद्मासनस्थितो ब्रह्मा च ऋषयश्चेति द्वन्द्वः । वाहिन्यो नद्यः सेनाश्च । विपक्षो बलं मेरुसमीपवासिनो जनाश्चोत्तरकुरवः । ईश्वरमार्गणं राजदण्डसाधनयाच्ञाहर शरश्चेश्वरमार्गणः । सन्तापानभिज्ञेति । ईश्वरशरेण हि सस्त्रीकं त्रिपुरं दग्धं । योधजनास्ते हि युद्धे देवैर्हता इत्याहुः । जेतात्र विजिगीषुः । सुधा मक्कोला मृतयोः । मत्तकाशिनी मुख्या स्त्री यक्षिणी च । नामाभिहारः पर्यायान्तरं । लासकैर्नटैः । वैदेहकै

---

१. K. K2. Jambû ed. omit वात. २. पद्मासनस्थित° A. B. ३. प्रशमनोवतार A. B. T. ४. दिक्जिगीषुरिव A. T. ५. K. K2. Jambû ed. omit मेदं; मधुपत्तमत्त° K1. T. Jambu ed; मधुमदमत्तमत्त° B. ६. रामाभिहार A. B. K. ७. A. B. omit पद. ८. निवेशः A. B. T. ९. धूत° A. B. T. १०. भागार्थिभि K2. T. Jambû ed.

ति शरणागतैर्विटगोष्ठीति विदग्धैः सुकृतपरिणाम इति पथिकैरसुर[1]विवरमिति वार्तिकैः शाक्याश्रम इति शमिभिरप्सरः पुरमिति कामिभिर्महोत्सवसमाज इति चारणैर्वसुधारेति च[2] विप्रैरगृह्यत। यत्र च मातङ्गगामिन्यः शीलवत्यश्च गौर्यो विभवरताश्च श्यामाः पद्मरागिण्यश्च धवल[3]द्विजशुचिवदना मदिरामोदिश्वसनाश्च चन्द्रकान्तवपुषः शिरीषकोमला[4]ङ्ग्यश्चाभुजङ्गगम्याः कञ्चुकिन्यश्च पृ[5]थुकलत्रश्रियो दरिद्रमध्यकलिताश्च लावण्यवत्यो मधुरभा-

षिणिभिः। द्यूतस्थानमिति साधुभ्यो भागो दीयते तत्रेति। वन्दिभ्योभिवाञ्छितसम्पत्तेः सुकृतपरिणामता। वा[6]र्तिकैर्विवरव्यसनिभिराचार्यैः। शाक्यो बौद्धः। चारणैः कुशीलवैः। वसुधारा धनप्रवाहो मातङ्गेत्यादयो विरोधाः। मातङ्गो हस्ती चण्डालश्च। याः प्रमदाः चण्डालानपि गच्छन्ति ताः कथं शीलवत्य इति विरोधः सर्वत्र ज्ञेयः। गौर्यो[7] गौराङ्ग्यो विभव ऐश्वर्ये रक्तो[8] यत्र विगतो भवस्तत्र कथं गौरी रतेति विगतं भवे रतं य[9]स्या वा श्यामाः श्यामलाङ्ग्यः पद्मरागिण्यो लोहितमणिभूषणाः। श्यामा रात्रयः कथं पद्मरागिण्यो रात्रौ पद्मानां सङ्कोचात्। द्विजैर्दन्तैः। शुचिवदना मदिरावन्मं[10]दिरयैव वा। आमोदिश्वसनो मुखमारुतो यासां। धवलद्विजवच्छु[11]द्धब्राह्मणवच्छु[12]चिवदनं ताः कथं मदिरामोदिश्वसनाः। चन्द्रवत्कान्तं वपुर्यासां शिरीषपुष्पवत्सुकुमाराङ्ग्यश्चन्द्रकान्तस्य वपुर्यासां ताः कथं शिरीषकोमलाङ्ग्यः। भुजङ्गा विटाः। कञ्चुकं स्त्रीणां वासो वारवाणाख्यः। याश्च कञ्चुकिन्यः सर्पिण्यस्ताः कथं भुजङ्गैर्न गम्याः। कलत्रं जघनं। दरिद्रं क्षामं मध्यमुदरं यासां कलत्रस्य परिवारस्य पृथ्वीः श्रीस्ताः कथं दरिद्राणां निर्धनानां मध्ये कलिताः संख्याता भवन्ति। लावण्यं सौन्दर्यं। मधुरं हृद्यं। लावण्यरसवतीनां मधुरभाषित्वं विभा-

१. अपरविवरमिति A. अमरवि B. २. K. K2. Jambû ed. omit च. ३. धवलशुचिद्विजवदना A. B. T. ४. °कामलांश्च A. T. K. ५. A. B. omit this whole sentence down to अप्रमत्ताः ६. वातकैः C1. C2. ७. गौराः C1. C2. ८. रक्ताः C1. C2. ९. यस्या इति वा C2. १०. मदिरया वा Jambû ed. ११. Jambû ed. omits शुद्धब्राह्मण. १२. च्छुद्धि. C1. C2.

विण्यश्चाप्रमत्ताः प्रसन्नोज्ज्वलमुखरागाश्चाकौतुकाः प्रौढाश्च प्रमदा यत्र च प्रमदानां चक्षुरेव सहजं मुण्डमालामण्डनं भारः कुवलयदलदामानि। अलकप्रतिबिम्बान्येव कपोलनलगनान्यक्लिष्टाः श्रवणावतंसाः पुनरुक्तानि तमालकिसलयानि प्रियकथा एव सुभगाः कर्णालङ्कारा आडम्बरः कुण्डलानि कपोल एव सततमालोककारका विभवो निश्वासमणिप्रदीपाः सुरभिनिःश्वासाकृष्टं मधुकरकुलमेव रमणीयं मुखावरणं कुलस्त्रीजनाचारो जालिका वाण्येव मधुरतरा वीणा वाद्यविज्ञानं तन्त्रीताडनं हासा वातिशयसुरभयः पटवासा निरर्थकाः कर्पूरपांसवः। अधरकान्तिविसर एवोज्ज्वलतरोऽङ्गरागो निर्गुणो लावण्यकलङ्कः कुङ्कुमपङ्को बाहव एव कोमलतमाः परिहासप्रहारवेत्रलता निष्प्रयोजनानि मृणालानि यौवनोष्मस्वेदबिन्दव एव विदग्धाः कुचालङ्कृतयो हारास्तु भाराः श्रोण्य एव विशालस्फाटिकशिलातलचतुरश्रारोगिणां विश्रं-

ध्यते। अप्रमत्ताः प्रसादशून्याः। प्रसन्नो मनोहरः। उज्ज्वलो मनोहारी। प्रसन्ना च सुरतया उज्ज्वलो मुखरागो यासां, ताः कथमप्रमत्ता अक्षीबाः। अकौतुका अकरकङ्कणाः। विवाहितानां हि करकङ्कणो बवध्यते। रुद्राक्षदर्पसिद्धार्थशिखिपक्षोरगत्वचः कङ्कणौषधयश्चेति कौतुकाख्याः प्रकीर्तिताः। मुण्डमालारूपं मण्डनं मुण्डमालामण्डनं। सहजमकृत्रिमं। अनेककुवलयदलदामाभ्यासोत्कर्षो न तु कुवलयदलदामसम्भवेपि प्रतिनिधिरूपतापादनं। भार इत्यनेनैष एवार्थः प्रकटितः। एवमक्लिष्टा इत्यादौ बोद्धव्यं। आडम्बरः स्फुटः। जालिका शिरोवस्त्रभेदः। चतुरश्रा रम्या विश्रमकाः

---

१. K. K1. K2. Jambû ed. omit this word. २. A. reads सहजं मण्डनं ३. कपोलभाग्यश्लिष्टाः A. B. ४ कुण्डलादिः K. K2. Jambû ed. ५. A. B. omit this word. ६ K. K1. Jambû ed. omit सुरभि. ७. आकृष्टमधुकरकुलान्येव K. K1. K2. T. Jambû ed. ८. A. B. T. omit स्त्री. ९. मधुरा K. Jambû ed. १०. विधानं B. ११. पटवासाः K. T. १२. किसर K. T. १३. A. B. omit this word. १४. A. B. T. omit वेत्र. १५. A. B. T. K2. omit स्फाटिक. १६. A. B. omit this word. १७. विश्राम° A. B. T. १८. डम्बरः C1. C2.

मकारणमनिमित्तं भवनमणिवेदिकाः कमललोभनिलीनान्यलिकुला-न्येव मुखराणि पदाभरणकानि निष्फलानीन्द्रनीलमणिनूपुराणि नूपुररवाहूता भवनहंसा एव समुचिताः सञ्चरणसहाया ऐश्वर्य-प्रपञ्चाः परिजनास्तत्र च साक्षात्सहस्राक्ष इव सर्ववर्णधरन्धनु-र्दधानो मेरुमय इव कल्याणप्रकृतित्वे मन्दरमय इव लक्ष्मीस-माकर्षणे जलनिधिमय इव मर्यादायामाकाशमय इव शब्दप्रादु-र्भावे शशिमय इव कलासङ्ग्रहे वेदमय इवाकृत्रिमालापत्वे धरणिमय इव लोकधृतिकरणे पवनमय इव सर्वपार्थिवरजो विकारहरणे गुरुर्वचसि पृथुरुरसि विशालो मनसि जनकस्तपसि सुयात्रस्तेजसि सुमन्त्रो रहसि बुधः सदस्यर्जुनो यशसि भीष्मो धनुषि निषधो

रणमिति गुरुत्वात् । तत्र चेत्यादौ तत्र पुष्यभूतिर्नाम राजासीदिति सम्बन्धः । वर्णा विप्राद्याः शुक्लाद्याश्च । कल्याणं श्रेयः सुवर्णं च । म-न्दरेण श्रीराकृष्टामृतमन्थने । पुष्यभूतिना भैरवाचार्यवेतालसाधने मर्या-दाचारः सीमा च । शब्दो यशोपि । प्रादुर्भावः प्रकाशता । कला गी-ताद्या लेखाश्च । अकृत्रिमः सत्ययुक्तोपौरुषेयश्च । धृतिर्धैर्यं धारणं च । पा-र्थिवो राजा पृथिवी सम्बन्धी च । रजोविकारा रागाद्या रेणुकार्याणि । गुर्वित्यादिना वक्रोक्त्याङ्गानां गुर्वादिमयत्वं सूचयति । गुरुरुपदेष्टा गुरु-र्महान् । गम्भीरशब्दत्वाद्बृहस्पतिश्च । पृथुर्विपुल आदिराजश्च कश्चित् । विशालो विस्तीर्णो विशालायाश्च नृपा अभवन् । अथ विशालो नाम नैषधस्त्वः । स एव शान्तः शान्तमना इत्यपि प्रतीतिरस्ति । ज-नको जनयिता जनक इव तपस्वी च । सुयात्र इति । शोभना यात्रा यस्य सोपि । कर्तव्यावधारणं मन्त्रः । स शोभनो यस्येति च । बुधः पण्डि-तो ग्रहश्च । अर्जुनः शुक्लोपि भीष्मो भयानको गाङ्गेयश्च । निषधो धर्षणीयः

---

१. लोभलीनानि A. B. K2. २. K. K2. Jambu ed. omit. °मणि. ३. रवाहूताः A. B. T. ४. °प्रपञ्चपरिजनः A. B. K1. ५. जलधिमयः A. B. K1. T. ६. सकल° A. B. ७. पुष्पभूतिरिति C2. ८. इव C1. C2. ९. यस्येति. C2. १०. शुक्लापि C1 C2. ११ C1. repeats भीष्म. after भयानकः

वपुषि शत्रुघ्नः समरे शूरः शूरसेनाक्रमणे दक्षः प्रजाकर्मणि सर्वादिराजतेजः पुञ्जनिर्मित इव राजा पुष्यभूतिरिति नाम्ना बभूव ॥ पृथुना गौरिवेयं कृतेति यः स्पर्धमान इव महीं महिषीं चकार निसर्गस्वैरिणीस्वरुच्यनुरोधिनी च भवति हि महतां मतिर्यनस्तस्य केनचिदनुपदिष्टा सहजैव शैशवादारभ्यानन्यदेवता भगवति भक्तिसुलभे भुवनभूति भूतभावने भवच्छिदि भवे भूयसी भक्तिरभूत् । अकृतवृषभध्वजपूजाविधिर्न स्वप्नेप्याहारमकरोत् । अजमजरममरगुरुमसुरपुररिपुमपरिमितगणपतिमचलदुहितृपतिमखिलभुवनकृतचरणनतिं पशुपतिं प्रपन्नोन्यदेवताशून्यममन्यत त्रैलोक्यम् । भर्तृचित्तानुवर्तिन्यश्चानुजीविनां प्रकृतयः । तथा हि गृहे गृहे भगवानपूज्यत खण्डपरशुः ववुरस्य होमालवालानलविलीयमानवहलगुग्गुलुगन्धगर्भाः स्नपनक्षीरशीकरक्षोदक्षारिणो विल्वपल्लवदामदलोद्वाहिनः पुण्यविषयेषु वायवः शिवसपर्यासमुचितैरुपायनैः प्राभृतैश्च पौराः पादोपजीविनः सचिवाः स्वभुजबलनिर्जिताश्च करदीकृता महासामन्तास्तं सिषेविरे । तथा हि । कैलासकूटधवलैः कनकपत्त्रलतालङ्कृतिवषाणकोटिभिर्महाप्रमाणैः सन्ध्यावलिवृषैः सौवर्णैश्च स्नपनकलशैरर्घभाजनैश्च धूपपात्रैश्च पुष्पपट्ट-

कठिनो वा नलस्य च पिता गिरिभेदो वा । शूरो विक्रान्तो यदूनां राजा च । दक्षश्चतुरः प्रजापतिश्च । महिषीं महादेवीमपि । निसर्गः स्वभावः । स्वैरणी स्ववशा । खण्डपरशुः शिवः । ववुरवहन् । होमालवालमग्निकुण्डं । सपर्या पूजा । उपायनं ढौकनिकास्वयमानीयते । प्राभृतं कौशलिका सखिभिः प्रहीयते । करदीकृता दण्डजाः कृताः । कूटं शृङ्गं । यत्र वस्त्रेषु पुष्पाणि सूत्रैः क्रियन्ते

---

१. प्रजापतिकर्मणि B. २. पुष्पभूतिः K. Jambû ed. ३. गौरियं A. B. K. ४. अनुबोधिनी K1. K2. Jambû ed. ५. K. K1. J. Jambû ed. omit च. ६. देवताभक्त्यो भगवति° T. Jambû ed. ७. वृषध्वज° A. B. ८. अजमजरसमरममरगुरुमसुरपुररिपुम° K. ९. K. K1. K2. Jambû ed omit अनल. १०. पुण्यविषयेषु K. K2. Jambû ed. ११. शिवसपर्यासमुचितोपायनः प्राभृतश्च K. १२. सचिवा भुज° K. K2. T. Jambû ed. १३. दण्डदाः J C1 C.. १४ क्रियन्ते C1. C2.

श्च मणियष्टिप्रदीपैश्च ब्रह्मसूत्रैश्च महार्हमाणिक्यखण्डखचितैश्च मुखकोशैः परितोषमस्य मनसि चक्रुः । अन्तःपुराण्यपि स्वयमारब्धबालेयतण्डुलखण्डनानि देवगृहोपलेपनलोहिततरकरकिसलयानि कुसुमग्रथनव्यग्रसमस्तपरिजनानि तस्याभिलषितमन्ववर्तन्त । तथा च । परममाहेश्वरः सभूपालो लोकतः शुश्राव भुवि भगवन्तमपरमिव साक्षाद्दक्षमखमथनं दाक्षिणात्यं बहुविधविद्याप्रभावप्रख्यातैर्गुणैः शिष्यैरिवानेकसहस्रसंख्यैर्व्याप्तमर्त्यलोकं भैरवाचार्यनामानं महाशैवम् । उपनयन्ति हि हृदयमदृष्टमपि जनं शीलसम्वादाः । यतः स राजा श्रवणसमकालमेव तस्मिन्भैरवाचार्ये भगवति द्वितीय इव कपर्दिनि दूरगतेपि गरीयसीं बबन्ध भक्तिं । आचकाङ्क्ष च मनोरथैरप्यस्य सर्वथा दर्शनं । अथ कदाचित्पर्यस्तेस्ताचलचुम्बिनि वासरेन्तःपुरवर्तिनं राजानमुपसृत्य प्रतीहारी विज्ञापितवती देव द्वारिपरिव्राडास्ते कथयति च भैरवाचार्यवचनाद्देवमनुप्राप्तोस्मीति । राजा तु तच्छ्रुत्वा सादरं क्वासावानयात्रैव प्रवेशयैनमिति चाब्रवीत् । तथा चाकरोत्प्रतीहारी । न चिराच्च प्रविशन्तं प्रांशुमाजानुभुजं भैक्षक्षाममपि स्थूलास्थिभिरवयवैः पी-

स पुष्पपट्टः । ज्वलन्मणिशिखरा स्वर्णयष्टिर्यष्टिप्रदीपः । ब्रह्मसूत्रैर्यज्ञोपवीतैः । मुखयुक्ताःकोशाः मुखकोशाः । ये लिङ्गोपरिदीयन्ते । बलये हिता बलियाः । छदिरुपधिर्बलेर्ढक् । मथनशब्दश्चिन्त्यो मन्थनमिति भाव्यं । अभिलषितमन्ववर्तन्तेत्यनेन चित्तानुवृत्तिः शुद्धान्तानां वर्णिता । भुवीति भूस्थत्वेप्यसुलभत्वदर्शनमस्योक्तं । शीलसम्वादाश्चारित्रसादृश्यानि । कपर्दिनि शिवे । न चिराच्चेत्यादौ मस्करिणमद्राक्षीदिति सम्बन्धः । प्रांशुं दीर्घं । जानु ऊरुपर्व । उक्तं च । जङ्घा तु प्रसृता जानूरुपर्वाष्ठीवदस्त्रियां । पीवरं स्थूलं ।

१. A. B. omit. मणि. २. मनसश्चक्रुः A. B. T. ३. °समग्र° A. B. ४. °कालमेतस्मिन् B. ५. K2. Jambû ed. omit च. ६. सर्वदा A. B. ७. प्रत्याहारी K2. T. Jambû ed. ८. प्रवेशयैनमित्यब्रवीत् A. B. ९. अचिरच्चे A. B. १०. ज्वलन्मणिः शिखरा स्वर्णयष्टिकुष्टिप्रदीपः C2 ६. छदेरुपधिबलेर्ढक् C1. C2. ९ जानूः C2.

वानमिवोपलक्ष्यमाणं पृथुनमाङ्गमुत्तुङ्गवलिभङ्गस्थपुटललाटं निर्मांसग-ण्डकूपकं मधुबिन्दुपिङ्गलपरिमण्डलाक्षमीषदानककघोणमतिप्रलम्बैककर्ण-पाशमलाबुवीजविकटोन्नतदन्तपङ्क्तिं तुरगानूकश्लथाधरलेखं लम्बचि-बुकायतनरलपनमंसावलम्बिना काषायेण योगपट्टकेन विरचितवैकक्षकं हृदयमध्यनिबद्धग्रन्थिना च रागेणेव खण्डशः कृतेन धातुरसारुणेन कर्प-टेन कृतोत्तरासङ्गं पुनरुक्तबालप्रग्रहवेष्टननिश्चलमूलेन वद्धमूत्रपरिशोध-नवंशत्वक्कितउना कौपीनसनाथशिखरेण खर्जूरपुटसमुद्गकगर्भीकृ-तभिक्षाकपालेन दारवफलकत्रयत्रिकोणत्रियष्टिनिविष्टकमण्डलुना बहि-रुपपादितपादुकावस्थानेन स्थूलदशासूत्रनियन्त्रितपुस्तिकापूलकेन वा-मकरधृतेन योगभारकेनाध्यासितस्कन्धमितरकरगृहीतवेत्रासनं मस्करि-णमद्राक्षीत्। क्षितिपतिरुपगतमुच्चितेन न चैनमादरेणान्वगृहीत्। आसीनं च पप्रच्छ। क्व भैरवाचार्य इति सादरनरपतिवचनमुदितमतिस्तु परिव्राट् तमुपनगरं सरस्वतीतटवनावलम्बिनि शून्यायतने स्थितमाचचक्षे। भू-यश्चाबभाषे। अर्चयति हि महाभागं भगवानाशीर्वचसेत्युक्त्वा चोप-

स्थपुटं निम्नोन्नतं। ललाटमलिकं गोधिः। गण्डकूपोऽक्ष्णोरधोदेशः। घोणा नासिका। अलाबुस्तुम्बी। उक्तं च। तुम्ब्यलाबूभे समे। तुरगानामधस्तादो-ष्ठोनूकः। अधोधरस्य चिबुकं। लपनं मुखं। उत्तरासङ्गमुपरिप्रावरणं। पुनरुक्तं पौनःपुण्येन कृतं। प्रग्रहो रज्जुः। तित उश्चालनी परिपवनशब्द-वाच्यः। कौपीनं गुह्यदेश उपचारात्तदाच्छादनं च। खर्जूराख्यस्य वृक्षस्य च सम्बन्धिभिः पुटैः क्लिष्टैः पत्रैश्च समुद्गकः कपालभङ्गो भिक्षायै क्रियते। दा-रवे काष्ठसम्बन्धिनि फलकत्रये त्रयः कोणास्तेषु यास्तिस्रो यष्टयस्तासु निवि-ष्टः कमण्डलुर्यत्र तेन। योगभारकेण मात्राभारिकया। मस्करिणं परिव्राजकं।

---

१. पृथून्नमाङ्गमुत्तुङ्ग°. A. B. K. २. विकटदीर्घदन्त° A. B. ३. काषायेयोग° A. ४. A. B. T. omit च. ५. K2. Jambû ed. omit this word. ६. स्वक्कितततुना A. B. T. ७. °कपालकदारव° K1. K2. ८. पूलिकेन K. T. ९. B. repeats twice कर. १०. वेत्रासनं T. Jambû ed. ११. °पतिरभ्युपगत° K2. Jambû ed. १२. चादरेणान्वग्रहीदेनं A. B. १३. °मनास्तु K. Jambû ed. १४. A. B. omit वन°. १५. वर्धयति A. B. १६. A. B. omit च.

निन्ये योगभारकादाकृष्य भैरवाचार्यं प्रविहितानि रत्नवन्ति बहलालो-
कलिप्तान्तःपुराणि पञ्चराजतानि पुण्डरीकानि नरपतिस्तु प्रियजनप्र-
णयभङ्गकातरं[1] दाक्षिण्यमनुरुध्यमानो ग्रहणलाघवं च लङ्घयितुमसमर्थो
दोलायमानेन मनसा स्थित्वा [2]चिरं कथं कथमप्यतिसौजन्यनिघ्नस्तानि
जग्राह । जगाद च सर्वफलप्रसवहेतुः शिवभक्तिरियं नो मनोरथदुर्लभा-
नि फलति फलानि येनैवमस्मासु प्रीयते [3]तत्र भगवान्भुवनगुरुर्भैरवा-
चार्यः श्वोद्रष्टास्मि भगवन्तमित्युक्त्वा च मस्करिणं व्यसर्जयत् । अ-
नया च [4]वार्तया परां मुदमवाप । अपरेद्युश्च प्रातरेवोत्थाय [5]कृतकृत्यो
वाजिनमधिरुह्य समुच्छ्रितश्वेतातपत्रः समुद्धूयमानधवलचामर[6]युगलः
कतिपयैरे[7]वं राजपुत्रैः परिवृतो भैरवाचार्यं सवितारमिव शशी द्रष्टुं
प्रतस्थे । गत्वा च किञ्चिदन्तरं तदीयमेवाभिमुखमापतन्तमन्यतमं
शिष्यमद्राक्षीत् । अप्राक्षीच्च क्व भगवानास्त इति सोऽकथयदस्य जीर्ण-
मातृगृहस्योत्तरेण बिल्ववाटिका[8]मध्यास्त इति गत्वा च तं प्रदेशम-
वततार [9]तुरगात् । प्रविवेश च बिल्ववाटिकां । अथ महतः कार्प-
टिकवृन्दस्य मध्ये प्रातरेव स्नातं दत्ताष्टपुष्पिकमनुष्ठिताग्निकार्यं कृत-
भस्म[10]रेखापरिहारपरिकरे हरितगोमयोपलिप्तक्षितितलविलते व्याघ्रचर्म-
ण्युपविष्टं कृष्णकम्बलप्रावरणनिभेनासुरविवरप्रवेशाशङ्कया पाताला-
न्धकारावासमिवाभ्यस्यन्तमुन्मिषता विद्युत्कपिलेनात्मतेजसा महामां-
सविक्रयक्रीतेन मनः शिलापङ्केनेव शिष्यलोकं लिम्पन्तं जटीकृतैकदे-

राजतानि रौप्यानि । लङ्घयितुमुत्सोढुं । निघ्नः स्ववशः । अन्यतममपरं । उत्तरेणोत्तरस्यां दिशि । अथेत्यादौ भैरवाचार्यं ददर्शेति सम्बन्धः । कार्पटिका व्रतिनः । अष्टपुष्पिका प्रागुक्ता । परिहारोऽत्र मर्यादा ।

---

१. कातरदाक्षिण्य° A. कातरो दाक्षिण्य°. K. २. K. K2. Jambû ed. omit चिरं. ३. K. Jambû ed. omit तत्र. ४. प्रवृत्त्या A. B. ५. K1. K2. T. Jambû ed. omit this word ६. A B. omit युगलः ७. एवं B. ८. मध्यमध्यास्ते A. B. ९. K. K2. Jambû ed. omit तुरगात् १०. लेखा° A.B.

शलम्बमानरुद्राक्षशङ्खगुटिकेनोर्ध्वबद्धेन[1] शिखापाशेन बध्नन्तमिव विद्यावलेपदुर्विदग्धानुपरि[2] सञ्चरतः सिद्धान्धवल्कनिपयशिरोरुहेण वयसा पञ्चपञ्चाशतं[3] वर्षाण्यतिक्रामन्तं खालित्य[4]क्षीयमाणशङ्खलोमलेखं लोमशकर्णशष्कुलीप्रदेशं[5] पृथुललाटतटं तिरःश्यामभस्मललाटिकया[6] बहुशः शिरो[7]ऽवधूतदग्धगुग्गुलसन्तापस्फुटितकपालास्थिपाण्डुरराजिशङ्कामिव जनयन्तं सततललाटवलिभङ्गसङ्कोचितकूर्च[8]भागं बभ्रुभासं[9] भ्रूसङ्गत्या निरन्तरायामिनी[10]मेकामिव भ्रूलेखां बिभ्राणमीषत्काचर[11]कनीनिकेन रक्तापाङ्गनिर्गतांशुप्रतानेन मन्दधवलभासेनेन्द्रायुधेनेवातिदीर्घेण लोचनयुगलेन परितो महामण्डलमिवानेकवर्णरागमालिखन्तं सितपीतलोहितपताकावलीशबलं शिवबलिमिव दिक्षु विक्षिपन्तं तार्क्ष्यतुण्डकोटिकुब्जाग्रघोणं दूरविदी[12]र्णसृ[13]क्किसङ्क्षिप्तकपोलं किञ्चिद्दन्तुरतया सदा हृदयसन्निहितहरमौलिचन्द्रातपेनेव निर्गच्छता दन्तालोकेन धवलयन्तं दिशां जालं जिह्वाग्रस्थितसर्वशैवसंहितानिभारेणेव मनाक्प्रलम्बितौष्ठं प्रलम्बश्रवणपालीप्रेङ्खिताभ्यां स्फाटिककुण्डलाभ्यां शुक्रबृहस्पतिभ्यामिव सुरासुरविजयविद्यासिद्धिश्रद्धयानुबध्यमानं बद्धविविधौषधिमन्त्र-

शङ्खे ललाटास्थिन । उक्तं च । शङ्खो निधौ ललाटास्थिन । गुटिका[14] खण्डिका । उपरीत्याद्यभिप्रायेणोक्तमूर्ध्ववदनेति । प्रशस्ता शिखा शिखापाशः । अवलेपोऽहङ्कृतिः । खालित्यं खल्वाटता । शङ्खो ललाटास्थि । शष्कुली कुहरं । कूर्चमस्त्री भ्रुवोर्मध्यं । काचरा पीतवर्णा । तुण्डं मुखं । कोटिः प्रान्तश्चञ्च्वग्रं । प्रान्तावोष्ठस्य सृक्किणी ।

१. °बन्धेन K. K2. २. विदग्धानूर्ध्वं सञ्चरतः A. B. ३. पञ्चाशतं A B. T. ४. खालत्य° A. B. T. ५. शङ्खलोमशकर्ण° T. K2. Jambû ed. ६. तिरश्चाभस्म° B. तिस्राभस्म° A. ७. शिरोविधूतगुग्गुल° A. B. शिरोधूत° K. ८. °कूर्प° A. B. K. ९. बभ्रुभ्रूभागसङ्गत्या A. B. अर्धभ्रूभास K. K1. १०. निरन्तरायामिनीमेकामिव A B. K. ११. °काचकाचर° K. °कातर° A. B. T. १२. विदीर्घ° A. B. १३. °सृक्क A. B. १४. गुका. C1. C2.

सूत्रपङ्क्तिना सलोहवलयेनैकप्रकोष्ठेन[1] शङ्खखण्डं पूष्णोदन्तमिव भगवता भवेन भग्नं भक्त्या भूषणीकृतं कलयन्तम[2]खिलरसकूपोदञ्चनघटीयन्त्रमालामिव रुद्राक्षमालां दक्षिणेन पाणिना भ्रमयन्तमुरसि दोलायमानेनापिङ्गलाग्रेण कूर्चकच[3]कलापेन सम्मार्जयन्तमिवान्तर्गतं[4] निजरजोनिकरमतिनिबिडनीललोममण्डलनिचितं च ध्यानलब्धेन ज्योतिषा दग्धमिव हृदयदेशे[6] दधानमीषत्प्रशिथिलवलिवलयबध्यमानतुण्डमुपचीयमानस्फिङ्मांसपिण्डकं पाण्डुरपवित्रक्षौमावृतकौपीनं सावष्टम्भपर्यङ्कबन्धमण्डलितेनामृतफेनश्वेतरुचा योगपट्टकेन वासुकिनेवाप्रतिहतानेकमन्त्रप्रभावाविर्भूतेन प्रदक्षिणीक्रियमाणमरुणतामरससुकुमारतरतलस्य[7] पादयुगलस्य निर्मलैर्नखमयूखजालकैर्जर्जरयन्तमिव महानिधानोद्धरणरसेन रसातलं तोयक्षालित[8]शुचिना धौतपादुकायुगलेन हंसमिथुनेनेव भागीरथीतीर्थयात्रापरिचयागतेनामुच्यमानचरणान्तिकं शिखरनिखातकुब्जकालायसकण्टकेन[9] वैणवेन विशाखिका[10]दण्डेन सर्वविद्यासिद्धिविघ्नविनाय-

प्रकोष्ठमन्तरं विद्यादरत्निमणिबन्धयोः । पूष्णो रविभेदस्य पुरा दक्षयज्ञगतस्य हरं निन्दतो मय्यनागते किमर्थमागतोसीति मुष्टिप्रहारणहरेण[11] दन्ता भग्नाः । तत्करस्पर्शेन[12] पावनत्वात्तत्र भक्तिः । अखिलस्य रसस्य कूपादुदञ्चनाय घटीयन्त्रमालापि भ्राम्यते दोलायमानत्वेन सम्मार्जनसम्भावना । कलापग्रहणं मार्जनीसादृश्यार्थं[13] । रजो रागो रेणुश्च । निचितं व्याप्तं । तुण्डमुदरं । स्फिजावुभ इति प्रसिद्धे । स्त्रियां स्फिजौ कटिप्रोथावित्यमरः । फेनवत्तैश्च श्वेता । वासुकिनेवेति नसामान्येनेति प्रभावपरिशोधकं । जर्जरयन्तं खण्डशः कुर्वाणम् । तोयेत्यादि हंसमिथुनस्यापि विशेषणं । शिखरेत्यादिनाङ्कुशसादृश्यं विशाखिकादण्डस्योक्तं निखात उत्कीर्णः । कालायसं शस्त्रभेदः । विशाखिका खनित्रिका ।

---

१. बलयेन प्रकोष्ठेन A. B. २. कल्पयन्तं A. ३. K. K1. K2. Jambû ed. omit कच. ४. सम्मार्जयन्तमिव K. T. ५. निखिल° instead of निज° A. ६. °देशं A. B. ७. °कुमारतलस्य K. Jambû ed. ८. °क्षालन° A. B. ९. कालायसाङ्कुकेन A. B. १०. विशिखिका° B. Jambû ed. ११. °प्रहारेण C2. Jambû ed. १२. °स्पर्शपावनत्वाच्च तत्र C1. Jambû ed. १३. साद्दश्यात् C1.

कार्पनयनाङ्कुशेनेव सततपार्श्ववर्तिना विराजमानमबहुभाषिणं मन्दहासिनं सर्वोपकारिणं कुमारब्रह्मचारिणमतितपस्विनं महामनस्विनं कृशक्रोधमकृशानुरोधं महानगरमिवादीनप्रकृतिशोभितं मेरुमिव कल्पतरुपल्लवराशिसुकुमारच्छायं कैलासमिव पशुपतिचरणरजः पवित्रितशिरसं शिवलोकमिव माहेश्वरगणानुयातं जलनिधिमिवानेकनदनदीशतसहस्रप्रक्षालितशरीरं जान्हवीप्रवाहमिव बहुपुण्यतीर्थस्थानशुचिं धाम धर्मस्य तीर्थं तथ्यस्य कोशं कुशलस्य पैतनं पूतनायाः शालां शीलस्य क्षेत्रं क्षमायाः शालेयं शालीनतायाः स्थानं स्थितेराधारं धृतेराकरं करुणाया निकेतनं कौतुकस्यागमं रामणीयकस्य प्रासादं प्रसादस्यागारं गौरवस्य समाजं सौजन्यस्य सम्भवं मङ्गलस्य कालं कलेर्भगवन्तं साक्षादिव विरूपाक्षं भैरवाचार्यं ददर्श ॥

भैरवाचार्यस्तु दूरादेव राजानं दृष्ट्वा शशिनमिव जलनिधिश्चचाल प्रथमतरोत्थितशिष्यलोकश्चोत्थाय प्रत्युज्जगाम समर्पितश्री फलोपायनश्च जन्हुकर्णसमुद्गीर्यमाणगङ्गाप्रवाहह्रादगम्भीरया गिरा स्वस्तिशब्दमकरोत् । नरपतिरपि प्रीतिविस्तार्यमाणधवलिम्ना चक्षुषा प्रत्यर्पयन्निव बहुतराणि पुण्डरीकवनानि ललाटपट्टपर्यस्तेन चोदंशुना शिखामणिना महेश्वरप्रसादमिव तृतीयनयनो-

विघ्न इव विनायको गजाननः । प्रकृतिः स्वभावो मायादिका च । राशिवत्तेन च सुकुमाराः । गणाः समूहाः प्रमथाश्च । नदनदीत्येकशेषो युक्तः। सहस्रेषु तैः प्रक्षालितशिराः तीर्थेषु यत्स्थानं वसनं तेन शुचि । तीर्थस्थानैः कनखलाद्यवस्थितिभिश्च शुचिः। शालीनता विनीतत्वं । निकेतनं गृहं । तत्र हि सर्वस्य कौतुको जायते । शश्यपि राजानं च दूरादेव दृष्ट्वा जलनिधिश्चलति । गाम्भीर्याच्च जलनिधिरेवेत्युक्तं । बिल्वं श्रीफलं । गङ्गेत्यादिना पवित्रत्वमाह । धवलिम्नेत्यनेन पुण्डरीकानां धवलत्वमाह । प्राभृतपुण्डरीकानां राजतत्वात्।

१. °अनपनयनाङ्कुशेनेव A. B. २. पूर्वोपकारिणं A. B. ३. K. K₂. Jambū ed. omit शत. ४. धामधर्मस्य A. ५. पत्तनं A. B. K. ६. पूतनाया आरामं रामणीयकस्य प्रासादं प्रसादस्य शालां A. B. ७. कौतुकस्यागारं गौरवस्य समाजं A. B. ८. A.B. omit कर्ण. ९. नादगम्भीर° A.B. १०. विस्तीर्यमाण A. ११. प्रत्यर्थयन्निव A.

द्गमेन प्रकाशयन्नावर्जितकर्णपल्लवपलायमानमधुकरः शिवसेवासमुन्मूलिताशेषपाप[1]मललवमुच्यमान इव [2]दूरादवननः प्रणाममभि[3]नवं चकार । आचार्योऽप्यागच्छात्रोपविशेति शार्दूलचर्मात्मीयमदर्शयत् । उपदर्शितप्रश्रयास्तु राजा मत्त[4]कलहंसकलगद्गदस्वरसुभगां मधुरसमयीं महानदीमिव प्रवर्तयन्वाचं व्याजहार । भगवन्नार्हसि मामन्यनूपस्खलितैः खलीकर्तुं । अशेष[5]राजकोपेक्षिताया [6]हतलक्ष्म्याः खल्वयं शीलापराधो द्रविणदौरात्म्यं वा यदेवमाचरति मयि गुरुः । अभूमिरयमुपचाराणामलमनियन्त्रणया दूरस्थितोपि मनोरथशिष्योयं जनो [7]भवतां माननीयं च गुरुवन्नोल्लङ्घनमर्हति गुरोरासनमासतां [8]र्च भवन्त एवात्रेति व्याहृत्य परिजनोपनीते [9]वासंसि निषसाद भैरवाचार्योपि प्रीत्यानतिक्रमणीयं नृपवचनमनुवर्तमानः [10]पूर्ववत्तदेव व्याघ्राजिनमभजत् । आसीने च [11]सराजके परिजने शिष्यजने च समुचितमर्घ्यादिकं चक्रे । क्रमेण च नृपमाधुर्यहृतान्तः करणः शशिकरनिकरविमलादशनदीधितीः स्फुरन्तीः शिवभक्तीरिव साक्षाद्दर्शयन्नुवाच । तातातिनम्रतैव ते कथयति गुणानां गौरवं सकलसम्पत्पात्रमसि विभवानुरूपास्तु प्रतिपत्तयो जन्मनः प्रभृत्यदत्तदृष्टिरेवास्मि स्वापतेयेषु यतः सकलदोष[12]कलापानलेन्धनैर्धनैरविक्रीतं क्वचिच्छरीरकमस्ति [13]भैक्षैरक्षिताः सन्ति प्राणा दुर्गृहीतानि कतिचिद्विद्वान्ते विद्याक्षराणि भगवच्छिवभ-

आवर्जितं नमितं स्वरवच्च तेन सुभगात् । शार्दूलो व्याघ्रः । अन्तःकरणं मनः । गौरवमुत्कर्षो भारवत्त्वं च । अदत्तदृष्टिरिति न तु मया धनान्यलभ्यानि । स्वापतेयेषु धनेषु । संरक्षिता इति । यदि कदाचित्क्वचिदुपयोगं यास्यन्तीति । अनेन प्राणादि दानमेवोचितमित्युक्तं । सकलसम्प-

१. K. K1. K2. Jambû ed. omit मल. २. दूरावनतः K. K2. दूरादेव नतः B. ३. अभिजातं A. B. ४. K. K2. Jambû ed. omit कल. ५ राजकापेक्षितायाः A. B. ६. राजलक्ष्म्याः K2. Jambû ed. ७. भगवतां K2. Jambû ed. ८. A. B. omit च. ९. नाससि B. K2. १०. पूर्ववर्तदेव° K. K1. ११. सराजपरिजने शिष्यवर्गैः समुचित° A. B. १२. °कलापनिबन्धनैः A. B. १३. भैक्ष्यसंरक्षिताः A. B. K2.

द्वारकपादसेवया समुपार्जिताः कियत्योपि सन्निहिताः पुण्यकणिकाः स्वीक्रियन्तां यदत्रोपयोगार्हं प्रतनुगुणग्राह्याणि कुसुमानीव हि भवन्ति सतां मनांसि। अपि च विद्वत्सम्मताः श्रूयमाणा अपि सुखयन्ति साधवः शब्दा इव सुधीरैपि हि मनसि यशांसि कुर्वन्ति विवरं विशतः कुतूहलस्य फेनधवलैः स्रोतोभिरिवापह्रियमाणो गुणगणैरानीतोस्मि कल्याणिनेति। राजा तु तं प्रत्यवादीत्। भगवन्ननुरक्तेष्वपि शरीरादिषु साधूनां स्वामिन एव प्रणयिनो युष्मद्दर्शनादुपार्जितमेव चापरिमितं कुशलजातं। कृतमनेनैवानुगमनेन स्पृहणीयं पदमारोपितोस्मि गुरुणेति विविधाभिश्च कथाभिश्चिरं स्थित्वा गृहमगात्। अन्यस्मिन्दिवसे भैरवाचार्योपि राजानं द्रष्टुं ययौ। तस्मै च राजा सान्तःपुरं सपरिजनं सकोशमात्मानं निवेदितवान्। स च विहस्योवाच। तात क्व विभवाः क्व च वयं वनेवर्धिता धनोष्मणाम्लायन्त्यलं लतेव मनस्विना खद्योतानामिवास्माकमियमपरोपतापिनी राजते तेजस्विता। भवादृशा एव भाजनं भूतेरिति स्थित्वा च कञ्चित्कालं जगाम परिव्राट् तेनैव क्रमेण पञ्चपञ्चराजतानि पुण्डरीकान्युपायनीचकार। एकदा तु श्वेतकर्पटावृतं किमप्यादाय प्राविशत्। उपविश्य च पूर्वभवत्स्थित्वा मु-

त्पात्रस्येयतः कियती वस्तुसम्पत्तिर्भविष्यतीत्याशङ्क्याह। प्रतन्वित्यादि। गुणाउत्कर्षास्तन्तवश्च कुसुमानीवेति कुसुमसादृश्येन मनसः सौकुमार्यमप्युक्तं। साधवः शिष्टाः शब्दा इव साधवः संस्कृता विद्वत्सम्मताश्च। फेनवत्तैश्च धवलैर्गुणगणैः स्रोतोभिश्च। स्वामिन एव प्रणयिन इत्यनुक्तान्यपि शरीरादीनि प्रणयिनां स्वायत्तानीत्यर्थः। खद्योताः कीटमणयः। महाभागेति प्र-

१. समुपार्जिता कियत्यपि सन्निहिता पुण्यकणिका K. Jambû ed. २. °सम्मन्ताः A. B. ३. K. Jambu ed. omit this word. ४. फेनवार्णैः K. K1. ५. गुणैरानीतोस्मि A. B. ६. राजा च प्रत्यवादित् A. B. ७. भगवन्नुक्तोपि A. B. K2. ८. शरीरारक्षिषु A. ९. A. B. omit च. १०. पुण्यजातं A. B. K. K1. ११. अनेनैवागतेन K. Jambû ed. १२. तस्मै राजापि A. B. १३. वित्रस्य B. १४. तावत्क्व A. B. K1. १५. धनवर्धिताः A. B. १६. A. B. read हि instead of अलं. १७. तपस्विता A. B. १८. वितत° A. B. K1. १९. पूर्ववत् A. B. K1. Jambû ed. २०. °सादृश्यस्येव C2.

हूर्तमब्रवीत् । महाभाग [1]भगवन्तमाह भगवान् । यथास्मच्छिष्यः पाताल-स्वामिनामा ब्राह्मणस्तेन ब्रह्मराक्षसहस्तादपहृतो [2]महासिरट्टहासनामा सोयं भवद्भुजयोग्यो गृह्यतामित्यभिधायापहृ[3]त[4]कर्पटावच्छादनात्परिवारादाचकर्ष [5]शरद्गगनतलमिव पिण्डतां नीतं कालिन्दीप्रवाहमिव स्तम्भितजलं नन्दकजिगीषया कृष्णकोपितं कालियमिव कृपाणतां गतं लोकविनाशाय प्रकाशितधारासारं प्रलयकालमे[6]घखण्डमिव नभस्तलात्पतितं दृश्यमानविकटदन्तमण्डलं हासमिव हिंसाया हरिबाहुदण्डमिव कृतदृढमुष्टिग्रहं सकलभुवनजीवितापहरण[7]क्षमेन काल[8]कूटेनेव निर्मितं कृतान्तकोपानलतप्तेनेवायसा घटितं । अतितीक्ष्णतया पवनस्पर्शेनापि रुषेव क्वणन्तं [9]मणिसभाकुट्टिमपतत्प्रति[10]विम्बच्छद्मनात्मानमपि द्विधेव पाटयन्तं । [11]अरिशिरश्छेदलग्नैः कचैरिव किरणैः करालितधारं मुहुर्मुहुस्तडिदुन्मेषतरलैः प्रभा[12]चक्रच्छुरितैर्जर्जरितातपं खण्डशः[13]छिन्दन्तमिव दिवसं कटाक्षमिव कालरात्रेः कर्णोत्पलमिव कालस्योद्गारमिव क्रौर्यस्या-

स्तुतानुगुणमामन्त्रणं । परिवारादाचकर्ष कृपाणमिति सम्बन्धः । पिण्डं शस्त्रं । उक्तं च । लोहोस्त्री शस्त्रकं तीक्ष्णं पिण्डं कालाय सायसीति । स्तम्भितं धृतं । रक्षितमन्तर्जलं यस्यतं । किल कृपाणस्य वापानीयं यन्त्रेण क्रियते । नन्दको विष्णुखड्गः । कालियो नागभेदः । धाराणामासारो धारारूपश्चासारो धारासारः । दन्तमण्डलं दन्तचक्रवालं दंशनसमूहश्च । मुष्टिः त्सरुरखुरभेदश्च । अतितीक्ष्णतयेति तैक्ष्ण्यं तानवाद्भवति । तनु च परस्परस्पर्शेण क्वणति । तथा चातितीक्ष्णोति दण्डप्रकृति रोषेण हुङ्करोति । कचैः केशैः । करालिता व्याप्ताः । साधयामः स्वकर्म सिद्धिं विदध्मः । मङ्गलत्वाद्गच्छामेति नोक्तम् ।

---

१. भवन्तं A. B. T. २. महानसिरट्ट° A. B. K2. ३. °नीत° A. B. T. ४. कर्पटाच्छादनात्परिवाराच्चकर्ष A. B. T. ५. शरद्गमनतलमिव A. B. T. ६. A.B.T. omit मेघ. ७. क्रमेण A.B. K2. ८. कूटमिव A. ९. °शिखा° A. B. T. १०. विम्बच्छलेनात्मानमपि A.B.T. ११. अतिशिरश्छेद° K1.Jambu ed. १२. चक्रस्फुरितैः A. B. T. १३. छिन्दन्तमिव A. B. K.

लङ्कारमहङ्कारस्य कुलमित्रं कोपस्य देहं[1] दर्पस्य मुसहायं साहसस्यां-
पत्यं.मृत्योरागमनमार्गं लक्ष्म्या निर्गमनमार्गं कीर्त्तेः कृपाणमवनिप-
तिस्तुनं गृहीत्वा करेणायुधप्रीत्या प्रतिमानिभेनालिङ्गन्निव सुचिरं ददर्श ।
सन्दिदेश च वक्तव्यो भगवान्परद्रव्यग्रहणावज्ञादुर्विदग्धमपि[3] हि मे मनो
युष्मद्विषये न शक्नोति वचनव्यतिक्रमव्यभिचारमाचरितुमिति । परिव्राट्
नु गृहीते तस्मिन्परितुष्टः स्वस्ति भवते साधयाम इत्युक्त्वा निरयासीत् ।
नृपश्च प्रकृत्या वीररसानुरागीतेन कृपाणेनामन्यत करतलवर्तिनीं मेदिनी-
म् । अथ व्रजत्सु दिवसेष्वेकदा भैरवाचार्यो राजानमुपह्वरे सोपग्रहमवा-
दीन् । तात स्वार्थलालसाः परोपकारदक्षाश्च प्रकृतयो भवन्ति भव्यानां भ-
वादृशां चार्थिदर्शनं महोत्सवः प्रणयनमाराधनमर्थग्रहणमुपकारो भूमिर-
सि सर्वलोकमनोरथानां येनाभिधीयसे श्रूयतां भगवतो महाकालहृदय-
नाम्नो महामन्त्रस्य कृष्णस्रगम्बरानुलेपनेनाकल्पेन कल्पकथितेन महा-
श्मशाने जपकोट्या कृतपूर्वसेवोस्मि तस्य च वेतालसाधनाव-
साना सिद्धिः । असहायैश्च सा दुरापा त्वं चालमस्मै कर्मणे
त्वयि च गृहीतभरे भविष्यन्त्यपरे सहायास्त्रयः । एकः स एवास्माकं
टीटिभनामा बालमित्रं मस्करी यो भवन्तमुपतिष्ठते द्वितीयः स पाता-
लस्वामी । अपरो मच्छिष्य एव कर्णतालनामा द्राविडो यदि साधु
मन्यसे ततोनीयतामयं दिङ्नागहस्तदीर्घो गृहीताट्टहासो निशामेका-

उपह्वरे प्रच्छन्ने । सोपग्रहं साभ्यर्थनं । प्रणयनं याचनं । मनोरथानामिति
रथाश्च भूमौ वहन्ति । आकल्पेन वेशेनेति कर्तव्यता । कल्पोपदेशको
ग्रन्थः कल्पः । अलं पर्याप्तः । उपतिष्ठत इति सङ्गतिकरणे तङ् । परिग्र-
हणं स्वीकारः । दीक्षितः कृतनियमः । अधिवासो नियमदिवसादाद्येहनि ।

---

१. दोहदं सर्पस्य A. B. T. २. अमात्यं मृत्योर्निर्गममार्गो कीर्त्तेरागमनमार्गं लक्ष्म्याः कृपाणं नरपतिस्तुनं A. B.T. ३. मम मनो A.B.T. ४. व्रजत्सु K. ५. स्वार्थालसा K. Jambû ed. स्वार्थालभाः K। ६. भावादृशा K. ७. अभिधीयसे A. B.. T ८. साधना विधेः सिद्धिः A. B.;T. ९. सा दुरवापा K. Jambû. ed. साधुं दुरवापा K. १०. स चास्माकं बालमित्रं त्रिदण्डी टिट्टिभनामा A. टिट्टिभ° B. टिटीभ° Jambû ed. ११. अपरोस्मच्छिष्यः A. B. T. १२. द्रमिलः A. B. K.

मेकदिङ्मुखार्गलतां बाहुरिति कृतवचसि च तस्मिन्नन्धकारप्रविष्ट इव दृष्टप्रकाशः प्राप्तोपकारावकाशः प्रमुदितेनान्तरात्मना नरेन्द्रः समभाषत भगवन्परमनुगृहीतोस्म्यनेन शिष्यजनसामान्येन निदेशेन कृतपरिग्रहमिवात्मनमवैमीति ननन्द च तेन नरेन्द्रव्याहृतेन भैरवाचार्यश्चकार च सङ्केतं। अस्यामेवागामिन्यामसितपक्षचतुर्दशीक्षपायामियत्यां वेलायाममुष्मिन्महाश्मशानसमीपभाजि शून्यायतने शस्त्रद्वितीयेनायुष्मता द्रष्टव्या वयमिति । अथातिक्रान्तेष्वहःसु प्राप्तायां च तस्यामेव कृष्णचतुर्दश्यां शैवेन विधिनादीक्षितः क्षितिपो नियमवानभूत् । कृताधिवासं च सम्पादितगन्धपुष्पधूपमाल्यादिपूजं खड्गमट्टहासमकरोत् । ततः परिणते दिवसे केनापि कर्मसाधनाय कृतरुधिरबलिविधानास्विव लोहितायमानासु दिक्षु रुधिरबलिलम्पटासु च वेतालजिह्वास्विव लम्बमानासु च रविदीधितिषु नरेन्द्रानुरागेण गृहीतापरदिशि स्वयमिव दिक्पालतां चिकीर्षति सवितरि यातुधानीष्विव वर्धमानासु तरुच्छायासु पातालतलवासिषु विग्राय दानवेष्विवोत्तिष्ठत्सु तमोमण्डलेषु नभसि पुञ्जीभवति रौद्रं कर्म दिदृक्षमाण इव नक्षत्रगणे विगाढायां शर्वर्यां सुप्तजने निःशब्दस्तिमिते निशीथे राजा सान्तःपुरं परिजनं वञ्चयित्वा वामकरस्फुरत्स्फुरो दक्षिणकरेणोत्खातं खड्गमट्टहासमादाय विसर्पता च खड्गप्रभापटलेन नीलांशुकपटेनेव दर्शनभयादवगुण्ठितनिखिलगात्रयष्टिरनादिष्टयाप्यनुगम्यमानो राजलक्ष्म्या पृष्ठतः परिमललग्नमधुकरवेणिव्याजेन केशेष्विव कर्मसिद्धिमाकर्षन्नेकाकी नगरान्निरगात् । अगाच्च तमुद्देशं । अथ प्रत्याजग्मुस्ते त्रयोपि द्रौणिकृपकृतव-

यथाशास्त्रं विधिना मन्त्रन्यासादिः पत्रपुजेति यावत् । तत इत्यादौ ततोस्मिन्सति राजा नगरान्निरगादिति सम्बन्धः। यातुधानीषु राक्षसीषु पुञ्जीभवतीति कृष्णरात्र्यां नक्षत्रगणपुञ्जीभावो लक्ष्यते । दिदृक्षत्रोपीतस्ततः पुञ्जीभवन्ति। विगाढायां घनायां । निशीथेर्धरात्रे । नीलेत्यादि सहोपमेयं ।

---

१. कृतेर्वचसि A. २. प्राप्तप्रत्युपकारा A. B. T. ३. वा वेलायाम॰ K. ४. अथातिक्रान्तेषु तेष्वहस्सु A. B. T. ५. विधिना धूपमाल्यादिपूज A. B. ६. स्फुरत्स्फरो A. B. K. ७. वेणी A. B. K. ८. प्रत्युपजग्मुः A. B. K. ९. जनायां Ca.

मांग इव मौप्तिके सन्नद्धाः स्नाताः स्रग्विणो गृहात् विकटवेशाः कुसुमशेखरसञ्चारिभिः क्रियमाणमन्त्रशिखाबन्धा इव गुञ्जद्भिः षट्चरणरूणीषपट्टिकांल्ललाटमध्यवर्तिनविकटस्वस्तिकाग्रन्थीन्महामुद्राबन्धानिव धारयन्तो मूर्धभिरेकश्रवणविवरविनतविमलदन्तपत्रप्रभालोकलेपधवलितकपोलैर्मुखेऽपिबन्त इव निशाचरापचयचिकीर्षया शार्वरमन्धकारं। इतरकर्णावलम्बिनां रत्नकुण्डलानामच्छाच्छया रुचा गोरोचनयेव मन्त्रपरिजप्तया समालब्धाङ्गाः स्वप्रतिबिम्बगर्भान्कर्मसिद्धये दत्तगुरुषापहारानिवोल्लासयन्तो [11]निशितान्निस्त्रिंशान्निस्त्रिंशांशुसन्तानसीमन्तिततिमिरामात्मीयात्मीयदिग्विभागसंरक्षणाय त्रिधेव त्रियामां पाटयन्तः सार्धचन्द्रैः कलधौतबुद्बुदावलितरलतारागणैर्निशायैा इव परुषासिधारानिकृत्तैः खण्डेर्गृहीतैश्चर्मफलकैरकाण्डशर्वरीमपरां घटयन्तः काञ्चनशृङ्खलाकलापनियमितनिबिडनिष्प्रवाणयो बद्धासिधेनवः टीटिभैकर्णतालपातालस्वामिनो निवेदयन्तश्चात्मानम्। अवनिपतिस्तु कोत्र क इति त्रीनपृच्छत्। आचचक्षिरे च स्वं नाम त्रयोपि ते तैरेव चानुगम्यमानेषु भवं सौप्तिकं। धृष्टद्युम्नाधिष्ठिताक्षौहिणीविनाशाय दुर्योधनप्रेरिताद्दिवार्जुनाधिष्ठितानां न किञ्चिदेषां शक्यमिति रात्राववस्कन्दमयच्छन्निति वार्त्तासम्बद्धः सकवाचः। उक्तं च। सन्नद्धो वर्मितः सज्जो दंसितो व्यूढकङ्कटः। अपचयो हानिः। गोरोचनयेवेति सहोपमेयं। उल्लासयन्तश्चालयन्तः। सार्धचन्द्रैरिति निशायां खड्गेषु चन्द्रखण्डस्य सम्भाव्यमानत्वादेवमुक्तं। न तु वस्तुवृत्तेन कृष्णचतुर्दशीक्षपायां चन्द्रः सम्भवतीति। कलधौतं हेमरौप्यं वा। बुद्बुदावलिर्बिन्दुपङ्क्तिः। चर्मफलकैः स्फटकैः। एकस्यावर्तमानत्वादाहापरामिवेति। निष्प्रवाणि नवं वस्त्रं। उक्तं च। अनाहतं निष्प्रवाणि तन्त्रकं च नवाम्बरे। असिधेनुः कृपाणी। कोत्र क इति वाक्यैकदेशोयं। अत्र कः कः स्थित इत्यर्थः।

---

१. सीसकेन A. B. T. २. शस्त्रिणः A. B. T. ३. वेषाः A. B. K2. ४. पदकान् A. ५. °ललाम° K1. Jambû ed. ६. श्रवणनिहितविमल° A. B. T. ७. °लोकनेनेव धवलित° A. ८. रक्त° A. B. T. ९. °परिपूजया A. B. T. १०. °उल्लालयन्तः K. °इव मालयन्तः A. B. T. ११. निशितनिस्त्रिंशान्निस्त्रिंशरश्मि° A. B. T. १२. आवली° A. B. T. १३. °र्दिशामिव A. B. T. १४. टिट्टिभ° A. B. T. १५. निवेदितवन्तश्चा° A. B. T. K. १६. त्रीनप्यपृच्छत् A. B. T. १७. स्वं स्वं नाम A. B. T. स्वं स्वं स्वयं नाम K.

मानो जगाम तां बलिदीपालोकजर्जरितगुग्गुलधूपधूमगृह्यमाणदिग्विभागतया विक्षिप्यमानरक्षासर्षपार्धदग्धान्धकारपटलपलायमाननिशामिव समुपकल्पितसर्वोपकरणां निःशब्दां च गम्भीरां[1] च भीषणां च साधनभूमिं तस्यां च कुमुदधूलिधवलेन भस्मना लिखितस्य महतो मण्डलस्य मध्ये स्थितं दीप्ततरतेजः प्रसरं पृथुपरिवेषप्रक्षिप्तमिव शरत्सवितारं मथ्यमानक्षीरोदावर्तवर्तिनमिव च मन्दरं रक्तचन्दनानुलेपिनो रक्तस्रगम्बराभरणस्योत्तानशयस्य शवस्योरस्युपविश्य जातजातवेदसि मुखकुहरे प्रारब्धाग्निकार्यं कृष्णोष्णीषं कृष्णाङ्गरागं कृष्णप्रतिसरं कृष्णवाससङ्कृष्णतिलाहुतिनिभेन विद्याधरत्वतृष्णया मानुषनिर्माणकारणकालुष्यपरमाणूनिव क्षयमुपनयन्तमाहुतिदानपर्यस्ताभिः प्रेतमुखस्पर्शदूषितं प्रक्षालयन्तमिवाशुशुक्षणिं करनखदीधितिभिर्धूमालोहितेन चक्षुषा क्षतजाहुतिमिव हुतभुजि पातयन्तमीषद्विवृताधरपुटप्रकटितसितदशनशिखरेण दृश्यमानमूर्तमन्त्राक्षरपङ्क्तिनेव मुखेन किमपि जपन्तं होमश्रमस्वेदसलिलप्रतिबिम्बिताभिरासन्नदीपिकाभिर्दहन्तमिव कर्मसिद्धये सर्वावयवान् । अंसावलम्बिना बहुगुणेन विद्याराजेनेव ब्रह्मसूत्रेण परिगृहीतं भैरवाचार्यमपश्यत् । उपसृत्य चाकरोन्नमस्कारमभिनन्दितश्च तेन स्वव्यापारमन्वतिष्ठत् । अत्रान्तरे पातालस्वामी बलीत्यदिनार्धदग्धत्वसम्भावनं। अर्धदग्धस्य च पलायनमुचितं न च बहुदग्धस्य पलायंश्च दिग्भागान्गृह्णाति । सर्षपो गौरसिद्धार्थः । तस्यां चेत्यादौ भैरवाचार्यमपश्यदिति सम्बन्धः । पृथुपरिवेषेत्यादिना भीषणीयत्वमुक्तं । परिवेषः परिधिः । परिक्षिप्तं परिवलितं । शरदि सविता दीप्ततरतेजः प्रसरो भवतीति शरद्ग्रहणं । जात उत्पन्नो न तूत्क्षिप्तः । प्रतिसरो हस्तसूत्रं । दिक्षु काण्डसूत्रप्रतिबन्ध इति । अन्ये तिलानां कृष्णत्वाल्पपरिमाणूनामपि कालुष्यकथनं । क्षतजेति प्रस्तावनानुगुणेन रक्ताहुतिः सम्भाव्यते । जपवशादीषदित्याद्युक्तं । ईषद्विवृतत्वादेव शिखरग्रहणं । प्रतिबिम्बादानोपपादनार्थमासन्नपदं । गुणास्तन्तवो गुणनं गुणः पौनः पुण्येनावर्तनं च । उत्कर्षा वा गुणाः । विद्याराजो मन्त्रविशेषः ।

१. गम्भीरभीषणां च A. B. T. २. °स्रग्वरा° A. B. T. ३. A. B. T. omit कृष्णवास. ४. °पर्यस्तासिधूमालोहितेन A. B. T. ५. °प्रकटसित° A. B. T. ६. परिवृतं A. B. T. ७. भैरवाचार्यमपश्यमपश्यत् B. ८. अनुगुणं C1. C2.

शौनकनवीमाशामङ्गीचकार कर्णनालः कौवेरीं परिव्राट्प्राचेतसीम् । राजा तु त्रैशङ्कवेन ज्योतिषाङ्कितां ककुभमलङ्कृतवान । एवं चावस्थितेषु दिक्पालेषु दिक्पालभुजपञ्जरप्रविष्टे विस्रब्धं कर्म साधयति भैरवे भैरवाचार्ये । अतिचिरं च कृतकोलाहलेषु निष्फलप्रयत्नेषु प्रत्यूहकारिषु शान्तेषु कौणपेषु गलत्यर्धरात्रसमये मण्डलस्य नातिदवीयस्युत्तरेणाकस्मादेव प्रलयमहावराहदंष्ट्राविवरमिव दर्शयन्ती क्षितिरदीर्यत । सहसैव च तस्माद्विवरादाशावारणोत्क्षिप्त इवालानलोहस्तम्भो महावराहपीवरस्कन्धपीठो नरकासुर इव भुवो गर्भादुद्गतो बलिदानव इव भित्त्वोत्थितः पातालमिन्द्रनीलप्रासाद इवोपरिज्वलितरत्नप्रदीपः स्निग्धनीलघननिविडकुटिलकुन्तलकान्तमौलिरुन्मीलन्मालतीमुण्डमालो गद्गदतया स्वरस्य स्वभावपाटलतया च चक्षुषः क्षीव इव यौवनमदेन वल्गद्गलदामकः करसम्पुटमृदितया मृदा दिङ्नागकुम्भाभावंसकूटौ पुनः पुनः परिपङ्कयन्सान्द्रचन्दनकर्दमदत्तैरव्यवस्थास्थासकैरतिसितजलधरशकलशारित इव शारदाकाशैकदेशः केतकीगर्भपत्रपाण्डुरस्य चण्डातकस्योपरि क्षामतरीकृतकुक्षिः कक्ष्याबन्धं विधाय विलासविक्षिप्तेन धवलव्यायाम-

शौनकतवीं पूर्वां । अङ्गीचकारेत्यनेन सर्वेषां स्वरुचिपरिगृहीतत्वमुक्तं । कौवेरीमुत्तरां । प्राचेतसीं पश्चिमाम् । त्रिशङ्कुरिक्ष्वाकुवंश्यः शापाच्चण्डालतां प्राप्तो यज्ञेन स्वर्गमारुरुक्षुरर्धपथे देवैर्निवारितो दक्षिणस्यां दिश्युदेति । तेन त्रैशङ्कवेन ज्योतिषाङ्कितां ककुभं दिशं दक्षिणां । दक्षिणस्यामित्युक्ते निष्ठप्रतीतिरिति त्रैशङ्कवेनेत्युक्तं । विस्रब्धमिति । एतदर्थमेव राजादीनां परिग्रहः । प्रत्यूहो विघ्नः । कौणपेषु राक्षसेषु । सहसेत्यादौ कुवलयश्यामलः पुरुष उज्जगामेति सम्बन्धः । लोहस्तम्भेति । लोहशब्देन सारता कृष्णता चोक्ता । गर्भान्मध्यादुदराच्च । घना निविडा निविडकुलाः । अतिकुञ्चिताः कुन्तलाः केशाः । मौलिश्चूडा किरीटं च । उक्तं च । चूडा किरीटं केशाश्च संहता मौलयस्त्रयः । चन्द्रकैः स्थास-

१. शातमन्यवीं A. B T. २. राजा तु ज्योतिषा त्रैशङ्कवेनाङ्कितां A. B. T. ३. च व्यवस्थितेषु A. B. ४. °प्रविष्ट इव विश्रब्धं A. B T. K2. ५. स्वभावलोहिततया A. B. T. ६. बलाद्गल° A B. ७. °भव्यस्य स्थासकैः शीत° B. T. शित° A. ८. °कुक्षि कक्षा A. B. T. ९. °व्यायतफालीपर्यन्तेन A. B. हील° instead फाली K. १०. शातमन्यवीं C1. C2 ११. यस्यामित्युक्ते C1. C2.

फालीपटान्तेन धरणीतलगतेन धार्यमाण इव पृष्ठतः शेषेण स्थिरस्थूलोरुदण्डो भूमि[1]भङ्गभयेनेव मन्थराणि स्थापयन्पदानि निर्भरगर्व[2]गुरु कथमपि शैलमिव गात्रमुद्वहन् दर्पेण मुहुर्मुहुरुरसि द्विगुं[3]णिते दोष्णि वामे तिर्यगुत्क्षिप्ते च दक्षिणे जङ्घाकाण्डे कुण्[4]डलिते चण्डास्फोटनटाङ्कारैः कर्मविघ्ननिर्घातानिव पातयन्नेकेन्द्रियविकलमिव जीवलोकं कुर्वन्कुवलयश्यामः पुरुष उज्जगाम जगाद च विहस्य नरसिंहनादनिर्घोषघोरया भारत्या भोविद्याधरीश्रद्धाकामुक किमयं विद्यालवावलेपः सहायमदो वा यद[5]स्मै जनायाविधाय बलिं बालिश इव सिद्धिमभिलषसि का ते दुर्बुद्धिरियमेतावना कालेन क्षेत्राधिपतिरस्य मन्नाम्नैव लब्धव्यपदेशस्य देशस्य नागतस्ते श्रोत्रोपकण्ठं श्रीकण्ठनामा नागोऽहं। अनिच्छति मयि का शक्तिर्ग्रहगणस्यापि गन्तुं गगने भूनाथोऽप्ययमनाथस्तपस्वी यस्त्वादृशैः शैवाप[6]सदैरुपकरणीक्रियते सहस्वेदानीं सहामुना दु[7]र्नरेन्द्रेण दुर्नरेन्द्रदुर्नयस्य फलमित्यभिधाय च निष्ठुरैः प्रकोष्ठप्रहारैस्त्रीनपि टी[8]टिभप्रभृतीनभिमुखं प्रधावितान्स्व[9]शरीरान्नरणकृपाणानपानयत्। अथा पूर्वाधिक्षेपभ[10]वणादशस्त्रव्रणैरप्यमर्षस्वेदच्छलेनानेकसम[11]रपीतमसिधाराजलमिव वमद्भिरवयवैरपि रोमाञ्चनिभेन मुक्तशरशतशल्पनिकरभरलघुमिवात्मानं रणाय कुर्वद्भिः।

कैः। फाली कक्ष्याबन्धः। शेषेणेति शेषो धवलो धरणितलगतश्च। पटान्तेनापि विशेषेणावतिष्ठते। आस्फोटनं बाह्वादि शब्दाः। एकेन्द्रियमर्थाच्छ्रोत्रं। निर्घोषो दिक्षु व्याप्तिरत्र। विद्याधरीत्यादि रूपणार्थमामन्त्रणं श्रद्धाग्रहणं फलाभावप्रतिपादनाय। अस्मादित्यादि [12]गर्वगर्भयमुक्तिः। बालिशो मूर्खः। अभिलषसीति फलाभावसूचनप[13]दं। अपसदोऽधमः। दुर्नरेन्द्रेण कुराज्ञा। दुर्नरेन्द्रमन्त्रतन्त्रानभिज्ञः। सशरीरेत्यादि न तु नरेन्द्रवदशस्त्रान्। अथेत्यादौ नरनाथः सावज्ञमवादीदिति सम्बन्धः।

---

१. भूमिभये भङ्गेनेव K. २. °गुरुकमपि A. B. T. ३. द्विगुणीकृते A. B. T. ४. कुण्डलीकृते A. B. T. ५ यस्मै जनायां विधाय A. T. ६. शैवापशददेवैरुप° K. ७. दुर्नरेन्द्रेण स्वस्य दुर्नयस्य A. B. T. ८. टिट्टिभ° A. B. T. ९. सशरीरफलकरण° A. B. T. १०. श्रवणादरिशस्त्र° A. B. T. ११. °समीर° K2. Jambū ed. १२. सर्व° C2. १३. परं C1. C2.

अट्टहासेनापि प्रतिबिम्बितताराग‍णेन स्पष्टदृष्टधवलदन्तमालमवज्ञया हसतेव कथ्यमानसत्त्वावष्टम्भः परिकरबन्धविभ्रमभ्रमितकरनखकिरणचक्रवालेन व्यपगमनाशङ्कया नागदमनमन्त्रमण्डलबन्धेनेव रुन्धन्[2]दशदिशो नरनाथः सावज्ञमवादीत्। अरे काकोदरकाक मयि स्थिते राजहंसेन जिह्रेषि बलिं याचितुं किममीभिर्वा परुषभाषितैर्भुजे वीर्यं निवसति सतां न वाचि प्रतिपद्यस्व शस्त्रमयं न भवामि। अगृहीतहेतिग्रहशिक्षितो मे भुजः प्रहर्तुमिति नागस्त्वनाहतनरमहि[3] किं शस्त्रेण भुजाभ्यामेव भनज्मि भवतो दर्पमित्यभिधाया[7]स्फोटयामास नरपतिरपि निरायुधमायुधेन युधि लज्जमानो जेतुमुत्सृज्य सचर्मफलकमट्टहासमसिं चाधोरु[4]कस्योपरि बबन्ध बाहुयुद्धाय कक्ष्याम्। युयुधाते च निर्दयास्फोटनस्फुटितभुजरुधिरशीकरसिच्यमानौ शिलास्तम्भैरिव पतद्भिर्बाहुदण्डैः शब्दमयमिव कुर्वाणौ भुवनं तौ न चिराच्च पातयामास भूतले भुजङ्गमं भूपतिर्जग्राह च केशेषु[5] चखान च शिरश्छेत्तुमट्टहासमपश्यच्च वैकक्षक[6]मालान्तरेणास्य यज्ञोपवीतं। उपसंहृतशस्त्रव्यापारश्चावादीत्। दुर्विनीतोऽसि ते दुर्नयनिर्वाहबीजमिदं यतो विस्रब्धमेवाचरसि चापलानीत्युक्त्वोत्ससर्ज च तं। अनन्तरं च सहसैवातिबहलां ज्योत्स्नां ददर्श शरदि विकसतां[8] कमलवनानामिव च घ्राणावलेपिनमामोदमजिघ्रत्। झणिति[9] च नूपुरशब्दमशृणोत्। व्यापारयामास च शब्दानुसारेण

कथ्यमानेत्यादि। अशस्त्रव्रणैश्चावयवैश्चाट्टहासेन च। मण्डलं गारुडशास्त्रप्रसिद्धमैन्द्रादिकं। काकोदरः सर्पः। काकेति निन्दायां। काकस्य च बलियाचनमुचितं। राजहंसो नृपवरो हंसभेदश्च। हेतिरायुधं। आस्फोटयामास बाहौ कर[10]घातमकार्षीत्। असिमिति प्रशंसार्थः सामान्यपदप्रयोग इति रुद्रटः। वैकक्षमालान्तरितत्वेन पूर्वमदर्शनं यज्ञोपवीतस्याह। अथेत्यादावट्टहासस्य मध्ये स्फुरन्तीं स्त्रियमपश्यदिति सम्बन्धः।

---

१. विधिनेव A B T. २. रुन्धयन् B. नन्दन् K?. Jambū ed ३. नागस्त्व-हततरं K. ४. अधोरकस्य A. B T. ५. केशेषू[illegible] A. केशेषु [illegible]-बाणशिर° B. ६ वैकक्षक° B. T. ७. इत्यभिधाय A. B. T. ८. विकसितां A. B. T. ९. झणितनूपुर° A. B. १०. करघात° C2.

दृष्टिमथ करतलस्थितस्यैवाट्टहासस्य मध्ये तडितमिव नीलजलधरोदरे स्फुरन्तीं प्रभया पिबन्तीमिव त्रियामां तामरसहस्तां कोमलाङ्गुलिरागराजिजालकानि च चरणलग्नानि वेलाबालविद्रुमलतावनानीवाकर्षतीं करपङ्कजसङ्कोचाशङ्कया शशाङ्कमण्डलमिव खण्डशः कृतं निर्मलचरणनखनिवहनिभेन बिभ्रतीं गुल्फावलम्बिनूपुरपुटतया स्थितनिविडकटकावलिबन्धनादिव परिभ्रश्यागतां बहुविधकुसुमशकुनिशतशोभितात्पवनचलिततनुतरङ्गादतिस्वच्छादंशुकादुदधिसलिलादिवोत्तरन्तीं । उदधिजन्मप्रेम्णा त्रिबलीच्छलेन त्रिपथगयेव परिष्वक्तमध्यामित्युन्नतस्तनमण्डलां दृश्यमानदिङ्नागकुम्भामिव ककुभं मध्यलग्नैरावतकरशीकरनिकरमिव शरत्तारागणतारं हारमुरसादधानां धवलचामरैरिव च मन्दमन्दनिःश्वासदोलायितैर्हारकिरणैरुपवीज्यमानां स्वभावलोहितेन मदान्धगन्धेभकुम्भास्फालनसङ्क्रान्तसिन्दूरेणेव करद्वयेन द्योतमानां हरशिखण्डेन्दुद्वितीयखण्डेनैव कुण्डलीकृतेन ज्योत्स्नामुचा दन्तपत्रेण विभ्राजमानां कौस्तुभगभस्तिस्तवकेनेव च श्रवणलग्नेनाशोककिसलयेनालङ्कृतां महतामत्तमातङ्गमदमयेन तिलकेनादृश्यच्छत्रच्छायामण्डलेनेवाविरहितललाटां । आपादतलादासीमन्ताच्च चन्द्रातपधवलेन चन्दनेनादिराजयशसेव धवलीकृतां धरणीतलचुम्बिनीभिः कण्ठकुसुममालाभिः सरिद्भिरिव सागराद्दृष्टाभिरधिष्ठितां मृणालकोमलैरवयवैः कमलसम्भवत्वमनक्षरमाचक्षाणां

तामरसं पद्मं । बहुविधेति । प्रकृते कुसुमानि शकुनयश्च सूत्रमयानि तरङ्गा मुष्टिदानक्षता भङ्ग्यो वीचयश्च । अतिस्वच्छत्वमंशुकस्योदधिसीललेन । उत्तरन्तीमिति । अंशुकाच्छादितया उदञ्चन्त्या उत्तरणमिवांशुकाल्लक्ष्यत इति । वर्ण्याभिप्रायेण त्रिपथगेति नाम मदे दाने लग्नः सक्तः समद इत्यर्थः । हस्तिपृष्ठेन यातीति । मदान्धेत्याद्युक्तम् । हस्तिवाहित्वाल्लक्ष्म्या एवमुक्तम् । धरणीतलचुम्बिनीभिर्मालाभिः सरिद्भिश्च ।

---

१. गुल्फावलम्बितपुर° A. B. T. २. छिन्ननिगडकट° A. B. T. ३. परिभ्रश्यागतां A. B. T. ४. मदलग्नैरावत° K. मथनलग्नैरावत° B. T. पयोधिमथनलग्नैरावत° A. ५. °गन्धे भक्ताभास्फालन° K. ६. हरशिखेन्दु° B. हरिशिखन्दु A. ७. विराजमाना A. B. T. ८. सागराविष्टाभिः A. B. T.

श्रियमपश्यत् ॥

असम्भ्रान्तश्च पप्रच्छ तां भद्रे कासि कस्यासि किमर्थं वादर्शनपथमागतासीति । सा तु स्त्रीजनविरुद्धेनावष्टम्भेनाभिभवन्तीव राजानमाभाषत । वीर विद्धि मां नारायणोरःस्थलीलीलाविहारहरिणीं पृथुभरतभगीरथादिराजवंशपताकां सुभटभुजजयस्तम्भविलासशालभञ्जिकां रणरुधिरतरङ्गिणीतरङ्गक्रीडादोहददुर्ललितराजहंसीं सितनृपच्छत्रषण्डशिखण्डिनीमतिनिशितशस्त्रधारावनभ्रमणविभ्रमसिंहीमसिधाराजलकमलिनीं श्रियं । अपहृतास्मि तवाधुना शौर्यरसेन याच स्वददामि ते वरमभिलषितमिति वीराणां त्वपुनरुक्ताः परोपकारा यतो राजा तां प्रणम्य स्वार्थविमुखो भैरवाचार्यस्य सिद्धिं ययाचे । लक्ष्मीस्तु देवीप्रीतहृदया विस्तीर्यमाणेन चक्षुषा क्षीरोदेनेवोपरि पर्यस्तेनाभिषिञ्चन्ती भूपालमेवमस्त्वित्यब्रवीत् । अवादीच्च पुनरनेन सत्त्वोत्कर्षेण भगवच्छिवभट्टारकभक्त्या चासाधारणया भवान्भुवि सूर्याचन्द्रमसोस्तृतीय इवाविच्छिन्नस्य प्रतिदिनमुपचीयमानवृद्धेः शुचिसुभगमान्यसत्यत्यागशौर्यशौण्डिपुरुषप्रकाण्डप्रायस्य महतो राजवंशस्य कर्ता भविष्यति । यस्मिन्नुत्पत्स्यते सर्वद्वीपान्तराणां भोक्ता हरिश्चन्द्र इव हर्षनामा चक्रवर्ती त्रिभुवनविजिगीषुर्द्वितीयो मान्धातेव यस्यायं करः स्वयमेव कमलमपहाय ग्रहीष्यति च मामिति वचसोन्ते तिरोबभूव ।

हरिणीमिति । हरिणी किल स्थल्या लीलया विहरति । वंशोन्वयेथ वंशो वेणौ पताकोत्क्षिप्यते । सुभटेत्यादि विशेषणे शवीरानुरागित्वमस्याद्शितं । स्तम्भे च शालभञ्जिका उत्कीर्णपुत्रिका क्रियते । षण्डो वनं तत्र शिखण्डिनी मयूरी । अपुनरुक्ता भूयो भूयः क्रियमाणापि चेत्यर्थः । परोपकारकरणपरत्वेन प्रीतत्वम् । अभिषिञ्चन्तीति । अभिषेको राज्ञ उचितः । शौण्डः प्रसक्तः । प्रकाण्डशब्दः प्रशंसावाची । द्वितीयः स्पर्धावान् ।

१. °खण्ड° A. °छत्रखण्डिनीं B. २. अभिमतं A. B. T. ३. धीराणां K.
४. उत्पत्स्यते K. उत्पद्यते A. उत्पस्यते B. ५. °द्वीपानां K. Jambû ed.
६. °विजिगीषोर्द्वितीयो मान्धातुर्यस्यायं जनं A. B. ७. करकमल° A. B. T.
८. स्थल्यां C1. ९. क्रीडापरं C2.

भूमिपालस्तु तदा कएर्यंहृदये नातिमात्रमप्रीयत । भैरवाचार्योऽपि तस्या देव्यास्तेन वचसा कर्मणा च सम्यगुपपादितेन सद्य एव च कुन्तली किरीटी कुण्डली हारी केयूरी मेखली मुद्गरी खड्गी कवची च भूत्वावाप विद्याधरत्वं प्रोवाच च राजन्नदूरव्यापिनः फल्गुचेतसामलसानां[1] मनोरथाः सतां तु भुवि विस्तारवत्यः स्वभावेनैवोपकृतयः[2] स्वप्नेऽप्यसम्भाविता दातुमिमां दक्षिणां क्षमः[3] कोन्योभवन्तमपहाय सम्पत्कणिकामपि प्राप्य तुलेव[4] लघुप्रकृतिरुन्नतिमायाति त्वदीयैर्गुणैरुपकरणीकृतस्य त्वत्त एव च लब्धात्मलाभस्य निर्लज्जतेयमस्य मूढहृदयस्य यदिच्छामि येन केनचित्कार्यलवोपपादनोपयोगेन स्मरयितुमात्मानमिति प्रत्युपकारदुष्प्रवेशास्तु[5] भवन्ति धीराणां हृदयावष्टम्भाः । यतस्त्वं राजा भवत्सिद्ध्यैव परिसमाप्तकृत्योऽस्मि साधयतु मान्यो यथा समीहितं स्थानमिति प्रत्याचचक्षे । तथोक्तश्च भूभुजा जिगमिषुः सुहृदं[6] समालिङ्ग्य टीटिभादीन्[7] कुवलयवनेनेवावश्यायशीकरस्राविणा सास्रेण चक्षुषा वीक्षमाणः क्षितिपतिं पुनरुवाच । तात ब्रवीमि यामीति न स्नेहसदृशं त्वदीयाः प्राणा इति पुनरुक्तं गृह्यतामिदं शरीरकमिति व्यतिरेकेणार्थकरणं[8] तिलशः क्रीता[9] वयमिति नोपकारानुरूपं बान्धवोसीति दूरीकरणमिव त्वयि स्थितं मे हृदयमित्यप्रत्यक्षं त्वद्विरहानुका[10]रिणीकारणेयं[11] नः सिद्धिरित्यश्रद्धेयं निष्कारणस्तवोपकार इत्यनुवादः स्मर्तव्या वयमित्याज्ञा[12] सर्वथा कृतघ्नालापेष्व[13]सज्जनकथासु च चेतसि कर्तव्योऽयं

कुण्डलं कर्णावेष्टनं । हारो मुक्ताहारः । केयूरमङ्गदं दोर्भूषा । फल्गु असारं । प्रत्याचचक्षे पर्यहार्षीत् । यामीत्यादि वक्रोक्त्या चेतः । स्थितं सर्वं व्याहरति । न स्नेहसदृशमिति स्नेहानुरूपनिषेधेन स्नेह इव सुतरामाविष्कृत एव । उक्तं हि । प्रतिषेध इवेष्टस्य यद्विशेषा[14]भिधित्सया । आक्षेप इति तंसन्तः शंसन्ति कवयः सदेति । एवं त्वदीयाः प्राणा इत्यादौ । व्यतिरेकः पृथग्भाव आवां किलैक एवार्थः। तिलश इति यावान्किलायमुपकारो बहुगुणस्तावन्तो नावयवास्तिलशो विभागेनास्माकं । कारणा यातना।

१. अलसाः A. B. T. २. उपकृतयः कः A. B. ३. क्षमोऽन्योभव° A. B. ४. तुलामिव A. B. T. ५. इति धीराणां A. B.T. ६. सुचिरमालिङ्ग्य A. सुरमालिङ्ग्य B. ७. टिट्टिभादीन् A. B. ८. व्यतिरेककरणं A. B. T. ९. क्रीडाव° K. १०. °विरहकारणं करणीयं A. B. T. ११. न A. B. १२. अवज्ञा K2. Jambû ed. १३. °मालापेषु B. १४. विशेषा विधित्सया C1. C2.

स्वार्थनिपुणो जन इत्यभिधाय वेगच्छिन्नहारोच्छलितमुक्ताफलनिकरता-डिततारागणं गगनतलमुत्पपात ययौ च सीमन्तितग्रहग्रामः सिद्धयुवतिं धाम । श्रीकण्ठोऽपि रजनन्यनाक्रमकीर्तिः कर्तव्येषु नियोगेनानुग्राह्यो ग्राहितविनयोऽयं परिजन इत्यभिधाय राजानुमोदितस्तदेव भूयो भूविवरं विवेश । नरपतिस्तु क्षीणभूयिष्ठायां शर्वर्यां द्रवानुसारध्ये प्रबुध्यमानकमलिनीनिःश्वाससुरभौ वनदेवताकुचांशुकापहरणपरिहासस्वैरिणीव सावश्यायशीकरे परिमलाकृष्टमधुकरे कुमुदनिद्रावाहिनि निशापरिणतिजडे तुषारलेखिनि वनानिले विरहविधुरचक्रवाकचक्रनिःश्वसितसन्तापितायामिवापरजलनिधिमवतरन्त्यां त्रियामायां साक्षादागतलक्ष्मीविलोककुतूहलिनीष्विव समुन्मीलन्तीषु नलिनीषून्निद्रपक्षिणि क्षरति कुसुमविसरमिव तुहिनकणनिकरं मृदुपवनलासितलते कानने कमललक्ष्मीप्रबोधमङ्गलशङ्खेष्विव रसत्स्वनवबद्धध्वनन्मधुकरेषु मुकुलायमानेषु कुमुदेषूज्जिहानरविरथवाजिविसृष्टैः प्रोथपटुपवनैः प्रोत्सार्यमाणास्विव वारुण्यां ककुभि पुञ्जीभवन्तीषु श्यामालताकलिकासु तारकासु मन्दरशिखराश्रयिणि मन्दानिललुलितकल्पलतावनकुसुमधूलिविच्छुरित इव धूसरीभवति सप्तर्षिमण्डले सुरवारणाङ्कुश इव च्युते गलति ना-

सीमन्तितो द्विधाकृतः । ग्रामः समूहः । वनेत्यादावस्मिन्नस्मिन्सति नरपतिर्नगरं विवेशेति सम्बन्धः । क्षीणभूयिष्ठायां बहुतरं क्षीणायां । तुषारस्य शीतस्य लेशाः सन्ति यत्र तस्मिन्नीषच्छीतले । सन्तापितायामिवेति सन्तापितश्च शीतलं स्थानमवतरति । कुसुमविसरमिवेति समोपमा । लासिता नर्तिताः । उज्जिहान उद्गच्छन् । श्यामा रात्रिः सैव लताव्रततिः । प्रियङ्गुलतिका मकरिका । तारामयो मृगो मृगशीर्षस्थितारोऽङ्कुशाकारः । आत्मशरीरानन्तरं स्नानेति । आत्मशरीरमनन्तरं यस्य तादृशेन स्नानभोजनाच्छादनादिना । तेषु कृत्वा पश्चादात्मनः करोतीत्यर्थः । शौर्यानुरक्ताविति न

१. निपुणः A. B. २. अभिधाय समुत्पपात वेग°—ताडितगगनतलं A. B. ३. स्वामिन् A. B. ४. भूयो भुवो विवरं A. B. T. ५. रजन्यां A. B. T. ६. निवेशापरिणति° A. B. ७. तुषारलेशिनि A. B. T. K. ८. जलधिमवतारयन्त्यां A. B. ९. रक्षति A. B. १०. °कर B. ११. °करम्बपटुपवन° A. B. T. १२. लतकाननकमललक्ष्मी A. १३. °ध्वननमधु° A. B. T. १४. कुमुदवनेषु A. B. १५. मण्डलेषु K. १६. सुवारणाङ्कुशः B. १७. शितलेशाः C1. C2. १८. सहोपमा C2. १९. C1. C2. read स्नानभोजनाच्छादनानि तेषु.

रामये मृगे त्रीनपि टीटिभादीन्गृहीत्वा नागयुद्धव्यतिकरमलीमसानि शुचिनि वनवापीपयसि प्रक्षाल्याङ्गानि नगरं विवेश। अन्यस्मिन्नहनि तेषामात्मशरीरानन्तरं स्नानभोजनाच्छादनादिना प्रीतिमकरोत्। कतिपयदिवसापगमे च परिव्राड्भूभुजावार्यमाणोपि वनं ययौ। पातालस्वामिकर्णतालौ तु शौर्यानुरक्तौ तमेव सिषेवाते। सम्पादितमनोरथातिरिक्तविभवौ च सुभटमण्डलमध्ये निकृष्टमण्डलाग्रौ समरमुखेषु प्रथममुपयुज्यमानौ कथान्तरेषु चान्तरान्तरा राज्ञा समादिष्टौ विचित्राणि भैरवाचार्यचरितानि शैशववृत्तान्तांश्च कथयन्तौ तेनैव सार्धं जरामाजग्मतुरिति ॥

इति श्रीमहाकविचक्रचूडामणिश्रीबाणभट्टविरचिते हर्षचरिते महाकाव्ये राजवंशवर्णनं नाम तृतीय उच्छ्वासः सम्पूर्णः ॥ ३ ॥

भोगलोलुभौ। अतिरिक्तोधिकः। मण्डलाग्रः खड्गः। अन्तरन्तरा मध्ये मध्ये। कथयताविति स्थिरप्रीतिसिद्ध्यै ॥ इति श्रीशङ्करकविकृते हर्षचरितसङ्केते तृतीय उच्छ्वासः सम्पूर्णः ॥ ३ ॥

१. तारानाथमृगे A. B. T. २. टिट्टिभादीन् A. B. ३. विप्रकृष्ट° A. B. T. ४. °वृत्तानि च A. B. ५. राजवंशो नाम तृतीय उच्छ्वासकः परिसमाप्तः A. B. T. ६. कृते K. ७. इति हर्षचरितसङ्केते तृतीय उच्छ्वासः C1. C2.

# ॥ चतुर्थ उच्छ्वासः प्रारभ्यते ॥

योगं[3] स्वप्नेऽपि नेच्छन्ति कुर्वते न करग्रहं ।
महान्तो नाममात्रेण भवन्ति पतयो भुवः ॥ १ ॥
सकलमहीभृत्कम्पकृदुत्पद्यत एक एव नृपवंशे ।
विपुलेऽपि पृथुप्रतिमो दन्त इव गणाधिपस्य मुखे ॥ २ ॥

अथ तस्मात्पुण्यभूमेर्द्विजवरस्वेच्छागृहीतकोशो नाभिपद्म इव पुण्डरीकेक्षणाल्लक्ष्मीपुरःसरो रत्नसञ्चय इव रत्नाकराद्गुरुबुधकविकलाभृत्तेजस्विभूनन्दनप्रायो ग्रहगण इवोदयस्थानान्महाभारवाहनयोग्यः सागर इव सगरप्रभावाद्दुर्जयबलसनाथो

ओं । योगमित्यादिना प्रसिद्धात्प्रत्युद्गतवैलक्षण्यमुच्यते । भूपतीनां योगे युक्तिः । गूढप्रत्याहाररसादनादिच्छद्मेत्यर्थः सम्बन्धश्च । करग्रहो दण्डग्रहणं विवाहश्च । नाममात्रेणेति नामैव तेषां श्रुत्वा भुवनं कम्पत इत्यर्थः । अर्थगृन्थेन सकलेनेत्यादिना भाविनी हर्षोत्पत्तिः सूचीता ॥ १ ॥

महीभृद्भिरिरपि कम्पो वेपथुश्चलनं च । पृथुरादिराजो विस्तीर्णश्च । प्रतिमा सादृश्यं दन्तकोशश्च । दन्त इवेति । दन्तोऽप्येको गणाधिपस्य मुखे समूहाधिपत्य प्रधाने च ॥ २ ॥

अथेत्यादौ राजवंशो निर्जगामेति सम्बन्धः । द्विजवरा विप्रोत्तमा ब्रह्मा च द्विजोत्तमः । कोशो गञ्जः कर्णिका च । पुण्डरीकेक्षणः कमललोचनो विष्णुश्च । लक्ष्मीः पुरःसरा यस्य लक्ष्म्याः पुरःसरः । जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते । मणयश्च रत्नानि । गुरव उपदेष्टारः । बुधाः पण्डिताः । कवयः काव्यकृतः । कलावन्तो गीतादिज्ञाः । तेजस्विनः शूराः । भूनन्दना राजानः । इतरत्र गुरुर्बृहस्पतिः । उदयः प्रभावोऽपि । महाभारो भूपालनरूपो विजयरूपो वा । तस्य निर्वहणे योग्यः । सगरबलप्रभावो यस्य तस्माद्राज्ञः सगराणां चयः प्रभावस्तस्मात् । प्रभवादिति पाठे सगरबलप्रकटो भव उत्पत्तिर्यस्य तस्मात् । अन्यत्र प्रसगरस्य यः प्रभवस्तस्मादिति व्याख्या । दुर्जयो दुरभिभवः । बलं प्राणाः सैन्यं वा । तेन युक्तस्ततः कर्मधारयः । अन्यत्र दुर्जयोजितो विष्णुः । बलो हलधरः । ताभ्यां

१. K. K2. prefix ओं नमः सरस्वत्यै । ओं । २. सङ्ग A. B. T. ३. °कपि° K2. °कविस्थिरकलावत् A. B. T. ४. महीभारवहन° A. B. T. ५. गञ्जा Jamb. ed. ६. लक्ष्म्याश्च C2. ७. प्रभावात् C2. ८. प्राणं C1. C2.

हरिवंश इव शूरान्निर्जगाम राजवंशः । यस्मादविनष्टधर्मधवलाः प्रजासर्गा इव कृतमुखात्प्रतापाक्रान्तभुवनाः किरणा इव तेजोनिधेर्विग्रहव्याप्तदिङ्मुखा गिरय इव भूभृत्प्रवराद्धरणीधारणक्षमा दिग्गजा इव ब्रह्मकरादुदधीन्पातुमुद्यता जलधरा इव घनागमादिच्छाफलदायिनः कल्पतरव इव नन्दनात्सर्वभूताश्रया विश्वरूपप्रकाश इव श्रीधरादजायन्त राजानः । तेष चैवमुत्पद्यमानेषु क्रमेणोदपादि हूनहरिणकेसरी सिन्धुराजज्वरो गूर्जरप्रजागरो गान्धाराधिपगन्धद्विपकूटहस्तिज्वरः पाकलो लाटपाटवपाटज्वरो मालवलक्ष्मीलतापरशुः प्रतापशील इति प्रथितापरनामा प्रभाकरवर्धनो नाम राजाधिराजः । यो राज्याङ्गसङ्गीन्यभिषिच्यमान एव मलानीव मुमोच धनानि यः परकीयेनापि कातरवल्लभेन रणमुखे तृणे-

सनाथः । शूराद्विक्रान्तात् । शूरश्च यदूनां राजा तस्मात् । अविनष्टेन पूर्णेन धवलाः शुक्लाः । अविनष्टधर्मान्धवांल्लान्तीति वा । कृतमुखान्संस्कृतान् । कृतयुगादेश्च प्रताप आतपो रिपुभयजननीवार्ता च । विग्रहो विरोधो देहश्च । भूभृतां राज्ञां । भूभृत्प्रभवो ब्रह्मा च । धारणं पालनमुद्वहनं च । ब्रह्माकरोतीति ब्रह्मकरस्तस्मात् । सामानि गायतो ब्रह्मणः करात्करिण उत्पन्नेति वार्त्ता । पातुं रक्षितुं ग्रासीकर्तुं च । घन आगम उपदेशो यस्य घनागमश्च वर्षाकालः। नन्दयतीति नन्दनो देवोद्यानं च । सर्वेषां भूतानां प्राणिनामाश्रया आश्रयणीयाः । सर्वस्य वा भूतस्याश्रयाः सर्वेषां वा भूताः पारमार्थिका अत एवाश्रयणीयाः । श्रीधरो हरिरपि । हूनादयो जनपदभेदाः । प्रजागरो निद्राक्षयः । स्वेदं मूत्रं पुरीषं च मज्जा चैव मतङ्गजाः । यस्याप्राय विमाद्यन्ति तं विद्याद्गन्धहस्तिनं । कूटपाकलो हस्तिज्वरः । येतो हूनाद्युन्मूलकेतैव प्रथितापरनामा राजा । राज्याङ्गान्यमात्याद्याः। अभिषिच्यमानो राज्ये प्रतिष्ठाप्यमानः । यस्याभितः सिच्यते सोङ्गसङ्गीनि मलानि मुञ्चति । कातरेति तृणं कातरैर्मुखे धूर्यते । तृणेनेति सहोपमा मुखे तृणधारणमनो

१. प्रभवात् K. प्रसवात् A. B. T. २. °हूण° A. B. T. ३. गन्धाराधिप° A. B. ४. °द्विपपाकलः A. B. K2 Jambû ed. ५. लाटमालव° A. B. T. ६. पाटश्वरः K. ७. बन्धनानि A. B. T. ८. हूणादयः C1. ९. यदा C1. C2. १०. उन्मूलकेतैव C2. ११. ध्रियते C1. C2. १२. मानो C2.

नेव धृतेनालज्जत जीवितेन । यः करधृतधौतासिप्रतिबिम्बितेनात्मनाप्यदृश्यत समितिषु सहायेन रिपूणां पुरः प्रधनेषु धनुषापि नमता यो मानी मानसेषा खिद्यत यश्चान्तर्गतामपरिमितरिपुशस्त्रशल्यशङ्कुकीलितामिव निश्चलामुवाह राजलक्ष्मीं । यश्च सर्वासु दिक्षु समीकृतमार्गतटावटविटपाटवीतरुकण्टकतृणगुल्मवल्मीकगिरिगहनैर्दण्डयात्रापथैः पृथुभिर्भृत्योपयोगाय व्यभजतेव वसुधां बहुधा । यं[1] चालब्ध युद्धदोहदमात्मीयोपि सकलरिपुसमूहसमुत्सारकः परकीय इव ततापं प्रतापः । यस्य च वह्निमयो हृदयेषु जलमयो लोचनपुटेषु मारुतमयो निःश्वसितेषु क्षमामयोङ्गेष्वाकाशमयः शून्यतायां[2] पञ्चमहाभूतमयो मूर्त इवादृश्यत निहतप्रतिसामन्तान्तःपुरेषु प्रतापः । यस्य चासन्नेषु भृत्यरत्नेषु प्रतिबिम्बितेव तुल्यरूपा समलक्ष्यत लक्ष्मीः । तथा च । यस्य प्रतापाग्निना भूतिः शौर्योष्मणा सिद्धिरसिधाराजलेन वंशवृद्धिः शस्त्रव्रणमुखैः पुरुषकारोक्तिर्धनुर्गुणकिणेन करगृहीतिरभूत्[3] । यश्च वैरमुपायनं विग्रहमनुग्रहं समरागमं महोत्सवं शत्रुं निधिदर्शनमरिबाहुल्यमभ्युदयमाहवाह्वानं वरप्रदानमवस्कन्दपातं दिष्टवृद्धिं शस्त्रप्रहारपतनं वसुधारामन्यत । यस्मिंश्च राजनि निरन्तरैर्यूपनिकरैरङ्कुरितमिव कृतयुगेन दिङ्मुखविसर्पिभिरध्वरधूमैः पलायितमिव कलिना ससुधैः

चित्यमेव पोषयति धौतपदेन बिम्बस्वीकारसामर्थ्यमुक्तं । समिदिन्धनं सङ्ग्रामश्च । निश्चलामनपायिनीं । समीकृतास्तटा वटायैर्विटपाटवीयुक्तैस्तरुभिस्तथा तृणादिभिश्च गहनैः । विटपाः शाखाः । अटवी समूहः । गुल्मा जालकानि । वल्मीकः पिपीलककृतो मृत्कूटः । दण्ड[5]श्चतुरङ्गं बलं । तस्य यात्रापथैर्गमनमार्गैः । सीमास्थानीयैर्व्यभजत खण्डशो व्यलभत । भूशय्यादिवशे न पांसुभृतत्वात्काठिन्याच्च क्षमामयः । शून्यतायां निश्चेष्टत्वे । आसन्नेष्विति । आसन्नानि प्रतिबिम्बं गृह्णन्ति । भूतिः सम्पद्भस्म च । ऊष्मा चान्नदाहिका शक्तिः । सिद्धिः पाकोपि । वंशो वेणुरपि । व्रणानां मुखान्यग्राणि । गुणान्येव वा मुखान्याननानि । मुखैः किलोक्तिर्भवति । करगृहीतिर्दण्डग्रहणं । किणश्च व्यायामहस्त एव भवति । अज्ञातः शत्रुष्वभिगमोवस्कन्दो दिष्टवृद्धिरानन्दवर्धनं । धूमेनोत्प्रेक्षा कार्ष्ण्यात् । सुधा मक्कोलममृतं च । सभा सदः ।

१. तं वालब्ध A. B. T. २. शून्यतासु A. B. T. ३. अभवत् A. B. K. ४. समित्प्रधानं C2. ५. दण्डश्च रङ्गबलं C2. दण्डं Jambû ed.

सुरालयैरवतीर्णमिव स्वर्गेण सुरालयशिखरोद्धूयमानैर्धवलध्वजैः पल्लवितमिव धर्मेण बहिरुपरचितविकटसभासत्रप्रपाप्राग्वंशमण्डपैः[1] प्रसूतमिव ग्रामैः काञ्चनमयसर्वोपकरणैर्विभवैर्विशीर्णमिव मेरुणा द्विजदीयमानैरर्थकलशैः[2] फलितमिव भाग्यसम्पदा । तस्य च जन्मान्तरेपि सती पार्वतीव शङ्करस्य गृहीतहृदया लक्ष्मीरिव लोकगुरोः स्फुरत्तरत्नतारकारोहिणीव कलावतः सर्वजनजननी बुद्धिरिव प्रजापतेर्महाभूभृत्कुलोद्गता गङ्गेव वाहिनी नायकस्य मानसानुवर्तनचतुरा राजहंसीव राजहंसस्य सकललोकार्चितचरणा त्रयीव धर्मस्य दिवानिशममुक्तपार्श्वस्थितिररुन्धतीव महामुनेर्हंसमयीव गतिषु परपुष्टमयीवालापेषु चक्रवाकमयीव[3] पतिप्रेम्णि प्रावृण्मयीव पयोधरोन्नतौ मदिरामयीव विलासेषु निधिमयीवार्थसञ्चयेषु वसुधारामयीव प्रसादेषु[4]

उक्तं च । समज्या परिषद्गोष्ठी सभा समिति संसदः । आस्थानी क्लीब आस्थानं स्त्री नपुंसकयोः सदः । सत्रं सदादानं । सत्रमाच्छादने यज्ञे सदादाने वनेपि चेत्युक्तं । प्रपा यत्र तोयदानं । प्राग्वंशः पत्नीशाला । उक्तं च । प्राग्वंशः प्रागहविर्गेहादिति । बहिरुपपादिताः विकटाः सभासत्रप्रपाप्राग्वंशरूपा यैस्तैः । तस्येत्यादौ । तस्य च महादेवी यशोवती नामाभूद्यास्य वक्षसि ललासेति सम्भन्धः । सती साध्वी शोभना वा । जन्मान्तरे श्यामा या संज्ञैषां[5] । शङ्करस्येत्यानि महामुनिशब्दान्तानि राज्ञि योज्यानि । गृहीतमावर्तितं । परत्हृदयं चेतो वक्षश्च । लोकगुरोर्हरेश्च । तारका कनीनिका नक्षत्राणि च तारकाः । जननी माता । जन्यते नयेति जननी च । भूभृद्गिरिरपि । कुलं समूहोपि । वाहिनी सेना नदी च । मानसं चेतः सरश्च । वसुधारा धनवृष्टिः । चरणौ पादौ कठादिशाखाश्च चरणाः । धर्मोस्ति यस्य स धर्मः । अर्श आदित्वादच् । यद्वा साक्षादेव धर्मः । महामुनी राजर्षिर्वसिष्ठश्च । प्रावृट् वर्षा । पयोधरौ स्तनौ मेघाश्च पयोधराः । कोशो गजः कर्णिका च ।

---

१. मण्डलैः A. B. T. २. धनकलशैः A. B. T. ३. चक्रवाकीमयीव A. B. T. ४. प्रसादस्थानेषु A. B. ५. सोज्ञैषा C1. C2.

कमलमयीव कोशसङ्ग्रहेषु कुसुममयीव फलदानेषु सन्ध्यामयीव व-न्द्यत्वे चन्द्रमयीव निरूष्मत्वे दर्पणमयीव प्रतिप्राणिग्रहणेषु सामुद्रमयीव परचित्तज्ञानेषु परमात्ममयीव व्याप्तिषु स्मृतिमयीव पुण्यवृत्तिषु मधुमयीव सम्भाषणेष्वमृतमयीव तृप्त्यन्नु तृप्तिमयीव भृत्येषु निर्वृत्तिमयीव सखीषु वेतसमयीव गुरुषु गोत्रवृद्धिरिव विलासानां प्रायश्चित्तशुद्धिरिव स्त्रीत्वस्याज्ञासिद्धिरिव मकरध्वजस्य व्युत्थानवृद्धिरिव रूपस्य दिष्टवृद्धिरिव रतेर्मनोरथसिद्धिरिव रामणीयकस्य दैवसम्पत्तिरिव लावण्यस्य वंशोत्पत्तिरिवानुरागस्य वरप्राप्तिरिव सौभाग्यस्योत्पत्तिभूमिरिव कान्तेः सर्गसमाप्तिरिव सौन्दर्यस्यायतिरिव यौवनस्यानभ्रवृष्टिरिव वैदग्ध्यस्यायशः प्रमृष्टिरिव लक्ष्म्या यशः पुष्टिरिव चारित्रस्य हृदयतुष्टिरिव धर्मस्य सौहार्दस्य भाग्य रूपपरमाणुसृष्टिरिव प्रजापतेः शमस्यापि शान्तिरिव विनयस्यापि विनीतिरिवाभिजात्यस्याप्यभिजातिरिव संयमस्यापि संयतिरिव धैर्यस्यापि धृतिरिव विभ्रमस्यापि विभ्रान्तिरिव यशोवती नाम महादेवी प्राणानां प्रणयस्य विस्रम्भस्य धर्मस्य सुखस्य च भूमिरभूत्। यास्य वक्षसि नरकजितो लक्ष्मीरिव ललास

ऊष्मा गर्व औष्ण्यं च। प्राणिनि प्राणिनि प्रतिप्राणि सर्वजन्तुविषये। ग्रहणेष्वावर्जनेषु प्रतिबिम्बोत्पादनेषु च। सामुद्रं समुद्रकृतं शास्त्रं। येनान्यस्वभावो ज्ञायते। परमात्म निर्व्याप्तिः सर्वगतत्वमनुष्ठेयकार्यं। ज्ञानं चान्यत्र। अमृतं सुधा तोयं च। वेतसमयीवेति नम्रत्वात्। प्रायश्चित्तशुद्धिरिति स्त्रीत्वं तयोज्ज्वलितं पवित्रितं वेत्यर्थः। व्युत्थानं समाधेश्चालनं। आयतिः प्रतापः। अनभ्रवृष्टिरिवेति। यथा ह्यनभ्रवृष्टिराश्चर्यहेतुः। तथा वैदग्ध्यं तस्यामाश्चर्यं। शमस्यापीति हि। शमेकश्चाशान्ता भवति। शमं सम्प्राप्य लब्धात्मलाभोजायत इत्येवमुत्तरत्रापि व्याख्याक्रमः। आभिजात्यस्य कुलोचितत्वस्य। नरको नामासुरो यातनास्थानानि च नरकाः।

---

१. A. B. T. omit this down to अमृतमयीव. २. दिष्टि° A. B. ३. वरप्राप्तिरिव कान्तेः K. K2. Jambu ed. ४. °शुद्धिरिव A. B. T. ५. सौभागस्य परमाणु° K. K2. Jambu ed. ६. नाम्ना A. B. T. ७. मुखस्य A. B. ८. नरकरिपोर्लक्ष्मीरिव A. B. T. ९. शमस्तु प्राप्य C2.

निसर्गत एव च सनृपतिरादित्यभक्तो बभूव। प्रतिदिनमुदये दिनकृतः स्नातः सितदुकूलधारी धवलकर्पटप्रावृतशिराः प्राङ्मुखः क्षितौ जानुभ्यां स्थित्वा कुङ्कुमपङ्कानुलिप्ते मण्डलके पवित्रपद्मरागपात्रीनिहितेन स्वहृदयेनेव सूर्यानुरक्तेन रक्तकमलषण्डेनार्घं ददौ। अजपच्च जप्यं सुचरितः प्रत्युषसि मध्यन्दिने दिनान्ते चापत्यहेतोः प्राध्वं प्रयतेन मनसा जञ्जपूको मन्त्रमादित्यहृदयं भक्तजनानुरोधविधेयानि तु भवन्ति देवतानां मनांसि। यतः स राजा कदाचिद्ग्रीष्मसमये यदृच्छया सितकरकरसितसुधाधवलस्य हर्म्यस्य पृष्ठे सुष्वाप वामपार्श्वे चास्य द्वितीयशयने देवी यशोवती शिश्ये। परिणतप्रायायां तु श्यामायामासन्नप्रभातवेला विलुप्यमानलावण्ये लिलम्बिषमाणे सीदत्तेजसि तारकेश्वरे कराग्रस्पृष्टकुमुदिनीप्रमोदजन्मनि शशधरस्वेद इव गलत्यतिशीतलेवश्याय पयसि मधुमदमत्तप्रसुप्तसीमन्तिनीनिःश्वासाहतेषु सङ्क्रान्तमदेष्विव घूर्णमानेष्वन्तःपुरप्रदीपेषु राजनि च विमलनखप्रतिबिम्बिताभिः सम्वाह्यमानचरण इव तारकाभिर्विस्रब्ध प्रसारितैर्दिगङ्गनानामिवार्पितैरङ्गैर्मधुसुगन्धिभिः स्वहस्तकमलतालवृन्तवातैरिव श्वसितैर्मुखश्रिया वीज्यमाने विमलकपोलस्थलस्थितेन सितकुसुमशेखरेणेव रतिकेलिकचग्रहलम्बितेन प्रतिमाशशिबिम्बेन विराजिते स्वपति देवी यशोमती सहसैवार्यपुत्र परित्रायस्व परित्रायस्वेति भाषमाणा भूषणरवेण व्याहरन्तीव परिजनमुत्कम्पमानाङ्गय-

स्वहृदयेनेवेति। स्वहृदयमपि सूर्यानुरक्तं। प्राध्वं प्रव्हः। जञ्जपूकशब्दो जपासक्ततां लक्षयति। द्वितीयेत्यादिनास्य सदा चारनिष्ठतोक्ता। उक्तं हि। नाभीयाद्भार्यया सार्कं न च सुप्यात्तया सममिति। परिणतेत्यादावेवंस्मिन्सति देवी यशोमत्युदतिष्ठदिति सम्बन्धः। तारकेश्वरे। करा रश्मयो हस्तश्च करः। सीमन्तिनी ललना। सम्वाह्यमानानुपपद्यमानाङ्गैरितीत्थं भूतलक्षणे तृतीया। मधु मद्यं। तद्वत्। मधु मकरन्दः। तालावृन्तमुत्क्षेपकः। सितग्रहणेन चन्द्रसादृश्यमाह। एकपदे तत्क्षणम्।

१. °दुकूल° A. B. T. २. °मण्डलेनार्घं A. B. T. ३. जप्यचरितः A. B. T. ४. प्रारब्धं A. ५. हि A. B. T. ६ सितसुधारम्ये हर्म्यस्य A. B. T. सितकरकरसुधा° K. ७. च A. B. ८. दिशगङ्गनानां K. ९. °तल° A. B. T. १०. अस्मिन्नस्मिन्सति C1. C2.

प्रिहृदतिष्ठत्। अथ[1] तेन सर्वस्यामपि पृथिव्यामश्रुतपूर्वेण किमुत देवीमुखे परित्रायस्वेति ध्वनिना दग्ध इव श्रवणयोरेकपद एव निद्रां तत्याज राजा। शिरोभागाच्च कोपकम्पमानदक्षिणकराकृष्टेन कर्णोत्पलेनेव[2] निर्गच्छता-च्छधारेण धौतासिना[3] सीमन्तयन्निव निशामन्तरालव्यवधायक[4]माकाशमि-वोत्तरीयांशुकं विक्षिपन्वामकरपल्लवेन करविक्षेपवेगगलितेन[5] हृदयेनेव भयनिमित्तान्वेषिणा[6] भ्रमता दिक्षु कनकवलयेन[7] विराजमानः सत्वराव-तारितवामचरणाक्रान्तिकम्पितप्रासादः[8] पुरः पतितेनासिधारागोचरगतेन शशिमयूखखण्डेनेव खण्डितेन हारेण राजमानो लक्ष्मीचुम्बनलग्नताम्बूल-रसरञ्जिताभ्यामिव निद्रया कोपेन चातिलोहिताभ्यां लोचनाभ्यां पाटलय[9]-न्पर्यन्तानाशानामाबद्धान्धकारया[10]त्रिपताकया भ्रुकुट्या[11] पुनरिव त्रियामां परिवर्तयन्[12] देवि न भेतव्यं न भेतव्यमित्यभिदधानो वेगेनोत्पपात। सर्वासु च दिक्षु विक्षिप्तचक्षुर्यदा नाद्राक्षीत्किञ्चिदपि तदा पप्रच्छ तां भय-कारणं। अथ गृहदेवतास्विव प्रधावितासु यामिकिनीषु प्रबुद्धे च समी-पशायिनि परिजने शान्ते च हृदयोत्कम्पकारिणि साध्वसे सासमभाष-त। आर्यपुत्र जानासि स्वप्ने भगवतः सवितुर्मण्डलान्निर्गत्य द्वौ कुमारकौ तेजोमयौ बालातपेनेवापूरयन्तौ दिग्भागान्वैद्युतमिव जीवलोकं कुर्वा-णौ मुकुटिनौ कुण्डलिनावङ्गदिनौ कवचिनौ गृहीतशस्त्राविन्द्रगोपकरुचा[13] रुधिरेण धाम्ना स्नातावुन्मुखेनोत्तमाङ्गघटमानाञ्जलिना जगता निखिलेन प्रणम्यमानौ कन्ययैकया च चन्द्रमूर्त्येव सुषुम्ण[14]रश्मिनिर्गतयानुगम्यमानौ क्षितितलमवतीर्णौ तौ च मे विलपन्त्याः शस्त्रेणोदरं विदार्य प्रवेष्टुमार-

शिरोभागाच्चेत्यादौ राजा वेगेनोत्पपातेति सम्बन्धः। सीमन्तयन् द्विधाकुर्वन्। त्रिपताकया त्रिरेखया। यामकिनीषु जागरिकासु। मुकुटिनौ मौलियुक्तौ। अ-ङ्गदिनौ सकेयूरौ। इन्द्रगोपकः[15] खद्योतः। सुषुम्णाख्यो मृतमयो रविरश्मिः।

१. अथ तेन पृथिव्यामपि सर्वस्यामश्रुत° A. B. T. २. कर्णोत्पलादिव निर्ग-च्छताधारेण A. B. T. ३. आधौता° A. B. ४. °विधायकं A. B. T. ५. °वेगगतेन A. B. ६. अन्वेषणाय A. B. T. ७. रत्नवलयेन A. B. T. ८. °प्रासादपुरः° A. B. ९. पाटलपयन् K. १०. दिग्विभागान्बस्पा° A. B. T. ११. भ्रकुट्या A. B. T. १२. प्रवर्तयन् A. B. १३. °इन्द्रचापकरुचा K. १४. सुषुम्णा° A. B. T. १५. वर्षर्तुभवो रक्तवर्णः कीटविशेषः marginal gloss in C1.

धौ । प्रतिबुद्धास्मि चार्यपुत्रं विक्रोशयन्ती[1] वेपमानहृदयेति । एतस्मिन्नेव च कालक्रमे[2] राजलक्ष्म्याः प्रथमालापः प्रथयन्निव स्वप्नफलमुपनो[3]रणं रराण प्रभातशङ्खः । भाविनीं भूतिमिवाभिदधाना[4] दध्वनुरमन्दं दुन्दुभयः । चैकाण[5] कोणाभिहतानन्दादिव प्रत्यूषनान्दी जय जयेति प्रबोधमङ्गलपरिपाठकानामुच्चैर्वाचो[6]ऽश्रूयन्त । पुरश्च वल्लभतुरङ्गमन्दुरामन्दिरे[7] मन्दमन्दं सुप्तोत्थितः सप्तीनां कृतमधुरहेषारवाणां पुरः श्च्योतत्तुषारसलि[8]लशीकरं किरन्मरकतहरितं यवसं[9] वक्त्रापरवक्त्रं पपाठ ।

निधिस्तरुविकारेण सन्मणिः स्फुरता धाम्ना ।
शुभागमो निमित्तेन स्पष्टमाख्यायते लोके ॥
अरुण इव पुरःसरो रविं पवन इवातिजवो[10] जलागमं ।
शुभमशुभमथापि वा नृणां कथयति पूर्वनिदर्शनोदयः ॥

नरपतिस्तु तच्छ्रुत्वा प्रीयमाणेनान्तःकरणेन तामवादीत् । देवि मुदोवसरे विषीदसि संमृद्धास्ते[11] गुरुजनाशिषः पूर्णा नो मनोरथाः । परिगृहीतासि कुलदेवताभिः प्रसन्नस्ते भगवानंशुमाली न चिरेणैवातिगुणवदपत्यत्रयलाभेनानन्दयिष्यति भवतीमिति । अवतीर्य च यथाक्रियमाणाः क्रियाश्चकार । यशोमत्यपि तुतोष तेन पत्युर्भाषितेन[12] ततः समतिक्रान्ते कस्मिंश्चित्कालांशे देव्यां[13] च यशोमत्यां देवो राज्यवर्धनः प्रथममेव[14] सम्बभूव गर्भे । गर्भस्थितस्यैव च यस्य वैशसेव[15] पाण्डुतामादत्त जननी गुणगौरवक्रान्तेव[16] गात्रमुद्वोढुं न शशाक । कान्तिविसरामृतरसतृप्तेवाहारं[17] प्रति पराङ्मुखीबभूव । शनैः शनैरुपची-

कोणो वादनभाण्डं । नान्दी भेरी । वल्लभेत्यादिना । पुरुषस्य नैकट्यमाह । सप्तयोश्वाः । यवसं घासं । नान्द्याः प्रायोम्बुधेर्वक्त्रमिति वक्त्रलक्षणमपरवक्त्रं प्रसिद्धं । तरुविकारेणेति । यत्राधोनिधिस्तत्र परिणाहोद्गताधोमुखशाखामूलादिभाजो वृक्षा भवन्ति । निदर्शनं निमित्तं । समृद्धाः परिपूर्णाः । परिगृहीता अङ्गीकृताः ।

---

१. क्रोशन्ती A. B. T. २. क्षणे A. B. T. ३. स्वफलमुप° A. B. T. ४. आदधाना A. B. ५. चक्काण A. B. ६. वाचो विचेरुः A. B. T. ७. °तुरङ्गममन्दुरा° A. B. T. ८. °श्च्योतत् A. B. T. ९. यवयवसं A. B. १०. अतिजडः A. B. T. ११. सम्पन्नास्ते A. B. T. १२. भर्तुः A. B. T. १३. देव्या यशोमत्याः A. B. T. १४. प्रथमे A. B. १५ यशसेवापाण्डुताम-धत्त A. B. T. १६. गौरवाक्रान्तेव A. B. १७. अमृतरसतृप्तेव चाहारं A. B. T.

यमानगर्भभरालसा च गुरुभिर्वासितानि वन्दनाय कथमपि सखीभिर्हस्तावलम्बेनानीयत । विश्राम्यन्ती शालभञ्जिकेव समीपगतस्तम्भभित्तिष्वलक्ष्यत कमललोभनिलीनैरलिभिरिव नूपुरैरनुबद्धौ नाशकच्चरणौ । मृणाललोभेन च चरणानुगमप्रवृत्तैर्भवनहंसैरिव मन्थरगमना मन्दमन्दं बभ्राम । मणिभित्तिपातिनीषु निजप्रतिमास्वपि हस्तावलम्बनलोभेन प्रसारयामास करकमलं । किमुत सखीषु माणिक्यस्तम्भदीधितीष्वप्यालम्बितुमाचकाङ्क्ष किं पुनर्भवनलताः । सञ्चारेष्वप्यसमर्थामोदगुरुकार्याणि कैव कथा कर्तुम् । आस्तां नूपुरभारखेदितं चरणयुगलं मनसापि नोदसहत सौधमारोढुं । अङ्गान्यपि नाशक्नोद्धारयितुं दूरे भूषणानि चिन्तयित्वापि क्रीडापर्वताधिरोहणमुत्कम्पितस्तनी तस्तान । प्रत्युत्थानेषूभयजानुशिखरविनिहितकरकिसलयापि गर्वादिव गर्भेणाधार्यत । दिवसं चाधोमुखी स्तनपृष्ठसङ्क्रान्तेनापत्यदर्शनौत्सुक्यादन्तः प्रविष्टेनौत्सुक्यादन्तः प्रविष्टेनेव मुखकमलेनैवं प्रीयमाणाददर्श गर्भं । उदरे तनये न हृदये च भर्त्रानिष्ठिता द्विगुणितामिव लक्ष्मीमुवाह । सख्युत्सङ्गमुक्तशरीरा च शरीरपरिचारिकाणामङ्केषु सपत्नीनां तु शिरःसु पादौ चकार । अवतीर्णे च दशमे मासि सर्वोर्वीभृत्पक्षपाताय वज्रपरमाणुभिरिव निर्मितं त्रिभुवनभारधारणसमर्थं शेषफणमण्डलोपकरणैरिव कल्पितं सकलभूभृत्कम्पकारिणं दिग्गजावयवैरिव विहितमयमसूत देवं राज्यवर्धनम् । यस्मिंश्च जाते जातप्रमोदानृत्यमय्य इवाजायन्त प्रजाः । पुरिनासङ्ख्यशङ्खशब्दमुखरं प्रहतपटहशतपटुरवं गम्भीरभेरीनिनादनिर्भरभरितभुवनं प्रमोदोन्मत्तमर्त्यलोकमनोहरं मासमेकं दिवसमि-

उर्वीभृतो राजानः पर्वता राजानः पर्वताश्च । पक्षाः समूहाः पतत्राणि च । पातः पतनं शातनं च ।

---

१. °गतस्तम्भेषु तु स्तम्भे कमल°. A. B. २. धृतौ A. B. ३. मन्दं मन्दं A. B. T. ४. समादिष्टु A. B. ५. °कमलेन A. B. °कमलं K. ६. मनसि A. B. ७. भर्त्राधिष्ठिता A. B. ८. शिरस्सुभौ पादौ A. B. ९. °वहन° A. B. T. १०. °भूकम्प° A. B. ११. विहितं सस्तुत K. १२. देवी A. B. T. १३. अनृत्यमज्जयः B. अमृत° K2, Jambu ed. १४. A. B. T. omit शब्द. १५. मासमेकमेकदिवसमिव A. B.

व महोत्सवमकरोन्नरपतिः । अथान्य[1]स्मिन्नतिक्रान्ते कस्मिंश्चित्काले कन्दलिनि कुड्मलितकदम्बनरौ रूढतोक्मतृणस्तम्भे[2]स्तम्भिततामरसे विकै[3]सितचातकचेतसि मूकमानसौकसि नभसि मा[4]सि देव्या देवक्या इव चक्रपाणिर्य[5]शोमत्या हृदये गर्भे च सममेव सम्बभूव हर्षः शनैः शनैश्चास्याः सर्वप्रजापुण्यैरिव परिगृहीता भू[6]योप्यापाण्डुतामङ्गयष्टिर्जगाम । गर्भारम्भेण श्यामायमानचारुचूचुकचूलिकौ चक्रवर्तिनः पातुं मुद्रिताविव जन्तुना पयोधरकलशौ बभारोरस्थलेन स्तन्यार्थमानने निहिता दुग्धनदीव दीर्घस्निग्धधवला माधुर्यमधत्त दृष्टिः । सकलमङ्गलगणाधिष्ठितगात्रयष्टिगरिम्णेव गतिरमन्दायत मन्दं मन्दं सञ्चरन्त्या निर्मलमणिकुट्टिमनिमग्नप्रतिबिम्बनिभेन गृहीतपादपल्लवापूर्वसेवामिवारेभ पृ[9]थ्वी दिवसमधिशयानायाः शयनीयमपाश्रयपत्रभङ्गपुत्रिका प्रतिमा विमलकपोलोदरगता प्रसवसमयं प्रतिपालयन्ती लक्ष्मीरिवालक्ष्यत । क्षपासु सौधशिखराग्रगताया गर्भोन्माथमुक्तांशुके स्तनमण्डले सङ्क्रान्तमुडुपतिमण्डलमुपरिगर्भस्य श्वेतातपत्रमिव केनापि धार्यमाणमदृश्यत । सुप्ताया वा[10]सभवेन चित्र[11]भित्तिचामरग्राहिण्योपि चामराणि चालयाञ्चक्रुः । स्वप्नेषु करविधृतकमलिनीपलाशपुटसलिलैश्चतुर्भिरपि दिक्करिभिरक्रियताभिषेकः प्रतिबुद्ध्यमानायाश्चन्द्रशालिकासा[12]लभञ्जिकापरिजनोपि जयशब्दमसकृदजनयत् । [13]परिजनाङ्गानेष्वादिशत्यशरी-

कन्दलानि लताभेदाः । नीरं तोयं । मानसौकसो हंसाः । नभसि श्रावणे । य[14]शोमत्या देव्याः । चक्रपाणिः कृष्णः रेखाकारं च चक्रं पाणौ यस्य । देवक्या अपि यशोम[15]त्याः । प्रमोदो हर्षः । पुण्यैरिवेति पुण्यानां स्वभावशुद्धित्वात् । स्तनयोर्भवं स्तन्यं क्षीरं । अपाश्रयः पर्यङ्कः । उन्माथः खेदः । चन्द्रशाला धवलगृहस्योपरि प्रासादिकायामन्तर्धारणीत्युच्यते ।

१. अपरस्मिन् A. B. २. अस्तमित° A. B. ३. विततशतचातक° A. B. K2. ४. मासे A. B. ५. यशोवत्याः K2. Jambû ed. ६. भूयोपि पाण्डुतामङ्गयष्टिराजगाम A. B. T. ७. K. K1. K2. Jambû ed omit जन्तुना. ८. K. K2. Jambû ed. omit उरस्थलेन. ९. पृथिव्यस्या दिवसमयम° K. K1. पृथिव्यस्याः शयनीयम° Jambû ed. १०. यासभवने K. ११. चित्रच्चिति° K2. Jambû ed. १२. °शाल° A. B. १३. परिजनाह्वानेष्वाज्ञापयेस्य° A. B. १४. यशोमस्या अपि देव्याः C2. १५. यशोवत्याः C1. Jambû ed.

राजाचो निश्चेरुः । क्रीडायामपि[१] नासहताज्ञाभङ्गं । अपि च चतुर्णामपि महार्णवानामेकीकृतेनाम्भसा स्नातुं वाञ्छाबभूव । वेलावनलतागृहोदरपुलिनपरिसरेषु पर्यटितुं हृदयमभिललाष । आत्ययिकेष्वपि कार्येषु सविभ्रमं भ्रूलता चचाल । सन्निहितेष्वपि मणिदर्पणेषु मुखमुत्खाते[२] खड्गपट्टे वीक्षितुं व्यसनमासीत् । उत्सारितवीणाः स्त्रीजनविरुद्धा धनुर्ध्वनयः श्रुतावसुखायन्त । पञ्जरकेसरिषु चक्षुररमत । गुरुप्रणामेष्वपि स्तम्भितमिव शिरः कथमपि ननाम । सख्यश्चास्याः प्रमोदविस्फारितै[३]र्लोचनपुटैरासन्नप्रसवमहोत्सवधियेव धवलयन्त्यो भवनं विकचकुमुदकमलकुवलयपलाशवृष्टिमयं रक्षावलिविधिमिवानवरतं विदधाना दिक्षु क्षणमपि न मुमुचुः पार्श्वमात्मोचितस्थाननिषण्णाश्च महान्तो विविधौषधिधरा भिषजो भूधरा[४] इव भुवो धृतिं प्रचक्रुः पयोनिधीनां[५] हृदयानीव लक्ष्म्या सहागतानि ग्रीवासूत्रग्रन्थिषु प्रशस्तरत्नान्यबध्यन्त । ततश्च प्राप्ते ज्येष्ठामूलीये मासि बहुलासु[६] बहुलपक्षद्वादश्यां व्यतीते प्रदोषसमये समारुरुक्षति क्षपायौवने सहसैवान्तःपुरे समुदपादि कोलाहलः स्त्रीजनस्य । निर्गत्य च ससम्भ्रमं यशोमत्याः[७] स्वयमेव[८] हृदयनिर्विशेषा धात्र्याः सुता सुपात्रेति[९] नाम्ना राज्ञः पादयो[१०]र्निपत्य देव दिष्ट्या वर्धसे

गर्भस्थजनचित्तवृत्त्यनुसारेण गर्भिण्या अपि चित्तवृत्तिर्भवति । यतो वार्त्ता श्रूयते । ततश्चतुर्णामित्युक्तं । परिसरः पर्यन्तः । आत्ययिकेष्ववश्यकर्तव्येषु । महान्तः प्रभाविता उच्छ्रिताश्च । विविधा ओषधीर्धारयन्ति ये ते । विविधा ओषधयो या सुता धरा भूमयो येषां ते च । धृतिर्धैर्यं धारणं च । लक्ष्म्या सहेति लक्ष्मीर्हि पयोधिसुता । प्रशस्तरत्नानीति कर्मधारयोऽन्यत्र बहुव्रीहिः । ज्येष्ठामूलीयो मासो ज्यैष्ठः । बहुलासु कृत्तिकासु । बहुलपक्षः कृष्णपक्षः ।

---

१. क्रीडया विना सहराज्ञा॰ A. B. २. उत्खातखड्गपट्टे A. B. K. ३. विस्तारितैः A. B. ४. भूधरा भुव इवोद्धर्ति A. B. ५. पयोधीनां A. B. ६. कृत्तिकासु K.; omitted by A. B. ७. यशोवत्याः B. ८. स्वमेव A. ९. सुयात्रेति K. K1. १०. पादयोरुपनिपत्य A. B.

द्वितीयसुतजन्मनेति व्याहरन्ती पूर्णपात्रं जहार। [1]अस्मिन्नेव च काले राज्ञः परमसम्मतः शतशः सम्वादितातीन्द्रिया देशो दर्शितप्रभावः [2]सङ्कलितो ज्योतिषि सर्वासां ग्रहसंहितानां पारदृश्वा सकल[3]गणकमध्ये [4]महितोहितश्च त्रिकालज्ञानभाग्भोजकस्तारको नाम गणकः समुपसृत्य विज्ञापितवान्। देव श्रूयते मान्धाता किलैवं विधे व्यतीपातादि सर्वदोषाभिषङ्गरहितेहनि सर्वेषूच्चस्थानस्थितेष्वेवं ग्रहेष्वीदृशि लग्ने [5]भेजे जन्म। अर्वाक्[6]तनोस्मिन्नन्तराले पुनरेवंविधे योगे चक्रवर्त्तिजननेनाजनिजगतिकश्चिदपरः सप्तानां [7]चक्रवर्त्तिनामग्रणीश्चक्रवर्त्तिचिह्नानां महारत्नानां च भाजनं सप्तानां सागराणां पालयिता सप्ततन्तूनां सर्वेषां प्रवर्तयिता सप्तसप्तिसमः [8]सुतोयं देवस्य जात इति। अत्रान्तरे स्वयमेवानाध्माता अपि तारमधुरं शङ्खा विरेसुः। अताडितोपि क्षुभितजलनिधिजलध्वनिधीरं जुगुञ्जाभिषेकदुन्दुभिः। अनाहतान्यपि मङ्गलतूर्याणि रेणुः सर्वभुवनाभयघोषणापटह इव दिग-

पूर्णपात्रं यथा[9]परिहितवस्त्रादि। उक्तं च। आनन्ददोहिसौहार्दादेत्यवस्त्रादि कम्बलात्। अजानतो हरत्येव पूर्णपात्रं तु तत्स्मृतमिति। सम्वादितः प्रत्यक्षीकृतः। अतीन्द्रिया देशोभावि कथनं। सङ्[10]कलितः गणनाज्ञः। पारदृश्वा पर्यन्तदर्शी। भोजको रविमर्चयित्वा। पूजका हि भूयसा गणका भवन्ति। ये मगा इति प्रसिद्धाः। भागवता इत्यन्ये। व्योम्नि चन्द्रार्कौ राशिषट्के यदैकमार्गस्थितौ भवतः सव्यतीपातः। उक्तं च लाटाचार्येण। गगने हि हिमकरार्कौ युगपत्स्यातां यदैकमार्गस्थौ। भगणार्धैकश्च यदा शशी स भवेद्व्यतीपात इति। अभिषङ्गः सम्बन्धः। अर्वाक्पश्चाच्चक्रवर्त्तिनामिति। भरतार्जुनमान्धातृभगीरथयुधिष्ठिराः सगरो नहुषश्चैव सप्तैते चक्रवर्त्तिनः। कूर्मोर्णाजालहस्तित्वं पद्मादि जालचरणत्वमित्यादि चक्रवर्त्तिचिह्नानि। मण्यश्व[11]करिचक्राणि वरा स्त्रीपरिनायकः षडेतानि तु रत्नानि कीर्त्तितानि मनीषिभिः। परिनायकः सेनापतिः। गृहनायको गञ्जाध्यक्षः। सप्ततन्तूनां यज्ञानां। सप्तसप्तिः सूर्यः। अनाध्माता मुखानिलेनापूरिताः। दुन्दुभिरानकः।

---

१. तस्मिन्नेव व्यतिकरे A. B. २. सङ्कलिती A. B. K. ३. गणकगणमध्ये A. B. ४. सहितः K2. Jambû ed. ५. लेभे A. B. K2. ६. °तलोस्मिन्न A. ७. चक्रवर्त्तिनामग्रणीः सप्तानां चक्रवर्त्तिचिह्नानां A. B. ८ स्वतोयं K. ९. परिहृत° Jambû ed. °वस्त्राणि C2. १०. सङ्कलिती. C1. C2. ११. °कीर° Jambû ed.

न्तरेषु बभ्राम तूर्यप्रतिशब्दः । विधुत[1]केसरसटाश्च साटोपं गृहीतहरित-दूर्वापल्लवकवलप्रशस्तैर्मुखपुटैः[2] समहेषन्त हृष्टा[3] वाजिनः सलीलमुत्क्षिप्तैर्हस्तपल्लवैर्नृत्यन्त इव श्रवणसुभगं जगर्जुर्गजा ववौ[4] चाचिरात्क्रायुधमुत्सृजन्त्या लक्ष्म्या[5] निःश्वास इव सुरामोदसुरभिर्दिव्यानिलः । यज्वनां मन्दिरेषु प्रदक्षिणशिखाकलापकथितकल्याणागमाः प्रजज्वलुरनिन्धना वैतानवह्नयः । भुवस्तला[6]त्तपनीयशृङ्खलाबन्धबन्धुरकलशीकोशाः समुदगु[7]र्महानिधयः प्रहतमङ्गलतूर्यप्रतिशब्दनिभेन दिक्षु दिक्पालैरपि प्रमोदादक्रियतेव दिष्टि[8]वृद्धिकलकलः । तत्क्षण एव च शुक्लवाससो ब्रह्ममुखाः कृतयुगप्रजापतय इव प्रजावृद्धये समुपतस्थिरे द्विजातयः । साक्षाद्धर्म इव शान्त्युदकफलहस्तस्तस्थौ[9] पुरः पुरोधाः । पुरातन्यः स्थितय इवादृश्यन्तागता बान्धववृद्धाः प्रलम्बश्मश्रुजालजटिलाननानि बहलमलपङ्ककलङ्क[10]कालकायानि नश्यतः[11] कलिकालस्य बान्धवकुलानीवाकुलान्यधावन्त मुक्तानि बन्धन[12]वृन्दानि । तत्कालापक्रान्तस्याधर्मस्य शिबिरश्रेणय इवालक्ष्यन्त लोकविलुण्ठिता विपणिवीथ्यः। विलसदुन्मुखवामनकबधिरवृन्दवेष्टिताः साक्षाज्जातमातृदेवता[13] इव बहुबालकव्याकुलाननृतुर्वृद्धधात्र्यः । प्रावर्तत च विगतराजकुलस्थितिरधःकृतप्रतीहाराकृतिरपनीत[14]वेत्रिवेत्रोः निर्दोषान्तःपुरप्रवेशः समस्वामिपरिजनो निर्विशेषबालवृद्धः समानशिष्टाशिष्टजनो

तूर्याणि वादित्राणि । घोषणा श्रावणा । ग्रीवारोमवल्लयस्त एव सटाः । कवलं ग्रासः । यज्वनां यज्ञयाजिनां । वितानं यज्ञे भवा वैतानाः । तपनीयं सुवर्णम् । बन्धुरो हृद्यः । कोश आवरणम् । ब्रह्ममुखा वेदवदना अपि । पुरोधाः पुरोहितः । विपणिवीथ्यो वणिक्पथपङ्क्तयः । जातमातृदेवता[15] मार्जारानना । बहुपुत्रपरिवारा सूतिकागृहे स्थाप्यते । अवरोधोऽन्तःपुरं ।

१. विधूत° B. २. मुखपटैः सममहेषन्त A. B. ३. K. Jambû ed. omit हृष्टाः ४. ववौ च्चिरात् A. B. ५. श्रियः A. B. ६. भुवस्तलारूपनीय° A. B. ७. समुद्गमन् A. B. समुदस्तन् K. ८. दिष्टि° A. B. ९. °हस्तः प्रादुरभवत्पुरोधाः A. B. १०. A. B. omit कलङ्क° ११. A. B. read प्रथमप्रनष्टस्य १२. बन्धनानि A. B. १३. मात्रदेव्य इव A. B. १४. °प्रतीहारायतिरपनीत° A. B. १५. जातमात्रदेवता मार्जनानना C?.

र्दुर्ज्ञेयमत्तामत्तप्रविभागस्तुल्यकुलयुवतिवेश्यालापविलासः प्रनृत्तसकलकटकलोकः पुत्रजन्मोत्सवो महान् । अपरेद्युरारभ्य सर्वाभ्यो दिग्भ्यः स्त्रीराज्यानीवावर्जितान्यसुरविवराणीवापावृतानि नारायणावरोधानीव प्रचलितान्यप्सरसामिव महीमवतीर्णानि कुलानि परिजनेन पृथुकरण्डपरिगृहीताः स्नानीयचूर्णावकीर्णकुसुमाः सुमनः स्रजः स्फटिकशिलाशकलशुक्लकर्पूरखण्डपूरिताः पात्रीः कुङ्कुमाधिवासभाञ्जि भाजनानि च मणिमयानि सहकारतैलतिम्यत्तनुखदिरकेसरजालजटिलानि चन्दनधवलपूगफलफालीदन्तुरदन्तशफरुकाणि गुञ्जन्मधुकरकुलपीयमानपारिजातपरिमलानि पाटलकानि च सिन्दूरपात्राणि च पिष्टातकपात्राणि च बाललतालम्बमानविटकवीटकांश्च ताम्बूलवृक्षकान्बिभ्राणेनानुगम्यमानानि चरणानि कुट्टनरणितमणिनूपुररवमुखरितदिङ्मुखानि नृत्यन्ति राजकुलमागच्छन्ति समन्तात्सामन्तान्तःपुरसहस्राण्यदृश्यन्त । शनैः शनैर्व्यजृम्भत च क्वचिन्नृत्तानुचितचिरन्तनशालीनकुलपुत्रकलोकलास्यप्रथितपार्थिवानुरागः क्वचिदन्तः स्मितक्षितिपालापेक्षितक्षीबक्षुद्रदासीसमाकृष्यमाणराजवल्लभः । क्वचिन्मत्तकटककुट्टनीकण्ठलग्नवृद्धार्यसामन्तनृत्तनिर्भरहसितनरपतिः क्वचित्क्षितिपाक्षिसंज्ञादिष्टदुष्टदासेरकगीतसूच्यमानसचिवचौर्यरतप्रपञ्चः । क्वचिन्मदोत्कटकुटहारिका-

अपरेद्युरित्यादाविदमिदं विभ्राणेन परिजनेनानुगम्यमानानि सामन्तान्तःपुरसहस्राण्यदृश्यन्तेति सम्बन्धः । स्त्रीराज्यानीति बहुलत्वं । असुरविवराणीवेत्युज्ज्वलत्वात् । नारायणेत्यादिगौरत्ववत्त्वाद्बहुलत्वाच्च । स्नानीयं स्नानहितं । खदिरकेसरं खदिरसारं । फाली खाता । शफरुकाणि समुद्गाः । पारिजातं सुगन्धि द्रव्यचूर्णं । पिष्टातः पटवासक इत्यमरसिंहः । स च मङ्गलार्थः । विटकवीटकं पञ्चाशत्ताम्बूलपत्रैः क्रियते । शनैः शनैरित्यादौ व्यजृम्भतोत्सवामोद इति सम्बन्धः । शालीनमधृष्टता । दास्या अपत्यं दासेरकः । क्षुद्राभ्योवेत्यारक् । सचिवो मन्त्री । रतं सुरतं । कुटहारिका कुम्भदासी ।

---

१. दुर्ज्ञान° A. B. T. २. प्रनृत्तः सकलकटकजनः A. B. ३. °चूर्णावकीर्णः सुमनसः स्फटिक°. A. B. T. ४. कुङ्कुमवास° A. B. ५. °शफरूकाणि A. B. T. ६. पटलकानि A. B. पाटलानि पाटलकानि च K2. Jambû ed. ७. °विकट° A. B. ८. चरणकुट्टन°–दिङ्मुखं A. B. ९. °क्षितिपालोपेक्षित° A. B. १०. संज्ञानिर्दिष्ट° A. B. T.

परिव्रिज्यमानजरत्प्रव्रजितजनितजनहासः । क्वचिदन्योन्यनिर्भरस्पर्धा-दुरविटचेटकारब्धावाच्यवचनयुद्धः । क्वचिन्नृपावलाबलात्कारकृष्ट-नर्त्यमाननृत्तानभिज्ञान्तःपुरपालभावितभुजिष्यः सपवन इव कुसुमराशि-भिः सधारागृह इव सीधुप्रपाभिः सनन्दनवन इव पारिजातकामोदैः स-नीहार इव कर्पूररेणुभिः साट्टहास इव पटहरवैः सामृतमथन इव महा-कलकलैः सावर्त्त इव रासकमण्डलैः सरोमाञ्च इव भूषणमणिकिरणैः सप-ङ्कबन्ध इव चन्दनललाटिकाभिः सप्रसव इव प्रतिशब्दकैः सप्ररोह इव प्र-सादप्रदानैरुत्सवामोदः स्कन्धावलम्बमानकेसरमालाः काम्बोजवाजिन इवा-स्कन्दन्तस्तरलतारका हरिणा इवोड्डीयमानाः सगरसुता इव खनित्रैर्निर्द-यैश्चरणाभिघातैर्दारयन्तो भुवमनेकसहस्रसङ्ख्याश्चिक्रीडुर्युवानः कथमपि तालावचरचारणचरणक्षोभं चक्षमे क्षमा क्षितिपालकुमारकाणां च खेल-तामन्योन्यास्फालनगलद्भूषणेषु मुक्ताफलानि फेलुः । सिन्दूररेणुना पुनरुत्पन्न-हिरण्यगर्भगर्भशोणितशोणाशमिव ब्रह्माण्डकपालमभवत् । पटवासपांसुप-टलेन प्रकटितमन्दाकिनीसैकतसहस्रमिव शुशुभे नभस्तलं । विप्रकीर्य-माणपिष्टातकपरागपिञ्जरितातपा भुवनक्षोभविशीर्णपितामहकमलकिञ्ज-ल्करजोराजिरञ्जिता इव रेजुर्दिवसाः । सङ्घट्टविघटितहारपतितमुक्ता-

गायकनर्तकभुजिष्याजनरचितः समूहश्चेटकः । अवाच्यवचनानि गाल्यः । भाविताः कथं नृत्यन्तीत्यवलोकिताः । भुजिष्या दास्यः । रासकमण्डलैश्चक्रभ्र-भ्रान्तनृत्तवृन्दैः । ललाटेलङ्कारा ललाटिका । कर्णललाटात्कनलङ्कारे । प्ररोहोङ्कुरः । केसराणि बकुलानि ग्रीवा रोमवलयश्च । काम्बोजा बाह्लिकदेशजाः । आस्कन्दन्त आक्रमन्तः । तालैरवचरन्ति तालावचराः । तालावचरणमुक्तं भ्रमणं स्फुटितालिकाशतैर्युक्तं । चारणजनस्य कैश्चिद्भ्रमणं तत्कांस्यतालिकया । राढा-शिष्टापञ्चकुलमारविकादक्षिणापथे तालावा इति प्रसिद्धाः । खेलतां क्रीडतां । फेलुर्विभिदुः । शोणाश्मं लोहितदिक्कं स्थानस्थानेष्वित्याद्येवंविधेनातोद्येनानुग-म्यमानाः पण्यविलासिन्यः प्रानृत्यन्निति सम्बन्धः । आलिङ्ग्यको मुरजभेदः ।

---

१. A. B. omit निर्भर. २. °पेटका° A. °पीटका° K. ३. °युद्धं A. B. T. ४. तालावसर° A. B. T. ५. °शोणाभमिव A. B. T. ६. °क्षोभशीर्णाक्षपिता-महाकमल° A. ७. पेटकः C1. C2. ८. स्फुटतालिका° C1. C2. ९. तद्भ्रस्य तालिकयाधाढाशिष्टापञ्चकुलमाविर्धकादक्षिणा C2.

फलपटलेषु च स्फालिलोकः[1] स्थानस्थानेषु च मन्दमन्दमास्फाल्यमानलिङ्ककेन शिञ्जानमञ्जुवेणुना झणझणायमानझल्लरीकेण ताडयमानतन्त्रीपटहिकेन वाद्यमानानुत्तालालाबुवीणेन[2][3] कलकांस्यकोशीकणितकाहलेन समकालदीयमानानुत्तालतालिकेनातोद्यवाद्येनानुगम्यमानः[4] पदे पदे झणझणितभूषणरवैरपि सहृदयैरिवानुवर्त्यमानतालल्लयाः कोकिला इव मदकलकाकलीकोमलालापिन्यो विटानां कर्णामृतान्यश्लीलरासकपदानि[5] गायन्त्यः समुण्डमालिकाः सकर्णपल्लवाः सचन्दनतिलकाः समुच्छ्रिताभिर्वलयावलीवाचालाभिर्बाहुलतिकाभिः सवितारमिवालिङ्गयन्त्यः[6] कुङ्कुमप्रमृष्टिरुचिरकायाः काश्मीरकिशोर्य इव वल्गन्त्यो[7] नितम्बबिम्बलम्बिविकटकुरण्टकशेखराः[8] प्रदीप्ता इव रागाग्निना सिन्दूरच्छटाछुरितमुखमुद्राः शासनपट्टपङ्क्तय[9] इवाप्रतिहतशासनस्य कन्दर्पस्य मुष्टिप्रकीर्यमाणा कर्पूरपटवासपांसुला मनोरथसञ्चरणरथ्या इव यौवनस्योद्दामकुसुमदामताडित-[10]

तन्त्री पटहिका पटहभेदः । न उत्ताला अनुत्ताला अनुद्भटशब्दाः । कांस्यकोशी शय्याकाहलेन व्याप्तेन काहलं कांस्यद्वयाभिघातः । आतोद्यमिति । उक्तं च । ततं वीणादिकं वाद्यमानद्धं मुरजादिकं । वंशादिकं तु सुषिरं कांस्यतालादिकं घनं । चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकमिति । लयशब्देन[11] ताल एव माननिधानं यतीनामवच्छेदेन विधिं निर्वर्त्यमानोद्रुतमध्यविलम्बिताख्यमानवर्त्तनविधौ[12] स एव तालस्तु यावत्यवच्छेदमलङ्घ्यमानः स्याद्व्यपदेशो लय इति ख्यात इति । मदेन कलो हृष्टः । काकली कलसूक्ष्ममधुरगीतध्वनिः । अश्लीलानि ग्राम्याणि । कुङ्कुमेन परिमृष्टिः परिमार्जनमुद्वर्त्तनादि । अन्यत्र कुङ्कुमप्रमृष्टिः कुङ्कुमस्थलीषु लोठनात् । कुरण्टका आम्लातकानि । तेषां रक्तत्वमाह । प्रदीप्ता इति । मुखमुद्रावक्रटङ्कः शासनपट्टानां मुखेऽग्रे या मुद्रा दीयन्ते । ता अपि ससिन्दूराः । मनोरथेत्यादि रथाश्च रथ्यासु सञ्चरन्ति ता अपि तद्वशात्पांसुला भवन्ति । उद्दामेति ।

१. स्खाल° A. B. २. वाद्यमानामुत्तालालापेषु वीणकेन A. B. ३. °वेणीव. K. ४. °तालिकेनातोद्येनानुगम्यमानाः A. B. ५. अश्लेषरासक° K2. Jambû ed. ६. स्वामिनोपि स्वामिनं सवितारमिवाह्वयन्त्यः A. B. T. ७. वलान्त्यः A. B. T. ८. °कुरुण्ट° A. B. K. ९. °पट्टि° A. B. १० यौवनस्य ललितपदहंसकलकलरव° A. B. T. ११. लयं शब्देन C1. १२. निर्वर्त्तयमानो° C1.

तरुणजनाः प्रतीहार्य इव तरुणमहोत्सवस्य प्रचलत्पत्रकुण्डला ल-लन्त्यो लता इव मदनचन्दनद्रुमस्य ललितपदहंसकरवमुखराः समुल्लसन्त्योवीचय इव शृङ्गाररससागरस्य वाच्यावाच्यविवेकशून्या बालक्रीडा इव सौभाग्यस्य घनपटहरवोत्कण्टकितगात्रयष्टयः केत-क्य इव कुसुमधूलिमुद्गिरन्त्यः कमलिन्य इव दिवसमुत्फुल्लाननाः कु-मुदिन्य इव रात्रावनुपजातनिद्रा आविष्टा इव नरेन्द्रवृन्दपरिवृताः प्रीतय इव हृदयमपहरन्त्यो गीतय इव रागमुद्दीपयन्त्यः पुष्टय इवान-न्दमुत्पादयन्त्यो मदमपि मदयन्त्य इव रागमपि रञ्जयन्त्य इवानन्दमप्या-नन्दयन्त्य इव नृत्यमपि नर्त्तयमाना इवोत्सवमप्युत्सवयन्त्यो इव कटाक्षेक्षितेषु पिबन्त्य इवापाङ्गशुक्तिभिस्तर्जनेषु सम्यगयन्त्य इव न-खमयूखपाशैः कोपाभिनयेषु ताडयन्त्य इव भ्रूलताविभागैः प्रणयसम्भा-षणेषु वर्षन्त्य इव सर्वरसांश्चतुरचङ्क्रमणेषु विकिरन्त्य इव विकारानप-ण्यविलासिन्यः प्रानृत्यन् ॥

अन्यत्रवेत्रिवेत्रवित्रासितजनदत्तान्तराला ध्रियमाणधवलातपत्रवना वनदेवता इव कल्पतरुतलविचारिण्यः । काश्चित्स्कन्धोभयपाली-प्रतीहार्यश्च ता अप्येवंविधा भवन्ति । प्रचलन्ति नृत्तवशाद्दोलायमानानि पत्राणि विशेषकानि तथा कुण्डलानि यासां । अन्यत्र पत्राणि पल्लवाः कुण्डलानि समूहाः । ललितेषु पदेषु । हंसका नूपुराः । पदाङ्गदं तुला कोटिर्मञ्जीरो नूपुरो स्त्रियां हंसकाः पादकटका इति । यद्वा ललितानि पदानि यासां ताश्च ता हंसकरवमुखराश्च ता ललितपदाश्च ते हंसा एव हंसकाश्चेति वा । बालक्रीडाश्च विवेकशून्याः । घनो निरन्तरं मेघश्च । केतक्योपि सकेतकरजस्काः। निद्रा स्वा-पः सङ्कोचश्च । आविष्टा भूतादिगृहीताः । नरेन्द्रो राजा मन्त्री च । रागोभिष्वङ्गो हिङ्गुलकादिश्च । मदमपि मदयन्त्य इवेत्यादि । मदेन हि सर्वो मत्तो भवति । मदस्तुना आश्रित्यमत्त एवमुत्तरत्र । अन्यत्रेत्यादौ राजमहिष्यो विलेसु रिति सम्बन्धः । ध्रियमाणधवलातपत्रवना इत्यादौ वाक्यार्थोपमा विचार्या ।

---

१. धूलीमु° A. B. २. इवोन्मादमानयन्त्यः A. B. T. K2. ३. नृत्तमपि नर्तय-न्त्य इव A. B. ४. उत्सुकयन्त्यः K. K2. Jambû ed. ५. कटाक्षक्षितेषु A. कटाक्षितेषु K. Jambû ed. ६. भ्रूलताभिभागैः K. भ्रूलतातिभागैः K2. Jambû ed. ७. सर्वरसान्विकरन्त्य इव चतुरचङ्क्रमणेषु विकरान् A. B. T. ८. °दत्ता-न्तरा ध्रियमाण° A. B. ९. प्रवलयन्ति B. १०. निरन्तरः C1. C2.

लम्बमानलम्बोत्तरीयलग्नहस्ता लीलादोलाधिरूढा इव प्रेङ्खन्त्यः । काश्चित्कनककेयूरकोटिविपाट्यमानपटांशुकोत्तरङ्गास्तरङ्गिण्य इव तरच्चक्रवाकसीमन्त्यमानस्रोतसः । काश्चिद्दुधूयमानधवलचामरसटा लग्नत्रिकण्टकवलितविकटकटाक्षाः सरम्य इव हंसाकृष्यमाणनीलोत्पलवनाः । काश्चिच्चलच्चरणच्युतालक्तकारुणस्वेदशीकरसिच्यमानभवनहंसाः सन्ध्यारागरज्यमानेन्दुबिम्बा इव कौमुदीरजन्यः । काश्चित्कण्ठनिहितकाञ्चनकाञ्चीगुणाञ्चितकञ्चुकिविकारकुञ्चितभुवः कामवागुरा इव प्रसारितबाहुपाशा राजमहिष्यः प्रारब्धनृत्ता विरेजुः सर्वतश्च नृत्यतः स्त्रैणस्य गलद्भिः पदालक्तकैररुणिना रागमयीव शुशोण क्षोणीसमुल्लसद्भिः स्तनमण्डलैर्मङ्गलकलशमय इव बभूव महोत्सवः । भुजलताविक्षेपैर्मृणालवलयमय इव रराज जीवलोकः । समुल्लसद्भिर्विलासस्मितैस्तडिन्मय इवाक्रियत कालश्चञ्चलानां चक्षुरामंशुभिः कृष्णसारमया इवासन्वासराः समुल्लसद्भिः शिरीषकुसुमस्तबककर्णपूरैः शुकपिच्छमय इव हरितच्छायोभूदातपः विस्रंसमानैर्धम्मिल्लमालपल्लवैः कज्जलमयमिवालक्ष्यतान्तरिक्षं । उत्क्षिप्तैर्हस्तकिसलयैः कमलिनीमय्य इव बभासिरे सृष्टयो माणिक्येन्द्रायुधानामर्चिषा चाषपत्रमया इव चकाशिरे रविमरीचयः ।

पाली पङ्क्तिः । कनककेयूरेणेति कनकग्रहणेन चक्रवाकसादृश्यमाह । तरङ्ग उत्तरीयं । सीमन्त्यमानानि द्विधाक्रियमाणानि । त्रिकण्टकः कण्ठाभरणभेदः । त्रिकण्टकस्तु त्र्यश्रः स्यात्त्रिभीरत्नैश्च भूषणं । कौमुदी कार्तिकज्योत्स्ना । तद्युक्ता रजन्यो रात्रयः । आकुञ्चित आकृष्टः । विलेसुश्चिक्रीडुः । स्त्रीणां समूहः स्त्रैणं । तस्य शुशोण शोणीभूत् । कालो होरादिलक्षणः कालश्च कृष्णः । कथं तडिन्मयो रक्तवर्ण इति विरोधच्छाया । माणिक्यमुत्कृष्टं रत्नं । धम्मिल्लाः संयताः केशाः । बभासिरे शोभन्त ।

---

१. °विपाट्यमानधवलचामरसटा लग्नत्रिकण्टकवलितविकरुणस्वेदशीकर° A. B. T. २. °पटांशु° K. ३. विलेसुः A. B. ४. पाद° A. B. ५. शुशुभे A. B. T. ६. भुजलतानां विक्षेपैः A. B. ७. कालश्चलतां B. कालः स्वल्पतां A. ८. °च्छायो बभूवातपः A. B. ९. अंसमान्तर्धम्मिल्लकैः B. अंसमात्रैर्धम्मिल्लकैः A. १०. हस्तकमलैः A. B. ११. दृष्टयः K2. Jambû ed. १२. धम्मिल्लं C1. C2.

रणतामाभरणगणानां प्रतिशब्दकैः किङ्किणीमय्य इव शिशिञ्जिरे दिशः[3] । जरत्योऽप्युन्मादिन्य इव रमण्यो रेणुः[4] वर्षीयांसोऽपि ग्रहगृहीता इव नापत्रेपिरे । विद्वांसोऽपि मत्ता इवात्मानं विसस्मरुः । निर्वर्त्तविषया मुनीनामपि मनांसि विपुस्फुरुः । सर्वस्वं च ददौ नरपतिः । दिशि दिशि कुबेरकोशा इवालुप्यन्त लोकेन द्रविणराशयः । एवं च वृत्ते तस्मिन्महोत्सवे शनैः शनैः पुनरप्यतिक्रामति काले देवे चोत्तमाङ्गनिहितरक्षासर्षपकणे समुन्मिषत्प्रतापाग्निस्फुलिङ्ग इव गोरोचनापिञ्जरितवपुषि समभिव्यज्यमानसहजक्षात्त्रतेजसीव हाटकबद्धविकटव्याघ्रनखपङ्क्तिमण्डितग्रीवके हृदयोद्भिद्यमानदर्पाङ्कुर इव प्रथमाव्यक्तजल्पितेन सत्यस्य शनैः शनैरङ्कुरमिव कुर्वाणे[10] मुग्धस्मितैः कुसुमैरिव मधुकरकुलानि बन्धुहृदयान्याकर्षति जननी पयोधरकलशपयःसीकरसेकादिव जायमानैर्विलासहसिताङ्कुरैर्दशनकैरलङ्क्रियमाणमुखकमलके चारित्र[11] इवान्तःपुरस्त्रीकदम्बकेन पाल्यमाने मन्त्र इव सचिवमण्डलेन रक्ष्यमाणे वृत्त[12] इव कुलपुत्रकलोकेनामुच्यमाने यशसीवात्मवंशेन सम्वर्ध्यमाने मृगपतिपोत इव रक्षिपुरुषशस्त्रपञ्जरमध्यगते धात्रीकराङ्गुलिलग्ने पञ्चषाणि पदानि प्रयच्छति हर्षे[13] षष्ठं वर्षमवतरति च राज्यवर्धने देवी यशोमती[14] गर्भेणाधत्त[15] नारायणमूर्तिरिव वसुधां देवीं राज्यश्रियम् । पूर्णेषु च प्रसवदिवसेषु दीर्घरक्तनालनेत्रामुत्पलिनीमिव

किङ्किण्यः सूक्ष्मघण्टाः । शिशिञ्जिरे सशब्दा अभूवन् । रेणुः स्तनितवत्यः । वर्षीयांसो वृद्धतराः । अपत्रेपिरे लज्जामभजन्त । पुस्फुरुश्चेलुः । एवं चेत्यादौ देवी यशोमती राज्यश्रियमधत्तेति सम्बन्धः । हाटकं सुवर्णं । ओङ्कारमोमिति यावत् । पयोधरौ स्तनौ पयोधराश्च मेघाः । पयः क्षीरं जलं च । पञ्च वा षट् वा पञ्चषाणि । पूर्णेष्वित्यादौ देवी दुहितरं प्रसूतवतीति सम्बन्धः । रक्तनाले रक्त एव नेत्रे

१. रणतामाभरणानां A. B. २. °मया इव A. B. ३. दिशाः A. B. ४. रेणुः A. B. T. ५. निर्वर्त्तिषया A. K. ६. विपुस्फुरुः A. B. T. ७. इवालुट्यन्त A. इवालुण्ठ्यन्त B. ८. रक्षासर्षपे K. Jambu ed. ९. °बन्धविकटव्याघ्रनखपङ्क्तिमण्डितग्रीवहृदं B. °ग्रीवकेन हृद° A. १०. कुर्वाणः A. B. ११. इवान्तःपुरेण पाल्यमाने. A. B. T. १२. वृत्तमिव B. १३. हर्षे देवे षष्ठमवतरति A. B १४. यशोवती K2. Jambû ed. C2. १५. तृतीयगर्भेण A. B.

सरसी हंसमधुरस्वरां शरदमिव प्रावृट्कुसुमसुकुमारावयवां वनराजिमिव [1]माधवश्रीर्महाकनकावदातां वसुधारामिव [2]द्यौः प्रभावर्षिणीं रत्नजातिमिव वेलासकलजननयनानन्दकारिणीं [3]चन्द्रलेखामिव प्रतिपत्। [4]सहस्रनेत्रदर्शनयोग्यां जयन्तीमिव [5]शची सर्वभूभृदभ्यर्हितां गौरीमिव मेना प्रसूतवती दुहितरम्। [6]यया द्वयोः सुतयोरुपरि स्तनयोरिवैकावलीलतया नितरामराजत जननी। अस्मिन्नेव तु काले देव्या [7]यशोमत्या भ्राता [8]सुनमष्टवर्षदेशीयमुद्धूयमानकुटिलकाकपक्षकशिखण्डं खण्डपरशुहुङ्कारा- ग्निधूमलेखानुबद्धमूर्धानं मकरध्वजमिव पुनर्जातमेकेनेन्द्रनीलकुण्डलांशुश्यामलितेन शरीरार्धेनेतरेण च त्रिकण्ठकमुक्ताफलालोकधवलितेन सम्पृक्तावतारमिव हरिहरयोर्दर्शयन्तं पीनप्रकोष्ठप्रतिष्ठितपुष्पलोहवलयं परशुराममिव क्षत्रक्षपणक्षीणपरशुपाशचिह्नितं बालनाङ्कितं कण्ठसूत्रग्रथितभङ्गुर[9]प्रवालाङ्कुरं हिरण्यकशिपुमिवोरःकाठिन्यखण्डित[10]नरसिंहनखरखण्डं गृहीतजन्मान्तरं शैशवेऽपि सावष्टम्भं बीजमिव वीर्यद्रुमस्य भ-

यस्या रक्तानि नालानि नेत्राणि मूलानि च यस्याः। हंसवत्तैश्च मधुरः। अवयवा अङ्गानि विभागाश्च। माधवो वसन्तः। महाकनकं तिलसुवर्णं। वसुधारा धनवृष्टिः। इयं च महाभ्युदयसूचनाय दिवा पतति। वेला जलविकृतिः। इन्द्रोऽपि सहस्रनेत्रः। जयन्तः शक्रपुत्रः। भूभृतो राजानः पर्वताश्च। मेना हिमवन्महिला। ययेत्यादौ यया दुहित्रा द्वयोः स्तनयोरुपरिजातया [11]यशोमती नितरामराजतेति सम्बन्धः। अस्मिन्नित्यादौ। देव्या [12]यशोमत्या भ्राता स्वतनयं भण्डिनामानं कुमारयोरनुचरमर्पितवानिति सम्बन्धः। काकपक्षकः चूडा एव। शिखण्डः पिच्छं। पुष्पलोहं मणिभेदः। मृताग्निहोत्रं रथचक्रमिति केचित्। रणहतवीरकाय [13]शातनवशात् परशोः पाशावशेषता। भङ्गुरः कुटिलः। बीजमिवेति। शैशवाद्बीजावस्थोत्प्रेक्षते। न तु द्रुमावस्था।

---

१. मधुश्रीः कनका° A. B. T. २. द्यौरिव च प्रभा° A. B. ३. चन्द्रकलामिव A. B. T. ४. सहस्रनयनदर्शन° A. B. ५. मघो A. B. T. ६. यया च ७. यशोवत्याः A. B. ८. आत्मतनयमष्टवर्षकल्यमुद्धूयमान° A. B. ९. प्रवराङ्कुरं K2. Jambū ed. १०. °नरसिंहनखरखण्डं B. T. ११. यशोवती C1. १२. यशोवत्याः C2. १३. निशितशरप्रकृती C2.

ण्डिनामानमनुचरं कुमारयोरर्पितवान्। अवनिपतेस्तु तस्योपरि पुत्रयोस्तृतीयस्य नेत्रयोरिवेश्वरस्य तुल्यं दर्शनमासीत्। राजपुत्रावपि सकलजीवलोकहृदयानन्ददायिनौ तेन प्रकृतिदक्षिणेन मधुमाधवाविव मलयमारुतेनोपेतौ नितरां रेजतुः। क्रमेण चापरेणेव भ्रात्रा प्रजानन्देन सह वर्धमानौ यौवनमवतेरतुः। स्थिरोरुस्तम्भौ च पृथुप्रकोष्ठौ दीर्घभुजार्गलौ विकटोरःकपाटौ प्रांशुसालाभिरामौ महानगरसन्निवेशाविव सर्वलोकाश्रयक्षमौ बभूवतुः। अथ चन्द्रसूर्याविव स्फुरज्ज्योत्स्नायशः प्रतापाक्रान्तभुवनावभिगमदुर्निरीक्षावग्निमारुताविव समभिव्यक्ततेजोबलावेकीभूतौ शिलाकठिनकायबन्धौ हिमवद्विन्ध्याविवाचलौ महावृषाविव कृतयुगयोग्यावरुणगरुडाविव हरिवाहनविभक्तशरीराविन्द्रोपेन्द्राविव नागेन्द्रगतौ कर्णार्जुनाविव कुण्डलकिरीटधरौ पूर्वापरदिग्विभागाविव

अवनीत्यादौ। अवनिपतेस्तु तस्योपरि पुत्रयोस्तुल्यदर्शनमालोकनमिति सम्बन्धः। अन्यत्र दर्शनं दृष्टिः। तृतीयस्येति च। ईश्वरस्येति साधारणं। सकलेत्यादि साधारणं। दक्षिणोनुकूलो दाक्षिणात्यश्च। मधुमाधवौ चैत्रवैशाखौ। ऊरुस्तम्भाविव तरवो महान्तश्च स्तम्भाः। प्रकोष्ठमन्तरं विद्यादरत्निमणिबन्धयोः। स्थानविशेषो वा कवाटोद्घारपट्टः। सालो वृक्षभेदः प्राकारश्च। सर्वलोकेत्यादि साधारणं। अथेत्यादौ। तौ सर्वस्यामेव पृथिव्यां प्रकाशतां जग्मतुरिति सम्बन्धः। स्फुरज्ज्योत्स्ना जालं यद्यशस्तथा प्रतापस्ताभ्यामन्यत्र ज्योत्स्ना यशा इव भुवनाक्रमणसमर्थत्वं। प्रताप आयतिरातपश्च। तेजस्तैक्ष्ण्यं प्रकाशश्च। बलं सामर्थ्यमुभयत्रापि। एकीभूतावन्योन्यानुवर्त्तिनौ मिलितौ च। शिलावत्ताभिश्च कठिनः। अचलावकम्पौ गिरी चाचलौ। कृतयुगमाद्ययुगभेदो मूर्धन्यकाष्ठं च। योग्यावुचितौ। योग्या च शिक्षा। यद्वा कृतयुगं तत्र शकटादौ समर्थौ। हरयोश्वाः सूर्यविष्णू च हरी। उक्तं च। यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु। शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिष्विति। विभक्तं स्कन्धमध्यादिविभागेन स्थितं परिकल्पितं च। नाग ऐरावणः शेषश्च। नागेन्द्रवद्गतं ययोर्नागेन्द्रेवागतावारूढौ।

१. °मधुमाधवमिव B. २. अतितरां A. B. T. ३. °शाला° B. K2. ४. शरीरौ चन्द्रोपेन्द्राविव A. B. T. ५. °विष्णुसिंहांशुवाजिषु C1. C2.

सर्वतेजस्विनामुदयास्तमयसम्पादनसमर्थावमान्ताविवाभिमानेनासन्नवेलार्गलनिरोधसङ्कटे कुकुटीरके तेजः पराङ्मुखीं छायामपि जुगुप्समानौ स्वात्मप्रतिबिम्बेनापि पादनखलग्नेन लज्जमानौ शिरोरुहाणामपि भङ्गेन दुःखमत्रतिष्ठमानौ चूडामणिसङ्क्रान्तेनापि द्वितीयेनातपत्रेणापत्रपमाणौ भगवति षण्मुखेपि स्वामिशब्देनासुखायमानश्रवणौ दर्पणदृष्टेनापि प्रतिपुरुषेण दूयमाननयनौ सन्ध्याञ्जलिघटनेष्वपि शूलायमानोत्तमाङ्गौ जलधरधृतेनापि धनुषा दोधूयमानहृदयावालेख्यक्षितिपनिभिरप्यप्रणमद्भिः सन्तप्यमानचरणौ परिमितमण्डलसन्तुष्टं तेजः सवितुरप्यबहुमन्यमानौ भूभृदपहृतलक्ष्मीकं सागरमप्युपहसन्तौ बलवन्तौ बलवन्तमकृतविग्रहं मारुतमपि निन्दयन्तौ हिमवन्तौ हिमवतोपि चमरीबालव्यजनवीजितेन दह्यमानौ जलनिधीनामपि शङ्खैः खिद्यमानौ चतुःसमुद्राधिपतिमपरं प्रचेतसमप्यसहमानावनपहृतच्छत्रानपि विच्छायानवनिपालान्कुर्वाणौ साधुष्वप्यसेवितप्रसन्नौ मुखेन मधु क्षरन्तौ दुष्टराजवंशानूष्मणा दूरस्थितानपि म्लानिमानयन्तावनुदिवसं शस्त्राभ्या-

तेजस्विनो वीरा आदित्याश्च। उदयो वृद्धिराविर्भावश्च। अस्तमयो नाशस्तिरोधानं च। अमान्ताविववर्त्तमानौ। वेला जलनिधिर्जलमर्यादा। कुर्भूमिरेव। कुटीरकं जरद्गृहं। भङ्गः कुञ्चितत्वं युद्धे पलायनं च। अपत्रपमाणौ लज्जन्तौ। स्वामी कुमारः प्रभुश्च। प्रतिपुरुषेणेति स्पर्धायां प्रतिशब्दः। दोधूयमानं सन्तप्यमानं। मण्डलं बिम्बं विषयश्च। तेजः प्रकाशस्तैक्ष्ण्यं च। भूभृदत्र प्रकरणान्मन्दरो राजानश्च भूभृतः। लक्ष्मीः समृद्धिरपि। विग्रहं वैरं देहश्च। अनपहृतेत्यादि। वर्ण्यमानवयोवस्थाभिप्रायेणोक्तं। छाया कान्तिरातपप्रतिपक्षजातिश्च। सति छत्रे विच्छायत्वं न भवतीति विरोधः। साधुष्विति साधूनां सेवाव्यतिरेकेण प्रसादायोग्यत्वं। प्रसन्नौ प्रसादवन्तौ। सुरा अपि प्रसन्ना। मधु माधुर्यं मद्यं च। असेवितप्रसन्नश्च कथं मुखेन मधु क्षरतीति विरोधः। ऊष्मा स्मयस्तापश्च। ऊष्मणा च दाहशन्त्या। वंशा वेणवः। निकटस्थो म्लानीक्रियते न तु दूरस्थ इति विरोधः।

१. अतिमानेन K. K2. Jambû ed. २. अर्गला° A. B. T. ३. कुकुस्तकुटीरके तेजसः A. B; *secunda manu* corrected to कुकुभ in A. ४. द्वितीयातपत्रेणा° A. B. ५. दौधूयमान° A. B. T. ६. अबहुमन्यमानौ हिमवतोपि A. B. T. ७. विद्यमानौ B. ८. उपयन्तौ दिवसं A. B. T.

सश्यामिकाकलङ्कितमशेषरा[1]जकप्रतापाग्निनिर्वापणमलिनमिव करतलमुद्वहन्तौ योग्याकालेषु धीरैर्धनुर्ध्वनिभिरभ्यर्णो[2]पभोगाद्दिग्वधूभिरिवालपन्तौ राज्यवर्धन इति हर्ष इति सर्वस्यामेव पृथिव्यामाविर्भूतशब्दप्रादुर्भावौ स्व[3]ल्पीयसैव कालेन द्वीपान्तरेष्वपि प्रकाशतां जग्मतुः । एकदा च ता[4]वाहूय भुक्तवानभ्यन्तरगतः पिता सस्नेहमवादीत् । वत्सौ प्रथमं राज्याङ्गं दुर्लभाः सद्भृत्याः प्रायेण परमाणव इव समवायेष्वनुगुणीभूय द्रव्यं कुर्वन्ति पार्थिवं क्षुद्राः । क्रीडारसेन नर्त्तयन्तौ[5] मयूरतां नयन्ति बालिशाः दर्पणमिवानुप्रविश्यात्मीयां प्रकृतिं सङ्क्रामयन्ति पल्लविकाः । स्वप्ना इव मिथ्यादर्शनैरसतीं बुद्धिं जनयन्ति विप्रलम्भका गीतनृत्तहसितै-[6]रुन्मत्ततामावहन्त्युपेक्षिता विकारा इव वातिकाः । चातका[7] इव तृष्णावन्तो न शक्यन्ते ग्रहीतुमकुलीना मानसे मीनमिव स्फुरन्तमेवाभिप्रायं

निर्वपणं शमनं । योग्या अभ्यासः । अभ्यर्णः प्रत्यासन्नः । शब्दः प्रादुर्भावः ख्यातिः । प्रथमं प्रधानभूतं । प्रायेणेति क्षुद्राः प्रायेण समवायेषु मन्त्रेष्वनुगुणीभूय यथा क्षुद्रा अल्पपरिमाणाः परमाणवः पार्थिवं पृथिव्यादिजातीयं घटादिद्रव्यं कुर्वन्ति । कथं समवायेष्वनुगुणीभूय । अयुतसिद्धानामाधाराधेयभूतानामिह प्रत्ययहेतुः सम्बन्धः समवायो यथा तन्तुषु पट इति । कार्यस्य द्रव्यस्यावयविन आरम्भं । प्रतियोगीभावोनुगुणत्वं । मयूरो धूर्त्तजनयोग्यो हासो वा शिखण्डी च । बालिशा धूर्त्ताः कुमाराश्च । बालका हि क्रीडारसेन मयूरं नर्त्तयन्ते । अनुप्रविश्य चित्तरञ्जनां कृत्वा । आसाद्य च प्रकृतिं स्वभावं शरीरं च । पल्लविका विटाः किसलयानि च । मिथ्यादर्शनैरसदागमैरलीकवस्तुप्रकाशनैश्च । असतीमशोभनां बुद्धिं । असत्यविद्यमाने च बुद्धिः । विप्रलम्भकाः प्रतारकाः । वातिका धूर्त्ता वातोत्थिताश्च । तृष्णा धनगर्धः पिपासा च । ग्रहीतुमावर्जयितुमवष्टब्धुं च । अकुलीना अकुलोद्गताः कौ भूमौ न निलीनाश्चाकाशचारित्वं । मानसे चित्ते सरोभेदे च । स्फुरन्तमुत्पद्यमानं । अनुत्पन्नाभिभवमिति यावत् । सति कार्ये हि सर्व एवाभिप्रायं लक्षयति । एतेन प्रागेव । अन्यत्र च चलन्तं ।

१. °राजकपूतनाग्निनिर्वापणम° K. K1. २. उपभोगाद्दिग्वधूभिर्वा° A. B. K. ३. अल्पीयसेव A. B. ४. तावाहूयाभ्यन्तरगतो A. B. T. ५. नर्त्तयन्तो A. B. ६. उन्मत्ततामापादयन्ति A. B. T ७ चालका: C1. C2

गृह्णन्ति जालिकाः। यमपट्टिका इवाम्बरे चित्रमा[1]लिखन्त्युद्गीतकाः श[2]ल्यं हृदये निक्षिपन्त्यतिमार्गणा यतः सर्वैरभिर्दोषाभिषङ्गैरसङ्गतौ बहुधोपधाभिः परीक्षितौ शु[3]चीविनीतौ विक्रान्तावभिरूपौ मालवराजपुत्रौ भ्रातरौ भुजाविव मे शरीरादव्यतिरिक्तौ कुमारगुप्तमाधवगुप्तनामा[4]नावस्माभि[5]र्भवतोरनुचरत्वार्थमिमौ निर्दिष्टाव[6]नयोरुपरि भवद्भ्यामपि नान्यपरिजनसं[7]मवृत्तिभ्यां भवितव्यमित्युक्त्वा नयोराह्वानाय प्रतीहारमादिदेश। न[8] चिराद् द्वारदेश[9]निहितलोचनौ राज्यवर्धनहर्षौ प्रतीहारेण सह प्रविशन्तमग्रतो ज्येष्ठमष्टादशवर्षवयसं नात्युच्चं नातिखर्वमतिगुरुभिः पदन्यासैरनेकनरपतिसञ्चरणचलां निश्चलीकुर्वाणमिवोर्वीमनवरताभ्यस्तलङ्घनघनोपचयकठिनमांसमेदुरादूरुद्वयान्निष्पततेवानुल्बणजानुग्रन्थिप्र[10]सूतेन त[11]नुतरजङ्घाकाण्डयुगलेन

जालिकाः कौसृतिकाः कैवर्त्ताश्च। य[12]मपट्टिका गृहीतप[13]ट्टलिखितसपरिवारधर्मराजाः। अम्बर आकाशे वस्त्रे चाम्बरे। चित्रमालिखन्तीति। असम्भाव्यमानानर्थानारभन्त इति यावत्। अन्यत्र चित्रमालेख्यं। उद्गीतकादुच्चरित्वादुच्चैर्गीतं येषां ते च। शल्यमिव शल्यं पीडा फलिका च। अतिमार्गणा अतिक्रम्य ये संश्रयन्ते। अन्यथा महाभागिनोस्य वक्तुरनुचितेयमुक्तिः स्यात्। तेनानुरूपसम्भवमविच्छिन्नं च। मार्गमतिमार्गणं। मार्गणाः शराश्च। हृदये शल्यं फलिकामर्पयन्ति। अभिषङ्गः सम्पर्कः। उपधा भृत्यस्य धर्मादिविषयः परीक्षणोपायः। उक्तं च। उपेत्याधीयते यस्तस्मादुपधेति ततः स्मृता। उपाय उप[14]धा ज्ञेयातया भृत्यान्परीक्षयेदिति। विक्रान्तौ शूरौ। अभिरूपौ सुन्दरौ। न चिरादित्यादौ राज्यवर्धनहर्षौ प्रतीहारेण सह प्रविशन्तमग्रतो ज्येष्ठं कुमारगुप्तं पृष्ठतश्च तस्य कनीयांसं नीतिमत्त्वं प्रकाशितं। खर्वं वा[15]मनं। मेदुरात्पुष्टात्। अनुल्बणोनुद्धतः।

---

१. आलिखयन्ति A. B. आलिङ्गयन्ति K. २. हृदये शल्यमिव. A. B. ३. शुचि° B. ४. K. T. Jambû ed. omit नामानौ. ५. °भवतोरगुरुचरावुचितौ चिन्तितौ A. भवतोरनुचरावुचितौ चिन्तितौ B. ६. तयोरुपरि A. B. T. ७. सामान्यदर्शनाभ्यां A. B. ८. नातिचिराच्च A. B. T. ९. निवेशित° A. B. १०. °प्रसृतेन A. B. ११. तनुना तरलजङ्घा A. T. १२. यमपट्टिकाः C1 C2. १३. °पट्ट° C1, C2. १४. उपधातया ज्ञेयानया C2. १५. वादनं C1. वाचनं C2.

भासमानमुल्लिखितपार्श्वप्रकाशिनकशिम्ना मन्दरमिव सुरासुरभसभ्रमितवासुकिकषणक्षीणेन मध्येन लक्ष्यमाणं । अतिविस्तीर्णेनोरसा स्वामिसम्भावनानामपरिमितानामवकाशमिव प्रयच्छन्तं प्रलम्बमानस्य भुजयुगलस्य निभृतललितैर्विक्षेपैरतिदुस्तरं तरन्तमिव यौवनोदधिं वामकरकटकमाणिक्यमरीचिमञ्जरीजालिन्या समुद्भिद्यमानप्रतापानलशिखापल्लवयेव चापगुणकिणलेखयाङ्कितपीवरप्रकोष्ठमालोहिनीमुच्चां सततावलम्बिनीमस्त्रग्रहणव्रतविधृतां रौरवीमिव त्वचं कर्णाभरणमणेः प्रभां बिभ्राणमुत्कोटिकेयूरपत्रभङ्गपुत्रिकाप्रतिबिम्बगर्भकपोलं मुखं चन्द्रमसमिव हृदयस्थितरोहिणीकमुद्वहन्तमचपलस्तिमितनारकेणाधोमुखेन चक्षुषा शिक्षयन्तमिव लक्ष्मीलाभोत्तानितमुखानि पङ्कजवनानि विनयं स्वाम्यनुरागमिवाम्लातकमुत्तंसीकृतां शिरसा धारयन्तं निर्दयया कङ्कणभङ्गभीतसकलकार्मुकार्पितामिव नम्रतां प्रकाशयन्तं शैशव एव निर्जितैरिन्द्रियैररिभिरिव सम्यतैः शोभमानं प्रणयिनीमिव विश्वासभूमिं कुलपुत्रतामनुवर्त्तमानं तेजस्विनमपि शीलेनाह्लादकेन सविनारमिव शशिनान्तर्गतेन विराजमानमचलानामपि कायकार्कश्येन गन्धनमिवाचरन्तं दर्शनक्रीतमानन्दहस्ते विक्रीणानमिव जनं सौभाग्येन कुमारगुप्तं

उल्लिखितमिवोल्लिखितं तनूकृतं । रुरुर्मृगभेदस्तस्येयं रौरवी तां । अम्लातकं पुष्पभेदं । करण्टिका पुष्पभेदं वा । उत्तंसीकृतं शेखरतां नीतम् । शीलेनाप्यन्तर्गतेन । एतेन चास्या दाम्भिकत्वमुक्तं । गन्धनं मर्दनमुद्घाटनं वा । दृष्टमेव जनं वश्यमेव सर्वं करोतीति दर्शनक्रीतता । क्रीतमावर्जितम् । पुनश्चानन्दोत्पादनद्वारेणानन्दवन्तं । तच्छरणं करोतीति । तत्र विक्रियोत्प्रेक्षा । यैर्न्तु वस्तु केनचिदर्थेन क्रीतं तदप्यन्यस्य विक्रीयत इत्युक्तं विक्रीणानमिति ।

१. मध्येन मन्दरमिव A. B. २. सनिभं भावानाम° A. B. T. ३. A. B. omit कर. ४. A. B. omit. मञ्जरी ५. K. K1. Jambû ed. omit गुण. ६. A. B. T. read शस्त्र instead of अस्त्र. ७. त्वचं रुचं कर्णाभरणमणेर्बिभ्राणं A. B. T. ८. चन्द्रमिव A. B. ९. अम्लानमुत्तमं कृतमम्लातशेखरं शिरसि A. B. T. १०. निर्दया कर्षणभङ्ग° A. B. T. ११. अङ्कवेकेन A. B. T १२. यश्च C1. C2.

पृष्ठतस्तस्य कनीयांसमतिप्रांशुतया गौरतया च मनः शिलाशैलमिव सञ्चरन्तमनुल्बणमालतीकुसुमशेखरनिभेन निर्जिगमिषता गुरुणा शिरसि चुम्बितमिव यशसा परस्परविरुद्धयोर्विनययौवनयोश्चिरात्प्रथमसङ्गमचिह्नमिवं भ्रूसङ्गतकेन कथयन्तमतिधीरतया हृदयनिहितां स्वामिभक्तिमिव निश्चलां दृष्टिं धारयन्तमच्छाच्छचन्दनरसानुलेपनशीतलं सन्निहितहारोपधानं वक्षःस्थलमनन्तसामन्तसङ्क्रान्तिश्रान्तायाः श्रियो विशालं शशिमणिशिलापट्टशयनमिव बिभ्राणं चक्षुः कुरङ्गकैर्घोणावंशं वराहैः स्कन्धपीठं महिषैः प्रकोष्ठबन्धं व्याघ्रैः पराक्रमं केसरिभिर्गमनं मतङ्गजैर्मृगयाक्षेपिनशेषैर्भीतैरुत्कोचमिव दत्तं दर्शयन्तं माधवगुप्तं ददृशतुः। प्रविश्य च तौ दूरादेव चतुर्भिरङ्गैरुत्तमाङ्गेन च गां स्पृशन्तौ नमश्चक्रतुः। स्निग्धनरेन्द्रदृष्टिनिर्दिष्टामुचितां भूमिं भेजाते मुहूर्त्तं स्थित्वा भूपतिरादिदेश। तावद्य प्रभृतिभवद्भ्यां कुमारावेनुवर्त्तनीयावहर्निशमस्तापरन्यापारभ्यां प्रतिविम्बकाभ्यामिवाङ्गभूताभ्यामनयोः कुमारयोश्चरतोस्तिष्ठतोः स्वपतोर्जाग्रतोश्चान्तिकं क्षणमपि न मोक्तव्यं। एवं वामचिरात्सकलाः सङ्कल्पाः कल्पतरव इवाभिमतफलसम्पदुत्कर्षविशेषप्रदा भविष्यन्तीत्याकर्ण्य यथाज्ञापयति देव इति मेदिनीदोलायमानमौलिभ्यां युगपदभिहिते ताभ्यामुत्थाय

गौरतयेतीत्थं भूतलक्षणे तृतीया। युक्तादिति सञ्चरन्तमिति तत्रास्ति। शेखरस्यानुल्बणत्वं विनयं वक्ति। गुरुणा भूयिष्ठेन। चुम्बितमधिष्ठितं। गुरुणा च पित्रा निर्गच्छता पुनः शिरसि चुम्ब्यते। भ्रूसङ्गतकं विनयं। उपधानं गण्डकं। विशालं प्रशस्तं। विशाले चाङ्गानि प्रसार्यन्ते। शीतलत्वाचाङ्गनिर्वृत्तिः। घोणा नासिका एव स्पष्टत्वाद्वंशस्तं। उत्कोचमिवेति दण्डमित्यर्थः। चतुर्भिरङ्गैरिति जानुभ्यां हस्ताभ्यां चोत्तमाङ्गेन मूर्ध्ना।

---

१. पृष्ठतश्च तस्य. A. B. २. दूरनिवेशितां A. B. *secunda manu* corrected to हृदयनिवेशितां in A. ३. श्रियो विलासं B. ४. निद्राश्रमशशिमणि शयनशिलातलमिव A. B. T. ५. गतं A. B. ६ 'क्षवित° A. ७. K. K2. Jambû ed. omit तौ. ८. मां B. T. ९. एतौ A. B. १०. अनुवर्त्तनीयाविति यथाज्ञापयति K. K2. Jambû ed.

राज्यवर्धनहर्षौ[1] पितरं प्रणेमतुः । आदाय च तौ निर्जग्मतुः । ततश्चारभ्य क्षणमपि निमेषोन्मेषाविव चक्षुर्गोचरादनपयान्तावुच्छ्वासनिःश्वासाविव नक्तन्दिवमभिमुखं[2] स्थितौ भुजाविव सततं पार्श्ववर्तिनौ कुमार्योस्तौ बभूवतुः । अथ राज्यश्रीरपि नृत्तगीतादिषु विदग्धासु सखीषु सकलासु कलासु च प्रतिदिनमुपचीयमानपरिचया शनैः शनैरवर्धत परिमितैरेव च दिवसैर्यौवनमारुरोह । निपेतुरेकस्यां तस्यां शरा इव लक्ष्ये भुवि भूभुजां सर्वेषां दृष्टयः[3] । दूतसम्प्रेषणादिभिश्च तां ययाचिरे राजानः । कदाचित्तु राजान्तःपुरप्रासादस्थितो बाह्यकक्ष्यावस्थितेन पुरुषेण स्वप्रस्तावागतां गीयमानामार्यामशृणोत् ।

उद्वेगमहावर्त्ते पातयति पयोधरोन्नमनकालः[4] ।
सरिदिव तटमनुवर्षं विवर्धमाना सुता पितरम् ॥

तां च श्रुत्वा पार्श्वस्थितां[5] महादेवीमुत्सारितपरिजनो जगाद । देवि तरुणीभूता वत्सा राज्यश्रीः । एतदीया गुणवृत्तेव[6] क्षणमपि हृदयान्नापयाति मे चिन्ता । यौवनारम्भ एव च कन्यकानामिन्धनीभवन्ति पितरः सन्तापानलस्य हृदयमन्धकारयति मे[7] दिवसमिव पयोधरोन्नतिरस्याः केनापि कृता धर्म्या[8] नाभिमता मे स्थितिरियं जगतो[9] यदङ्गसम्भूतान्यङ्कलालितान्यपरित्याज्यान्यपत्यकान्यकाण्ड[10][11] एवागत्यासंस्तुतैर्नीयन्ते । एतानि तानि खल्वङ्गस्थानानि संसारस्य सेयं सर्वाभिभाविनी शोकाग्नेर्दाहशक्तिः । यदपत्यत्वे[12] समानेपि जातायां दुहितरि दूयन्ते सन्तः ।

भूमिं तौ च पितरमिति । तौ च राज्यवर्धनहर्षौ लब्धानुचरावभिवन्दनाय पितरं गां प्रणेमतुरित्यर्थः । विदग्धासु प्रवीणास्वाप्ताम्यासु च । उद्वेगो मानसी पीडा तस्यावर्त्तनमावर्त्तो जलभ्रमणं तत्र पयोधरशब्दः स्तनमेघयोः । अनुवर्षं वर्षे प्रावृषि च । असंस्तुतैरपरिचितैः । दौःशील्यं चिह्नं ।

---

१. राज्यवर्धनहर्षौ प्रणेमतुस्तौ च पितरं ततश्चारभ्य K. K2. Jambû ed. २. अभिमुखस्थितौ A. B. ३. लालाभिलाषाः A. B. T. ४. पयोधरोन्नमनकाले A. K. Jambû ed. पयोधरोन्नते काले B. ५. पार्श्वे A. B. T. ६. गुणवर्त्तेव A. B. K. ७. A. B. T. omit मे. ८. A. B. T. omit धर्म्या ९. K. K2. Jambû ed. omit जगतः १०. यदङ्गसम्भूतानि K. K2. Jambû ed. यदङ्गभूतानि A. ११. अङ्कलालितान्यपत्यान्यकाण्डः A. B. T. १२. एतत्तदपत्यत्वं B. एतत्तद्यदपत्यत्वं A.

एतदर्थं च जन्मकाल एव कन्यकाभ्यः प्रयच्छन्ति सलिलमश्रुभिः साधवः। एतद्भयादकृतदारपरिग्रहाः परिहृतगृहवसतयः [1]शून्यारण्यान्यधिशेरते मुनयः। को हि नाम [2]सहेत [3]सचेतनो विरहमपत्यानां यथा यथा समापतन्ति दूता [4]वराणां वराकी लज्जमानेव [5]चिन्ता तथा तथा नितरां प्रविशति मे हृदयं। किं क्रियते तथापि गृहगतैरनुगन्तव्या एव लोकवृत्तयः। प्रायेण च [6]सत्स्वप्यन्येषु वरगुणेष्वभिजनमेवानुरुध्यन्ते धीमन्तो [7]धरणीधराणां च भूभृन्मूर्ध्नि स्थितोपि [8]माहेश्वरः पादन्यास इव सकलभुवननमस्कृतो [9]मौखरो वंशः। तत्रापि तिलकभूतस्यावन्तिवर्मणः सूनुरग्रजो [10]ग्रहवर्मा नाम ग्रहपतिरिव गाङ्गतः पितुर[11]न्यूनो गुणैरेनां प्रार्थयते यदि भवत्या अपि मति[12]रनुमन्यते ततस्तस्मै दातुमिच्छामीत्युक्तवति भर्त्तरि दुहितृस्नेहकातरतरहृदया साश्रुलोचना महादेवी प्रत्युवाच। आर्यपुत्र सम्वर्धनमात्रोपयोगिन्यो धात्रीनिर्विशेषा भवन्ति खलु मातरः कन्यकानां प्रदाने तु परं प्रमाणमासां पितरः। [13]केवलं कृपाकृतविशेषः सुदूरेण तनयस्नेहादतिरिच्यते दुहितृस्नेहः। यथा नेयं यावज्जीवमावयो[14]रार्त्तितां प्रतिपद्यते। [15]तथार्यपुत्र एव जानातीति राजा तु जातनिश्चयो दुहितृदानं प्रति समाहूय सुतावपि [16]विदितार्थावकार्षीत्। शोभने च दिवसे ग्रहवर्मणा कन्यां प्रार्थयितुं प्रेषितस्य पूर्वागतस्यैव प्रधानदूतपुरुषस्य करे सर्वराजकुलसमक्षं दुहितृदानजलमपातयत्। जातमुदि कृतार्थे गते च तस्मिन्नासन्नेषु च विवाहदिवसेषूद्दामदीयमानताम्बूल[17]पटवासकुसुम[18]प्रसाधितसर्वलोकं सकलदेशादिश्यमानशिल्पि[19]सार्थागमनमवनिपालपुरुषगृहीत-

वराकी तपस्विनी। अभिजनं कुलं। सकलेत्यादि साधारणं। आर्त्तिता मनः पीडात्वं। जातमुदीत्यागत्रेवं राजकुलमासीदिति सम्बन्धः।

---

१. शून्यान्यरण्यान्युपासते A. B. T. २. सहते K. K1. ३. K. K1. K2 Jambu ed. omit सचेतनः ४. वरणाय A. B. ५. A. B. T. omit चिन्ता. ६. अनेकेषु A. B. ७. धरण्यां A. B. T. ८. माहेश्वरपदन्यासः A. B. T. ९. मोखरः A. B. T. १०. महधर्मा A. B. T. ११. अनूनः A. B. १२. अनुबुध्यते A. B. १३. केवलकृपाकृतः A. B. T. १४. आवयोर्नाधितां K. आवयोराचितां A. B. T. १५. यथा B. १६. विदिताहांवकार्षीत् K. विदितावकार्षीन् A. B. १७. °पट्टवासकुसुमं A. B. १८. °प्रसाधित° K2. Jambû ed. °प्रसापित° K. १९. सर्वागमनमवनिपति° A. B. T.

सं[1]मग्रग्रामीणानीयमानोपकरणसम्भारं राजदौवारिकोपनीयमानानेकनृपोपायनमुपनिमन्त्रिता[2]गतबन्धुवर्गसम्वर्गणव्यग्रराजवल्लभं लब्धमधुमदप्रचण्डचर्मकारकरपुटोत्क्षालितकोणपटुविघट्टनरणन्[3]मङ्गलपटहं पिष्टपञ्चाङ्गुलैर्[4]मण्ड्यमानोलूखलमुसलशिलाद्युपकरणमशेषाशामुखा[5]विर्भूतचारणपरम्परापूर्यमाणप्रकोष्ठं प्रति[6]ष्ठाप्यमानेन्द्राणीदैवतं सितकुसुमविलेपनवसनसत्कृतैः सूत्रधारैरा[7]दीयमानविवाहवेदीसूत्रपातमुत्कूर्चककरैश्च सुधाकर्पूरस्कन्धैरधिरोहिणीसमारूढैर्धवैर्धवलीक्रियमाणप्रसादप्रतोलीप्राकारशिखरं क्षुण्णक्षा[8]ल्यमानकुसुम्भसम्भारा[9]रम्भः प्लवपूररज्यमानजनपादपल्लवं निरूप्यमाणयौतकयोग्यमातङ्गतुरङ्गतरङ्गिताङ्गनं गणना[10]भियुक्तगणक[11]गणगृह्यमाण[12]लग्नगुणं गन्धोदकवाहिमकरमुखप्रणाली[13]पूर्यमाणक्रीडावापीसमूहं हेमकारचक्रप्रक्रान्तहाटकघटनटाङ्कार[14]वाचालितालिन्दकमुत्थापिताभिनवभ[15]वनभित्तिपात्य[16]मानबहलवालुकाकण्ठ[17]कालेपाकुलालेपकलोकं चतुरचित्रकरचक्रवाललिख्यमानमङ्गल्यालेख्यं । लेप्य[18]कारकदम्बकक्रियमाणमृन्मयमीनकूर्ममकरना[19]रिकेलकदलीपूगवृक्षकं क्षितिपालैश्च स्वयमाबद्धकक्ष्यैः स्वाम्यर्पितकर्मशोभासम्पादनाकुलैः सिन्दूरकुट्टिमभूमीश्च मसृणयद्भिर्विनिहितसरसातर्पणहस्ता[20]न्विन्यस्तालक्तकपाटलांश्च

ग्रामीणा ग्राम्याः । राजदौवारिका दूताः । सम्वर्गणमा[21]वर्त्तनं । पिष्टमातर्पणं । चारणाः कुशीलवाः । प्रकोष्ठं बहिर्द्वारं । सूत्रधारैः स्थपतिभिः । अधिरोहिणी निःश्रेणिः । धवैः पुरुषैः । प्लवः पूरः । क्षुण्णश्चूर्णितः । कुसुम्भकं पद्मकं । यौतकं खु[22]दायः । प्रणालं वाप्यादि पूरणार्थं मकरमुखं कुर्वन्ति । लग्नो मेषादिः । अलिन्दो बहिर्द्वारकोष्ठः । कण्ठकाः कणाः । आबद्धकक्ष्यैः कृतोद्योगैः । मसृणयद्भिश्चिक्कणीकुर्वद्भिरुत्तम्भयद्भिरूर्ध्वीकुर्वद्भिः । आतर्पणं पिष्टम् ।

१. °समस्त° A. B. २. उपगत° A. B. ३. °रटन् A. B. T. ४. मृज्यमानोलूखल° A. B. T. ५. °मुखावर्जित° A. B. T. ६. प्रतिष्ठाप्यमानद्रोणीदैवतं A. B. T. ७. आधीयमान° A. B. ८. °चाल्यमान° A. °वाल्यमान° B. ९. सम्भारान्तः A. B. °सम्भारं° K2. Jambû ed. १०. गणना° A. B. ११. °गलक° K. K1. १२. °गण्यमान° A. B. T. १३. °प्रणायां B. १४. °टङ्कटङ्कार° A. B. T. १५. K. K1. Jambû ed. omit भवन १६. पाट्यमानबहुल A. B. १७. °कण्ठकलोपाकुललेपक° A. B. T. १८. लेप्यमानकदम्बक° A. B. १९. °नालिकेर° A. B. २०. हस्तविन्यस्ता° A. B. २१. आवर्जनं. C1. C2. २२. स्वदायः C2.

चूता[1]शोकपल्लवलाञ्छितशिखरानुद्वाहवितर्दिकास्तम्भानुत्तम्भयद्भिः प्रारब्धविविधव्यापारमासूर्योदयाच्च प्रविष्टा[2]भिः सतीभिः सुभगा[3]भिः सुरूपाभिः सुवेशाभिरविधवाभिः सिन्दूररजो[4]राजिराजितललाटाभिर्वधू[5]वरगोत्रग्रहणगर्भाणि श्रुतिसुभगानि मङ्गलानि गायन्तीभिर्बहुविधवर्ण[6]कादिग्धाङ्गुलीभिर्ग्रीवासूत्राणि च चित्रयन्तीभिश्चित्रपत्रलतालेख्यकुशलाभिः कलशांश्च धवलिताञ्शीतलशाराजिर[7]श्रेणीश्च मण्डयन्तीभिरभिन्नपुटकर्पास[8]तूलपल्लवांश्च वैवाहिककङ्कणोर्णासूत्रसन्नाहांश्च[9] रञ्जयन्तीभिर्बलाशनी[10]घृतखनीकृतकुङ्कुमकल्कमिश्रितांश्चाङ्गरागांल्लावण्यविशेषकृन्ति च मुखालेपनानि कल्पयन्तीभिः कङ्कोल[11]मिश्राः सजातीफलाः स्फुरत्स्फीतस्फाटिककर्पूरशकलखचितान्तरालालवङ्गमाला रचयन्तीभिः समन्तात्सामन्तसीमन्तिनीभिर्व्योम्नि[12] बहुविधभक्तिनिर्माणनिपुणपुराणपौरपुरन्ध्रिबध्यमानैर्बद्धैश्चाचारचतुरान्तःपुरजरतीजनितपूजाराजमानरजकमहादार[13]रजतरज्यमानै रक्तैश्चोभयपटान्तलग्नपरिजनप्रेङ्खोलितैश्छायासु शोष्य[14]माणैः शुष्कैश्च कुटिलक्रमरूपक्रियमाणपल्लवपरभागैरपरैरारब्ध[15]कुङ्कुमपङ्कस्थासकच्छुरणैरपरैरुब्जभुजिष्याभज्यमानभङ्गुरोत्तरीयैः क्षौमैश्च बादरैश्च दुकू[16]लैश्च लालातन्तुजैश्चांशुकै[17]श्च नेत्रैश्च

गोत्रं नाम । दिग्धा उपलिप्ताः । शीतलमपक्वं । शाराजिरं शरावं । अभिन्नपुटो वंशादिमयश्चतुष्कोणः पाटलाकृतिर्जालकैः क्रियते । तच्छिद्रान्तःपूरणाय कर्पासतूलपल्लवा रज्यन्ते । कङ्कणः प्रतिसरः । बलाशना पुष्पाख्यौषधिः । तत्पक्वं घृतं रक्षार्थं क्रियते । स्फाटिककर्पूराख्यः कर्पूरभेदः । भक्तिर्विच्छित्तिः । कुटिलः क्रमो येषां तैर्भुजिष्यैश्चेटैर्भज्यमानत्वं मुष्टिदानं । क्षौमैः क्षुमाविकारैः । बादरैः कार्पासैः । लालातन्तुजैः कौशेयैः । नेत्रैः पट्टैः ।

---

१. चूडा° K. K1. नूतना° A. B T. २. प्रतिष्ठाभिः A. B. T. ३. A. B. omit this passage down to बहुविध° ४. °राणि° K. ५. °र्धववर° A. B. °वधवर° K1, Jambû ed. ६. °कणिकारदिग्धाङ्गुलीभिः A. B. ७. °शालाजिर° A. B. T. ८. °तूल° B. ९. समाहांश्च A.B. १०. वर्णघृत° A. B. T. बलघृत° K. ११. °कक्कोलीश्च A. B. T. १२. व्यासं A. B. १३. K. K1. K2. Jambû ed omit this word. १४. शुष्यमाणैः A. B. १५. आबद्ध° A. B. T. १६. दुकूलैश्च B. १७. अकुकैश्च A. B.

निर्मोकनिर्मैरकठोररम्भागर्भकोमलैर्निःश्वासहार्यैः स्पर्शानुमेयैर्वासोभिः सर्वतः स्फुरद्भिरिन्द्रायुधसहस्रैरिव सञ्छादितं । उज्ज्वलनिचोलकावगुण्ठ्यमानहंसकुलैश्च शयनीयैस्तारामुक्ताफलोपचीयमानैश्च कञ्चुकैरनेकोपयोगपाट्यमानैश्चापरिमितैः पट्टपटीसहस्रैरभिनवरागकोमलैर्दुकूलराजमानैश्च पटवितानैः स्तवरकनिवहनिरन्तरच्छाद्यमानसमस्तपटलैश्च मण्डपैरुच्चित्रनेत्रपटवेष्ट्यमानैश्च स्तम्भैरुज्ज्वलं रमणीयं चौत्सुक्यदं च मङ्गल्यं चासीद्राजकुलम् । देवी तु यशोमती विवाहोत्सवपर्याकुलहृदया हृदयेन भर्त्तरि कुतूहलेन जामातरि स्नेहेन दुहितर्युपचारेण निमन्त्रितस्त्रीष्वादेशेन परिजने शरीरेण सञ्चरणे चक्षुषा कृताकृतप्रत्यवेक्षणेष्वानन्देन महोत्सव एकापि बहुधा विभक्तेवाभवत् । भूपतिरप्युपर्युपरि विसर्जितोष्ट्रवामीजनितजामातृजोषः सत्यप्याज्ञासम्पादनदक्षे मुखेक्षणपरे परिजने समं पुत्राभ्यां दुहितृस्नेहविक्लवः सर्वं स्वयमकरोत् । एवं च तस्मिन्नविधवाधव इव भवति राजकुले मङ्गलमय इव जायमाने जीवलोके चारणमयेष्विव लक्ष्यमाणेषु दिङ्मुखेषु पटहरवमय इव कृतेन्तरिक्षे भूषणमय इव भ्रमति परिजने बान्धवमय इव दृश्यमाने सर्गे निर्वृतिमय इवोपलक्ष्यमाणे काले लक्ष्मीमय इव विजृम्भमाणे महोत्सवे निधान इव सुखस्य फल इव जन्मनः परिणाम इव पुण्यस्य

निचोलकैर्वस्तुरूपकविशेषैः । स्तवरकं वस्त्रभेदः । वितानकं करकं । पटलं छादनं। उज्ज्वलं भ्राजिष्णु । उष्ट्रवामी उष्ट्रभार्या । केचिद्वामी द्वयमन्ये वेसरीमन्ये गुर्वीमाहुः । जोषः सुखं । एवमित्यादावस्मिन्नस्मिन्सत्याजगाम विवाहदिवस इति सम्बन्धः । निधान इव सुखस्येत्यादौ वर्तमान इत्यनेन सङ्गतिः ।

---

१. °भङ्गगर्भं° A. B. T. २. °तुलैश्च A. B. ३. कम्बुकैः A. B. T. ४. अपरिमितपट्ट° A. B. ५. रच्यमानैश्च A. B. T. ६. पटीवितानैः A. B. ७. स्तवकैरक° K. K2. वरक° A. कनक° B. ८. मण्डपैर्विरचित्र° B. ९. स्तम्भैरुज्ज्वलं च रमणीयं चौत्सुकं च पर्याकुलं च माङ्गलं A. B. T. १०. च A. B. ११. पर्याकुलहृदये A. B. १२. सञ्चरणेन A. १३. महोत्सवेन A. १४. आसीत् A. B. १५. तोषः K. K2. Jambû ed. १६. °क्षणपरिजने A. B. T. १७. परिजने सजीवलोके A. B. T. १८. अविधवामय इव K. K1. १९. परिमाणः A. B.

यौवन इव विभूतेर्यौवराज्य इव प्रीतेः सिद्धिकाल इव मनोरथस्य वर्तमाने गम्यमान इव जनाङ्गुलीभिरालोक्यमान इव मार्गध्वजैः प्रत्युद्गम्यमान इव मङ्गल्यवाद्यप्रतिशब्दकैराहूयमान इव मौहूर्तिकैराकृष्यमाण इव मनोरथैः परिष्वज्यमान इव वधूसखीहृदयैराजगाम विवाहदिवसः। प्रातरेव च प्रतीहारैः समुत्सारितनिखिलानिबद्धलोकं विविक्तमक्रियत राजकुलं। अथ महाप्रतीहारः प्रविश्य नृपसमीपं देव जामातुरन्तिकात्ताम्बूलदायकः पारिजातकनामा सम्प्राप्त इत्यभिधाय स्वाकारं युवानमदर्शयत्। राजा तु तं दूरादेव जामातृबहुमानाद्दर्शितादरो बालक कच्चित्कुशली ग्रहवर्मेति पप्रच्छ। असौ तु समाकर्णितनराधिपध्वनिर्धावमानः कतिचित्पदान्युपसृत्य प्रसार्य च बाहू राजसेवाचतुरश्चिरं वसुन्धरायां निधाय मूर्धानमुत्थाय देव कुशली यथाज्ञापयस्यर्चयति च देवं नमस्कारेणेति व्यज्ञापयत्। आगतजामातृनिवेदनागतं च तं ज्ञात्वा कृतसत्कारं राजा यामिन्याः प्रथमे यामे विवाहकालात्ययकृतो यथा न भवति दोषस्तथा विधीयतामिति सन्दिश्य प्रतीपं प्राहिणोत्। अथ सकलकमलवनलक्ष्मीं वधूमुख इव सञ्चार्य समवसिते वासरे विवाहदिवसश्रियः पादपल्लव इव रज्यमाने सवितरि वधूवरानुरागलघूकृतप्रेमलज्जितेष्विव विघटमानेषु चक्रवाकमिथुनेषु सौभाग्यध्वज इव रक्तांशुकसुकुमारवपुषि नभसि स्फुरति सन्ध्यारागे कपोतकण्ठकर्बुरे वरयात्रागमनरजसीव कलुषयति दिङ्मुखानि तिमिरे लग्नसम्पादनसज्ज इवोज्जिहाने ज्योतिर्गणे विवाहमङ्गलकलश इवोदयशिखरिणा समुत्क्षिप्यमाणे

मौहूर्तिकैर्गणकैः। अनिबद्धोबाह्यः। यथा न भवति दोष इत्यत्र तथा कार्यमित्यर्थलभ्यम्। अथेत्यादावेतस्मिन्नेतस्मिन्सत्याजगामेति सम्बन्धः। कपोलेत्यसाधारणं। कर्बुर आपाण्डुरे। रजसीवेति। रजोपि मुखानि कलुषयति। लग्नेत्यादि साधारणं। उज्जिहान उद्गच्छति ज्योतिर्गणैस्तारानिकरैर्गणकैश्च।

---

१. भूपतेर्नवराज्यः A. B. T. २. अलोक्यमानमार्ग इव ध्वजैः A. B. ३. मनोरथशतैः A. B. T. ४. विविक्ततममक्रियत A. B. T. ५. राजलोकं K. K1. Jambû ed. ६. °नामायं प्राप्तः A. B. ७. कश्चित् A. B. ८. पदान्यभ्यासृत्य A. B. T. ९. कृतो न भवति दोष इति सन्दिश्य K. K2. Jambû ed. १०. °कमलभवन° B. ११. च यात्रा° A. B. T.

वर्धमानधवलच्छाये ताराधिपमण्डले वधूवदनलावण्यज्योत्स्नापरिपीततमसि प्रदोषे वृथोदितमुपहसत्स्विव रजनिकरमुत्तानितमुखेषु कुमुदवनेष्वाजगाम मुहुर्मुहुरुल्लासितस्फार[2]स्फुरितारुणचामरैर्मनोरथैरिवोत्थितै[3]रागाग्रपल्लवैः पुरोधावमानैः पादातैरुत्कर्णकटकहयप्रतिहेषितदीयमानस्वागतैरिव च वाजिनां वृन्दैरापूरितदिग्विभागश्चलकर्णचामराणां चामीकरमयसर्वोपकरणानां [4]वर्णकलम्बिनां बलिनां घण्टा[5]टाङ्कारिणां करिणां घटाभिर्घटयन्निव पुनरिन्दूदयविलीनमन्धकारं नक्षत्रमालामण्डितमुखीं करिणीं निशाकर इव पौरन्दरीं दिशमारूढः प्रकटितविविधविहगविरुतैस्[6]तालावचरचारणैः पुरःसरैर्बालो[7] वसन्त इवोपवनैः क्रियमाणकोलाहलो गन्धतैलावसेकसुगन्धिना दीपिकाचक्रवालालोकेन कुङ्कुमपटवासधूलिपटलेनेव पिञ्जरी कुर्वन्सकलं लोकमुत्फुल्लमल्लिकामुण्डमालामध्याध्यासितकुसुमशेखरेण शिरसा हसन्निव सपरिवेषक्ष[9]पाकरं कौमुदीप्रदोषमात्मरूपनिर्जितमकरकेतुकरापहृतेन कार्मुकेणेव कौ[10]सुमेन दाम्ना विरचितवैकक्षकविलासः । [11]कुसुमसौरभगर्वभ्रान्तभ्रमरकुलकलकलप्रलापसुभगः पारिजात इव जातः श्रिया सह पुनरवतारितो मेदिनीं नववधूवदनावलोककुतू[12]हलेनेव कृष्यमाणहृदयः पतन्निव मुखेन प्रत्यासन्नलग्नो ग्रहवर्मा [13]त्वरितमाजगाम । राजा तु तमु[14]पद्वारमागतं चरणाभ्यामेव राजचक्रानुगम्यमानः ससुतः [15]प्रत्युज्जगाम । अवतीर्णं च तं कृतनमस्कारं [16]मन्मथमिव माधवः

वर्धमान इत्यादि सन्ध्यारागरहितत्वाद्वर्धमानं शरावस्तेन च धवलच्छायं । तद्धि मक्कोललिप्तं विवाहे क्रियत इत्याचारः । स्फारः स्फोटकः । पुरोधावमानैरिति साधारण । पादातैः पदातिसमूहैः । राज्यश्रिया नृपतिलक्ष्म्यापि ।

१. A. B. omit आजगाम. २. °फारस्फुरितः A. B T. °सस्फारकः स्फुरित° K. K1. ३. उत्कृतरागाय पल्लवैः A. B. ४. वर्णकम्बलिनां बलिनां बलिनां K. वर्णकम्बलिनां घण्ट° A. B. ५. °टङ्कारिणां A. B. ६. °तालाचरण° A. °तालचरण° B. ७. बालवसन्तः A. B. T. ८. °जालेनेव A. B. ९. °क्षिपाकरं A. B. १०. कौमुकेन धाम्ना A. B.; *secunda manu* corrected to नाम्ना in A. ११. कुसुमगन्धसौरभभ्रान्त° A. B. १२. °कुतूहलहेलाकृष्यमाण° A. B. T. १३. K. K1. K2. Jambū ed omit this. १४. तमपरद्वारमुपागतं A. B. T. १५. प्रत्याजगाम A. B. १६. मन्दरमिव A. B.

प्रसारितभुजो गाढमालिलिङ्ग यथाक्रमं परिष्वक्तराज्यवर्धनहर्षं च हस्ते गृहीत्वाभ्यन्तरं निन्ये । स्वनिर्विशेषासनदानादिना चैनमुपचारेणोपचचार । न चिराच्च गम्भीरनामा नृपतेः प्रणयी विद्वान्द्विजन्मा ग्रहवर्माणमुवाच । तात त्वां प्राप्य चिरात्खलु राज्यश्रिया घटितौ तेजोमयौ सकलजगद्गीयमानबुधकर्णानन्दकारिगुणगणौ सोमसूर्यवंशाविव पुण्यभूतिमुखरवंशौ। प्रथममेव[1] कौस्तुभमणिरिव गुणैः स्थितोसि हृदये देवस्य । इदानीं तु शशीव शिरसा परमेश्वरेणासि वोढव्यो जात इति । एवं वदत्येव त[2]स्मिन्नृपमुपसृत्य मौहूर्तिका देव समासीदतिलग्नवेला व्रजतु जामाता कौतुकगृहमित्यूचुः । अथ न[3]रेन्द्रेणोत्तिष्ठ गच्छेति गदितो ग्रहवर्मा प्रविश्यान्तः[4]पुरं जामातृदर्शनकुतूहलिनीनां स्त्रीणां पतितानि लोचनसहस्राणि विकचनीलकुवलयवनानीव लङ्घयन्नाससाद कौतुकगृहद्वारं निवारितपरिजनश्च प्रविवेश । अथ तत्र कतिपयाप्तप्रियसखीस्वजनप्रमदाप्रायपरिवारामरुणांशुकावगुण्ठितमुखीं प्रभातसन्ध्यामिव स्वप्रभया निष्प्रभान्प्रदीपकान्कुर्वाणामतिसौकुमार्यशङ्कितेनेव यौवनेन नातिनिर्भरमु[5]पगूढां साध्वसनिरुध्यमानहृदयदेशदुःखमुक्तैर्नि[6]भृतायतैः श्वसितैर[7]पयान्तं कुमारभावमिवानुशोचन्तीमत्युत्कम्पिनीं पतनभियेव त्रपया निःस्पन्दं धार्यमाणं हस्तं तामरसप्रतिपक्षमासन्नग्रहणं शशिनमिव रोहिणीं भयवे[9]पमानमानसमवलोकयन्तीं चन्दनधवलतनुलतां ज्यो[10]त्स्नांदानसंचितलावण्यात्कुमुदिनीगर्भादिव प्रसूतां कु-

घटितौ योजितौ मुक्तौ च। बुधकर्णौ पण्डितश्रोत्रे सोमसूर्यसूनू च। गुणैरुत्कर्षैस्तन्तुभिश्च। हृदये चेतसि वक्षसि च। देवस्य राज्ञो विष्णोश्च । परमेश्वरेण राज्ञा हरेण च । कौतुकगृहं विवाहमङ्गलवेश्म । अथेत्यादौ तत्र वधूमपश्यदिति सम्बन्धः। अरुणांशुकं लोहितं वस्त्रमरुणस्याल्पेंशवोंशुकाः । निभृतैर्गुप्तैः। प्रतिपक्षस्तुल्यः शत्रुश्च। ग्रहणं हस्तस्य स्वीकारः शशिनश्च ग्रहणं। समासन्नं भवति।

१. एककौस्तुभ° B. २. तस्मिन्नुपसृत्य A. B. T. ३. नरेन्द्रोत्तिष्ठ A. ४. अभ्यन्तरं A. B. ५. उपारूढां K.2 Jambû ed. ६. निवृतायतैः A. B. K2. ७. उपायान्तं A. B. ८. पतनभयत्रोपाया निश्चेष्टं A. B.; *secunda manu* corrected to पतनभयेनेवोपाता in A. ९. °वेपमान साम° A. B. १०. °पान° A. B.

सुमामोदनिर्हारिणीं वसन्तहृदयादिव निर्गतां निःश्वासपरिमलाकृष्टम-धुकरकुलां[1] मलयमारुतादिवोत्पन्नां कृतकन्दर्पानुसरणां रतिमिव पुनर्जातां [2]प्रभालावण्यमदसौरभमाधुर्यैः कौस्तुभशशिमदिरापारिजातामृतप्रभवैः सर्वरत्नगुणैरपरामिव सुरासुररुषा रत्नाकरेण कल्पितां श्रियं स्निग्धेन बालिकालोकेन सितसि[3]न्धुवारकुसुममञ्जरीभिरिव मुक्तादीधितिभिः कल्पितकर्णावतंसां कर्णाभरण[4]मरकतप्रभाहरित[5]शाद्वलेन कपोलस्थलीतलेन विनोदयन्तीमिव हारिणीं विलोचनच्छायाम[6]धोमुखीं वरकौतुकालोकनाकुलं मुहुर्मुहुः कृतमुखोन्नमनप्रयत्नं सखीजनं हृदयं च निर्भर्त्सयन्तीं वधूमपश्यत। प्रविशन्तमेव च तं हृदयचौरं बध्वा समर्पितं जग्राह कन्दर्पः। परिहासस्मेरमुखीभिश्च नारीभिः कौतुकगृहे [7]यद्यत्कार्यते जामाता [8]तत्तत्सर्वमतिपेशलश्चकार कृतपरिणयानुरूपवेशपरिग्रहां गृहीत्वा करे वधूं निर्जगाम। जगाम च नवसुधाधवलां निमन्त्रितागतैस्तुषारशै[9]लोपत्यकामिव त्र्यम्बकाम्बिकाविवा[10]हाहूतैर्भूभृद्भिः परिवृतां सेकसुकुमारयवाङ्कुरदन्तुरैः पञ्चास्यैः क[11]लशैः कोमलवर्णिकाविचित्रैरमित्रमुखैश्च म[12]ङ्गल्यफलहस्ताभिरञ्जलिकारिकाभिरुद्भासितपर्यन्तामुपाध्यायो[13]पधीयमानेन्धनधूमायमानाग्निसन्धुक्षणाक्षणिकोपद्रष्टृद्वि[14]जामुपकृ-

उद्गमनं सौरभमिति। अन्ये प्रभादीनां कौस्तुभादिभिर्यथासंख्यम्। बालिका ऊर्मिका कौमा[15]री च। विनोदयन्तीं प्रथयन्तीम्। हारिणीं रम्यां मार्गीं च। मृगलोचनच्छायां नीलशाद्वलेन [16]स्थलीतले क्रीडति। कौतुकालोकनाकुलं द्वयमपि साधारणम्। बध्वा राज्यश्रिया। अथ वेदीं जगामेति सम्बन्धः। उपत्यकाद्रेः समासन्ना भूः। भूभृन्नृपो गिरिश्च। वर्णिका खटिका। अमित्रमुखै रूप्यमयैः शत्रुमुखैश्च। अञ्जलिकारिकाभिर्मृन्मयप्रतिमाभिः सालभञ्जिकाभिर्वा। अक्षणिको व्यग्रः। उपद्रष्टा साक्षी।

---

१. °आलां A. B. २. प्रभातलावण्यविलाससौरभ° A. B. ३. °सिन्दुवार° A. B. T. ४.°मरक्त° A., *secunda manu* corrected to मणिरक्त. ५. शाड्वले कपोलस्थलीतले A. B. ६. अधोमुखं K. Jambû ed. ७. यद्यत्कार्यते A. B. ८. तत्सर्वमपि पेशलतया चकार कारितपरिणयनानुरूपवेषपरिग्रहां च A. B. ९. शैलोत्पत्तिकामिव A. B. १०. °विवाहावाहूतैः A. °विवाहायाहूतैः B. ११. कलशैरनेकवर्णिकाविचित्रैरमन्त्र° A. B. T. १२. माङ्गल्यफलहस्ताभिश्चाञ्जलि° A. B. १३. उपानीयमानेन्धन° A. B. १४. °जिह्वां A. B. T. १५. कुमारी C1. १६. स्थलीतल्पे C1. C2.

शानुनिहितानुपहतहरितकुशां सन्निहितदृषद[1]जिनाज्यस्रुक्समित्पूलीनिव-
हां नूतनशूर्पा[2]र्पितश्यामलशमीपलाशमिश्रलाजहासिनीं वेदीमारुरोह च
तां दिवमिव सज्योत्स्नः शशी । समुत्ससर्प च वेल्लितारुणशिखापल्लवस्य
शिखिनः कुसुमायुध इव रतिद्वितीयो रक्ताशोकस्य समीपं । हुते च
हुतभुजि प्रदक्षिणावर्त्तप्रवृत्ताभिर्वधूवदनविलोकनकुतूहलिनीभिरिव ज्वाला-
भिरेव सह प्रदक्षिणं बभ्राम । पात्यमाने च लाजाञ्जलौ नखमयूखधव-
लिततनु[3]रदृष्टपूर्ववधूवररूपविस्मयस्मेर इवादृश्यत विभावसुः । अत्रान्तरे
स्वच्छकपोलोदरसङ्क्रान्तमनलप्रतिबिम्बमिव निर्वापयन्ती स्थूलमुक्ताफल-
विमलबा[4]ष्पबिन्दुसन्दोहदर्शितदुर्दिना निर्वदन[5]विकारं रुरोद वधूः । उदस्रु
विलोचनानां च बान्धववधूनामुदपादि महानाक्रन्दः । परिसमापितवै-
वाहिकक्रियाक[6]लापस्तु जामाता वध्वा समं प्रणनाम श्वशुरौ । प्रविवेश
च द्वारपक्षकलिखितरतिप्रीतिदैवतं प्रणयिभिरिव प्रथमप्रविष्टैरलिकुलैः
कृतकोलाहलमलिकुलपक्षपवनप्रेङ्खोलितैश्च कर्णोत्पलप्रहारभयप्रकम्पितैरिव
मङ्गलप्रदीपैः प्रकाशितमेकदेश[7]लिखितस्तवकितरक्ताशोकतरुतलभाजा-
धिज्यचापेन तिर्यक्कूणितनेत्रत्रिभागेन शरमृजू[8]कुर्वता कामदेवेनाधिष्ठि-
तमेकपार्श्वन्यस्तेन का[9]ञ्चनावामनकेनेतरपार्श्ववर्त्तिन्या च द[10]न्तशफरु-
कधारिण्या कनक[11]पुत्रिकया साक्षाल्लक्ष्म्येवोद्दण्ड[12]पुण्डरीकहस्तया सनाथेन
सोपधानेन स्वास्तीर्णेन शयनेन शोभमानं शयनशिरोभागस्थितेन च
कृतकुमुदशोभेन[13] कुसुमायुधसा[14]हायकायागतेन शशिनेव निद्राकलशेन रा-

उपदिश्य इति केचित् स्रुग्घोमभाण्डम् । वेल्लिता वलिताः । शिखा ज्वालाः
शिखाग्राणि च । पल्लवाः प्रान्ताः किसलयानि च । शिखिनो वृक्षस्यापि । उक्तं
च । अग्निः शिखीति च प्रोक्तः शिखी वृक्षो निगद्यते । बर्हिणश्च शिखी
प्रोक्तः क्वचित्स्यात्कुक्कुटः शिखीति च । निर्वापयन्ती गमयन्ती । प्रविवेशे-
त्यादौ जामाता वासगृहमिति सम्बन्धः । पक्षः पार्श्वं । कूणितः सङ्कोचितः ।

---

१. अजिनश्रुवलसमित्° A.B. २. °श्यामाक° A.B. ३. °तनुर्दृष्टापूर्व° A.B. ४. °वाष्पोद° A. B. T. ५. °निगूढवदनविकारारुरोद A. B. ६. °कालापस्तु A. B. T. ७. °लिखितेन कूर्वाङ्कित° A. B. ८. शरमृजुं कुर्वता. A. B. ९. काञ्जनचामरकेन K2. Jambû ed. १०. दण्ड° A. B. ११. °पुत्तिकया K1. K2. Jambû ed. १२. °पद्महस्तया समाहितो- पधानेन A. B. १३. शोभ° A. B. T. १४. °साहायकागतेन A. B.

जतेन विराजमानं वासगृहम् । तत्र च ह्रीतायां[1] नववधूकायाः पराङ्मुख-प्रसुप्तायाः [2]मणिभित्तिदर्पणेषु प्रमुखप्रतिबिम्बानि प्रथमालापाकर्णनकौतुकागतगृह[3]देवताननानीव मणिगवाक्षकेषु वीक्षमाणः क्षणदां निन्ये । स्थित्वा च श्वशुरकुले शीलेनामृतमिव श्वश्रूहृदये वर्षन्नभिनवाभिनवो[4]पचारैरपुनरुक्तान्यानन्दमयानि दशदिनानि दत्त्वा च राजदौवारिकमिव राजकुले रणरणकं यौतकनिवेदितानीव शम्[5]बलान्यादाय हृदयानि सर्वलोकस्य कथं कथमपि विसर्जितो नृपेण वध्वा सह स्वदेशमगमदिति ॥

[6]इति श्रीमहाकविचक्रचूडामणिश्रीबाणभट्टविरचिते हर्षचरिते महाकाव्ये चक्रवर्त्तिजन्मवर्णनं नाम चतुर्थ उच्छ्वासः सम्पूर्णः ॥ ४ ॥

क्षणदां रात्रिं । दशदिनानि स्थित्वेति सङ्गतिः । यौतकं सुदायः । [8]इति श्रीशङ्करविरचिते श्रीहर्षचरितसङ्केते चतुर्थ उच्छ्वासः सम्पूर्णः ॥४॥

---

१. ह्रिया A. B. २. अनुभित्ति° A. B. T. ३. देवतावदनानीव A. B. ४. उपचारैर्न पुनरुक्तानि A. B. ५. A. B. omit शम्बलानि. ६. चक्रवर्त्तिजन्मा चतुर्थ उच्छ्वासकः सामासः A. B. T. ७. °कृतौ $K_1$. $K_2$. Jambû ed. ८. इति श्रीहर्षचरितसङ्केते चतुर्थ उच्छ्वासः $C_1$ $C_2$. Jambû ed.

# ॥ पञ्चम उच्छ्वासः प्रारभ्यते ॥



[1]नियतिर्विधाय पुंसां प्रथमं सुखमुपरि दारुणं दुःखम् ।
कृत्वा लोकं तरला तडिदिव वज्रं निपातयति ॥ १ ॥
पातयति महापुरुषान्सममेव बहूननादरेणैव ।
परिवर्त्तमान एकः कालः शैलानिवानन्तः ॥ २ ॥

अथ कदाचिद्राजा राज्यवर्धनं[2] कवचहरमाहूय हूनान्[3] हन्तुं हरिणानिव हरिर्हरिणेशकिशोरकमपरिमितबलानुयातं चिरन्तनैरमात्यैरनुरक्तैश्च महासामन्तैः कृत्वा साभिसरमुत्तरापथं प्राहिणोत् । प्रयान्तं च तं देवो हर्षः कतिचित्प्रयाणकानि तुरङ्गैरनुवव्राज[4] । प्रविष्टे च कैलासप्रभाभासिनीं[5] ककुभं भ्रातरि निवर्त्तमानो नवे वयसि विक्रमरसानुरोधिनि केसरि[6]शरभशार्दूल[7]वराहबहुलेषु तुषारशैलोपकण्ठेषूत्कण्ठ[8]मानवनदेवताकटाक्षांशुशा-

नियतोत्यादि । नियतिर्दैवम् । लोकं जनं । तडिद्विद्युत् । तडिदपि तरला । आलोकं कृत्वा वज्रं निपातयति ॥ १ ॥

अनन्तः पर्यन्तरहितः शेषभट्टारकश्च । आर्यायुगलेनानेन भाविनी राजविपत्तिः सूचिता ॥ २ ॥

कवचहर इति वयसि नित्यं । बलं सैन्यं सामर्थ्यं च । साभिसरं ससहायं । केसरिणः सिंहाः । अष्टपादाः प्राणिविशेषाः शरभाः । शार्दूला व्याघ्राः । वराहाः सूकराः ।

१. K. K.1 K2. C1. C2. Jambû ed. prefix ओं. २. राजवर्धनं A. B. K. ३. हूणान् A. B. ४. अनुवव्रजे A. B. ५. °हासिनीं. A. B. ६. अनुरोधिनि वर्तमानः केसरि° A. B. T. ७. °शरभवराहशार्दूल° A. B. ८. उत्कण्ठ्यमान° A. B.

रिनशरीर[1]कान्तिः क्रीडन्मृगयां मृगलोचनः कतिपयान्यहानि बहिरेव व्यलम्बत। चकार [2]चाकर्णान्ताकृष्टकार्मुकनिर्गतभास्वरभल्लवर्षी स्वल्पीयोभिरेव दिवसैर्निःश्वासप्रदान्यरण्यानि । एकदा तु वासतेय्यास्तुरीये यामे प्रत्युषस्येव स्वप्ने चटुलज्वालापुञ्ज पञ्जरीकृतसकलककुभा दुर्निवारेण [3]दैवहुतभुजा दह्यमानं केसरिणमद्राक्षीत् । तस्मिन्नेव च दावदहने समुत्सृज्य शावकानुत्प्लुत्य चात्मानं पातयन्तीं सिंहीमपश्यत् । आसीच्चास्य [4]चेतसि लोके हि लोहेभ्यः कठिनतराः खलु स्नेहमया बन्धनपाशा [5]यैदाकृष्टास्तिर्यञ्चोऽप्येवमाचरन्तीति प्रतिबुद्धस्य चास्य मुहुर्मुहुर्दक्षिणेतरमक्षि पस्पन्दे [6]गात्रेषु चाकस्मादेव विपथुर्विपप्रथे। [7]निर्निमित्तमेवान्तर्बन्धनस्थानाच्चचालेव हृदयम् । अकारणादेव चाजायत गरीयसी दुःखासिका किमिदमिति च [8]समुत्पन्नविविधविकल्पविमथितमतिरपगतधृतिश्चिन्तावनमितवदनः स्तिमिततारकेण चक्षुषा समुद्भिद्यमानस्थलकमलिनीवनामिव चकार चकोरेक्षणः क्षणं क्षोणीम् । अह्नि च तस्मिञ्छून्येनैव च चेतसा [9]चिक्रीडे मृगयामारोहति च हरितहये मध्यमह्नो भवनमागत्योभयतो [10]मन्दमन्दं सम्वाह्यमानतनुतालवृन्तः क्षितितलविततामतिशिशिरमलयजरसलवलुलितवपुषमिन्दुधवलोपधानधारिणीं [11]वेत्रपट्टिकामधिशयानः साशङ्क एव तस्थौ । अथ दूरादेव च लेखगर्भया [12]नीलीरागमेचकरुचा [13]चैलचीरिकया रचि-

क्रीडन् मृगयामिति। कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम् । इति भावार्थरूपाया मृगयायाः कर्मभावः। वासतेयी रात्रिः। तुरीये चतुर्थेऽहनि। सम्वाह्यमानं भ्राम्यमाणम् । लुलितं व्याप्तम् । अथेत्यादौ दूरादेव कुरङ्गमनामानमध्वगमापतन्तमद्राक्षीदिति सम्बन्धः । नीली नामौषधिः । बर्हिकण्ठसमानो मेचकः ।

---

१. °क्रान्तिः A. B. २. चाकर्णाकृष्टभासुरभल्लवर्षी स्वल्पैरेव A. B. T. ३. दाव° A. B. T. ४. मनसि A. B. ५. यैराकृष्टा°. A. B. T. ६. गात्रेष्वकस्मादेव च A. B. ७. निर्निमित्तमन्तर्बन्धनं A. B. ८. समुपनतविविधविकल्पविमर्दितमतिरपगतधृतिश्चिन्तावनतवदनस्तिमित° A. B. T. ९. क्रीडन्मृगयां A. B. T. १०. मन्दं मन्दं A. B. ११. वेत्रपेटिकाम° K. Jambū ed. १२. नीलराग° A. B. T. १३. चेलचीरकया A. B. T.

तमुण्डमालिकं श्रमातपाभ्यामारोप्यमाणकायकालिमानमन्तर्गतेन शोकशिखिनाङ्गारतामिव नीयमानमतित्वरागमनद्रुततरपदोद्धूयमानधूलिराजिव्याजेन राजवार्त्ताश्रवणकुतूहलिन्या मेदिन्येवानुगम्यमानमभिमुखपवनप्रेङ्खत्प्रविततोत्तरीयकर्पटप्रान्तवीज्यमानोभयपार्श्वमतित्वरया कृतपक्षमिवाशु परापतन्तं प्रेर्यमाणमिव पृष्ठतः स्वाम्यादेशेनाकृष्यमाणमिव पुरस्तादायतैः श्रमश्वासमोक्षैः स्विद्यल्ललाटतटघटमानप्रतिबिम्बकेन कार्यकौतुकादपह्नियमाणलेखमिव भास्वतासम्भ्रमभ्रष्टैरिवेन्द्रियैस्तुच्छीकृतशरीरं लेखार्पितप्रयोजनगौरवादिव समेपि वर्त्मनि शून्यहृदयतया स्खलन्तं कालमेघशकलमिव पतिष्यतो दुर्वार्त्तावज्रस्य धूमपल्लवमिव ज्वलिष्यतः शोकज्वलनस्य बीजमिव फलिष्यतो दुष्कृतशालेर्निमित्तभूतदीर्घाध्वगं कुरङ्गकनामानमायान्तमद्राक्षीत् । दृष्ट्वा च पूर्वां निमित्तपरम्पराविर्भावितभीतिरभिद्यत हृदयेन कुरङ्गकस्तु कृतप्रणामः समुपसृत्य प्रथममाननलग्नं विषादमुपनिन्ये पश्चाल्लेखं तं च देवो हर्षः स्वयमेवादायावाचयत् । लेखार्थेनैव च सर्मं गृहीत्वा हृदयेन सन्तापमवग्रहरूपोभ्यधात् । कुरङ्गक किं मान्द्यं तातस्येति स च चक्षुषा बाष्पजलबिन्दुभिर्मुखेन च खञ्जाक्षरैः क्षरद्भिर्युगपदाचचक्षे देव दाहज्वरो महानिति । तच्चाकर्ण्य सहसा सहस्रधेवास्य हृदयं पफाल कृताचमनश्च जनयितुरापुष्कामोपरिमितमणिकनकरजतजातमात्मपरिबर्हमशेषं ब्राह्मणसादकरोत् । अभुक्त एवोच्चचाल दापय वाजिनः पर्याणमिति च पुरःस्थितं शिरःकृपाणं बिभ्राणं बभाण युवानं वेपमानहृदयश्च स सम्भ्रमप्रधावितपरिवर्धकोपनीतमारुह्य तुर-

आरोप्यमाणः क्रियमाणः । इन्द्रियैरिति शून्यत्वं तेषां जडत्वावाप्तेः । शकलं खण्डम् । पफाल पुस्फोट । जातेति शब्दः प्रकारे । परिबर्हो भोजनादिपरिच्छेदः । ब्राह्मणसाद्ब्राह्मणाधीनं । न भुक्तमस्येत्यभुक्तः । शिरोदेशे स्थापितः कृपाणः । परिवर्धकोश्वपालः ।

१. अतिद्रुततरपादो° A. B. T. २. °पट° K. K1. °पद° Jambû ed. ३. कृतमिवाशुतरमापतन्तं A. B. T. ४. शून्यीकृत° A. B. T. K. ५. दुःखवार्त्ता° A. B. T. ६. दुःकृतद्रुमस्य निमित्तभूतं A. B. T. ७. अभिद्यतेव A. B. T. ८. स्वयमेवावाचयत्. A. B. T. ९. सह A. B. १०. सन्तापमाविग्न° A. सन्तापमालिम्नरूपो° B. ११. A. B. T. omit खञ्ज. १२. अभुक्तवानेव A. B. T. १३. पुरःस्थितः कृपाणं बिभ्रत्परिवर्धको° A. B. T. K2. १४. इन्द्रियशून्यत्वं C1. C2. १५. पल्लवं खण्डः C1. C2. १६. भुक्तमस्येति भुक्तः C1. C2.

ङ्गममेकावयेव प्रावर्त्तत।अकाण्डप्रयाणसंज्ञाशङ्काक्षुभितं तु सम्भ्रमात्सज्जीभूतमुद्भूतमुखरखुररवभरितसकलभुवनविवरमागत्यागत्य सर्वाभ्यो दिग्भ्यो धावमानमश्वीयमढौकत। प्रस्थितस्य चास्य प्रदक्षिणेनरं प्रयान्तो विनाशमुपस्थितं राजसिंहस्य हरिणाः प्रकटयां बभूवुः। अशिशिररश्मिमण्डलाभिमुखश्च हृदयमवदारयन्निव दावशुष्के दारुणि दारुणं रराण वायसः। कज्जलमय इव बहुदिवसमुपचितबहलमलपटलमलिनिततनुरभिमुखमाजगाम शिखिपिच्छलाञ्छनो नग्नाटकः। दुर्निमित्तैरनभिनन्द्यमानगमनश्च नितरामशङ्कत हृदयेन। पितृस्नेहाहितम्रदिम्ना च तत्तदुपेक्षमाणस्तुरङ्गमस्कन्धबद्धलक्ष्यं चक्षुरविचलं दधानः दुःसमवसितहसितसङ्कथस्तूष्णीं भूतेन भूपाललोकेनानुगम्यमानो बहुयोजनँसम्पिण्डितमध्वानमेकेनैवाह्ना समलङ्घयत्। उपलब्धनरेन्द्रमान्द्यवार्त्ताविषण्ण इव नष्टतेजस्यधोमुखीभवति भगवति भानुमति भण्डिप्रमुखेन प्रणयिना राजपुत्रलोकेन बहुशो विज्ञाप्यमानोपि नाहारमकरोत्। पुरः प्रवृत्तप्रतीहारगृह्यमाणग्रामीणपरम्पराप्रकटितप्रगुणवर्त्मा च वहन्निव निन्ये निशाम्। अन्यस्मिन्नहनि मध्यन्दिने विगतजय[10]शब्दमस्तमिततूर्यनादमुपसंहृतगीतमुत्सरितोत्सवमप्रगीतचारणमप्रसारितापणपण्यं स्थानस्थानेषु पवनबल[11]कुटिलाभिः कोटिहोमधूमलेखाभिरुल्लसन्तीभिर्यममहिषविषाणकोटिभिरिवोल्लिख्यमानं[12] कृतान्तपाशवागुराभिरिवावेष्ट्यमानमुपरिकालमहिषालङ्कारकालायसकिङ्किणीभिरिव कटुक्वणन्तीभिर्दिवसं वायसमण्डलीभिर्भ्रमन्तीभिरावेद्यमान-

प्रावर्त्ततेत्यर्थाद्गन्तुं। अश्वीयमश्वसमूहः। सिंहशब्दः प्रशंसायां। हरिणा इति। मृगा हि स्वैरं चरन्तः सिंहस्य विनाशभावं सूचयन्ति। नग्नाटको नग्नक्षपणकः। तुरङ्गम [13]इति चक्षुर्विशेषणं। दुःखेन समवसितानि वृत्ता सङ्कथा कथनं यस्य सः। सम्पिण्डितं सङ्कलितं। प्रगुणं स्पष्टं। वहन्नविश्रान्तिं गच्छन्। अन्यस्मिन्नित्यादौ स्कन्धावारं समाससादेति सम्बन्धः। आपणेषु हट्टेषु पण्यं विक्रेयं वस्तु। कालो यमः। कालायसं लोहजातिभेदः। किङ्किण्यः सूक्ष्मघण्टिकाः।

---

१. तत्र A. B. २. सज्जीभूतं मुखर° A. B. T. ३. प्रदक्षिणोत्तरं A. B. T. ४. °बिम्बा° A. B. ५. दारुणो रेफप्रायं रराम A. B. T. ६. दुर्निमित्तैरभिनन्द्यमानश्च नितरामशङ्कत हृदयेन। पितृस्नेहाहितप्रदिम्ना च मनसा तत्तदुत्प्रेक्षमाणं तुरङ्गस्कन्धबद्धलक्ष्यं A. B. T. ७. सम्मित° A. B. T. ८. °मण्डलेन A. B. ९. वहन्नेव निशां A. B. T. १०. °ज्ञान° A. B. ११. °चलन° A. B. T. १२. उल्लेख्यमानं A. B. १३. इत्यादि C1. C2.

प्रत्यासन्नाशुभं क्वचित्प्रतिशायितस्निग्धबान्धवा[1]राध्यमानाहिर्बुध्नं क्वचिद्दी-
पिकाद[2]हनदह्यमानकुलपुत्रकप्रसाद्यमानमातृमण्डलं क्वचिन्मुण्डो[3]पहाराह-
रणोद्यतद्रविडप्रार्थ्यमानामर्दकं क्वचिदान्ध्रोद्ध्रियमाणबा[4]हुवप्रोपयाच्यमानच-
ण्डिकमन्यत्र शिरोविधृतविलीयमानबह[5]लगलद्गुग्गुलुवि[6]कलनवसेवकानु-
नीयमानमहाकालमपरत्र निशित[7]शस्त्रीनिकृत्तात्ममांसहोमप्रसक्ताप्लव-
ग[8]मपरत्र प्रकाशनरपतिकुमारकाक्रियमाणमहामांसविक्रयप्रक्रममुपहत-
मिव श्मशान[9]पांसुभिरमङ्गलैरिव परिगृहीतं यातुधानैरिव विध्वस्तं
कलिकालेनेव कवलितं पापपटलैरिव स[10]ञ्छादितमधर्मविक्षेपैरिव लु-
ण्ठितमनित्यताधिकारैरिवाक्रान्तं नि[11]यतिविलासैरिवात्मीकृतं शून्यमिव
[12]सुप्तमिव मुषितमिव विलक्षितमिव छलितमिव मूर्च्छितमिव स्क-
न्धावारमाससाद । प्रविशन्नेव च विपणिवर्त्मनि कुतूहलाकुलब[13]हलबा-
लकपरिवृतमूर्ध्वयष्टि[14]विष्कम्भवितते वामहस्तवर्त्तिनि भीषणमहिषाधि-
रूढप्रेतनाथसनाथे चित्रवति पटे परलोकव्यतिकरमितरकरकलितेन
शरकाण्डेन कथयन्तं यमपटिकं ददर्श। तेनैव च गीयमानं श्लोकमशृणोत्।

मातापितृसहस्राणि पुत्रदारशतानि च ।
युगे युगे व्यतीतानि कस्य ते कस्य वा भवानिति ॥

तेन चाधिकतरमवदीर्यमाणहृदयः क्रमेण राजद्वारं प्रतिषिद्धसकललो-
कप्रवेशं ययौ । [15]तुरगादवतीर्णश्चाभ्यन्तरान्निष्क्रामन्तमप्रसन्नमुखरा-
गमुन्मुक्तमिवेन्द्रियैः सुषेणनामानं वैद्यकुमारकमद्राक्षीत् । कृतन-
मस्कारं च तमप्राक्षीत् । सुषेणास्ति तातस्य विशेषो नवे-
ति । [16]सोऽब्रवीन्नास्तीदानीं यदि भवे[17]त्कुमारं दृष्ट्वेति ।

प्रतिशायिता उपोषिताः । अहिर्बुध्नो हरः । मुण्डं शिरः । द्र-
विडा आन्ध्राश्च जनपदभेदाः । आमर्दको वेतालः । रौद्रदेवताभेद
इत्यन्ये । विष्कम्भोवष्टम्भः । विततः प्रसारिताः । व्यतिकरो वृत्तान्तः ।
यमपटेन जीवति यमपटिकाः। मन्दं मन्दमित्यादौ राजकुलं विवेशेति सम्बन्धः।

---

१. आराध्यमानव्रध्नं A. B. T. २. K. K1. Jambû ed. omit दहन. ३. उपहारकरणो° A. B. T. ४. वर्ग्रोपवाच्यमान° A. B. T. K. ५. K. K1. Jambû ed. omit बहल-गलत्. ६. °निकरवलिसेवका° K. °विकलसेवका° A. B. T. ७. °निस्त्रिंश° A. B. ८. A. B. T. read अन्यस्मिन् instead of अपरत्र. ९. °भस्मभिः A. B. १०. अवच्छादितं A. B. T. ११. नियतिबलविलसितैः A. B. T. १२. सुप्तमिव मूर्छितमिव छलितमिव मुषितमिव विलक्षमिव स्कन्धा° A. B. T. १३. °बहु° A. B. १४. °विष्टम्भ° A. B. १५. A. B. T. omit तुरगात्. १६. अवदत् A. B. १७. भवति A. B. १८. विष्टम्भो C1. C2.

मन्दं मन्दं द्वारपालैः[1] प्रणम्यमानश्च दीयमानसर्वस्वं पूज्यमानकु-
लदेवतं प्रारब्धामृतचरु[2]पचनक्रियं क्रियमाणषडाहुतिहोमं हूयमानपृ-
षदाज्यलवलिप्त[3]प्रचलद्दूर्वापल्लवं [4]पठ्यमानमहामायूरीप्रवर्त्यमानगृह[5]शान्ति-
निवर्त्यमानभूतरक्षाबलिविधानं प्रयतविप्रप्रस्तुतसंहिताजपं[6] जप्यमा-
नरुद्रै[7]कादशीशब्दायमानशिवगृहमतिशुचिशैवसम्पाद्यमानविरूपाक्षक्षीरक-
लशसहस्रस्नपनमजिरोपविष्टैश्चानासादितस्वामिदर्शनदूयमानमानसै[8]रभ्य-
न्तरनिष्पतितनिकटवर्त्तिपरिजननिवेद्यमानवार्त्तैर्वार्त्तीभूतस्नानभोजनशय-
नैरुज्झितात्मसंस्कारमलिनवेशै[9]र्लिखितैरिव निश्चलैर्नरपतिभिर्नीयमान-
[10]नक्तन्दिवं दुःखदीनवदनेन च प्रघनेषु[11] बद्धमण्डलेनोपांशुव्याहृतैः
केनचिच्चिकित्सकदोषानुद्भावयता[12] केनचिदसाध्यव्याधिलक्षणपदानि
पठता केनचिद्दुःस्वप्नानावेदयता केनचित्पिशाचवार्त्तां विवृण्वता
केनचित्कार्त्तान्तिकादेशान्प्रकाशयता केनचिदुपलिङ्गानि गायतान्येनानि-
त्यतां भावयता संसारं चापवदता कलिकालविलसितानि च निन्द-
ता दैवं चोपालभमानेना[13]परेण धर्माय कुप्यता राजकुलदेवताश्चा-
धिक्षिपतापरेणाक्लिष्टकुलपुत्रकभाग्यानि गर्हयता बाह्यपरिजनेन कथ्य-

अमृतचरुः शान्त्यर्थं चरुः । प्रजापतये स्वाहेति षण्णां देवतानां नाम गृहीत्वा षण्णामेवाहुतीनां प्रक्षेपः षडाहुतिहोम उच्यते । दधिघृते एकीकृत्य पृषदाज्यं । पृषदाज्यं सदध्न्याज इति कोशः । महामायूरी बौद्धविद्या । शैवमन्त्र इति केचित् । संहिता वेदपाठः संहितरूपः । रुद्रैकादशी शिवमन्त्रः । वार्त्तात आगतं वार्त्तीभूतं । प्रघनो बहिर्द्वारैकदेशः । कार्त्तान्तिको दैवज्ञः । उपलिङ्गान्युत्पाताः । अपवदता निन्दता ।

---

१. द्वारपालप्रण° A. B. T. २. चरुक्रियं A. B. T. K. ३. °प्रबल° A. B. T. ४. पच्यमानमहामयूरीकं A. B. T. ५. °ग्रहशान्तिकं A. B. ६. °रूपं A. B. T. ७. एकादशीयशब्दायमान° A. B. ८. °दर्शनहृदयमानसैः B. ९. °वेषैः A. B. १०. °नक्तन्दिनं A. B. ११. प्रघणेषु A. B. T. १२. उद्घोषयता केनचिदुपलिङ्गानि गायतान्येनानित्यतां भावयता संसारं चापवदता केनचिदसाध्यव्याधिपदानि पठता केन कार्त्तान्तिकादेशान्प्रकाशयता कलिकालविलसितानि निन्दता दैवं चोपलभमानेन धर्माय कुप्यतानेन राजकुलदेवताधिक्षिपतापरेण क्लिष्ट° A. B. T. १३. उपाल-भमानेनैव K

मानकष्टपार्थिवावस्थं राजकुलं विवेश । अविरलबाष्पपयः परिप्लुतलोचनेन पितृपरिजनेन वीक्ष्यमाणो विविधौषधि[1]द्रव्यद्रवगन्धगर्भमुत्क्वथतां क्वाथानां सर्पिषान्तैलानां च प्रपच्यमानानां गन्धमाजिघ्रन्नवाप तृतीयं कक्ष्यान्तरम् । तत्र चातिनिःशब्दे गृहावग्रहणीग्राहिबहुवेत्रिणि त्रिगुणतिरस्करिणीतिरोहितसुवीथीपथे पिहितपक्षद्वारके परिहृतकपाटर[2]टिते घटितगवाक्षरक्षितमरुति दूय[3]मानपरिचारके चरणताडनस्वनत्सोपानप्रकुपितप्रतीहारे निभृतसंज्ञानिर्दिश्यमानसकलकर्मणि ना[4]तिनिकटोपविष्टकङ्कटिनि कोणस्थिताह्वानचकिताचमनकवाहिनि चन्द्रशालिकालीनमूकमौललोके महाधिविधुरबान्धवाङ्गनावर्गगृहीतप्रच्छन्नप्रग्रीवके सञ्जवनपुञ्जितोद्विग्नपरिजने प्रविष्टकतिपयप्रणयिनि गम्भीरज्व[5]रारम्भभीतभिषजि दुर्मनायमानमन्त्रिणि मन्दायमानपुरोधसि सीदत्सुहृदि विद्राणविपश्चिति सन्तप्ताप्तसामन्ते विचित्तचामरग्राहिणि दुःखक्षामशिरोरक्षिणि क्षीयमाणप्रसादवित्तकमनोरथसम्पदि स्वामिभक्तिपरित्यक्ताहारहीयमानबलविकलवल्लभभूभृति क्षितितलपतितसकलरजनीजागरूकराजपुत्रकुमारके कुलक्रमागतकुलपुत्रकनिवहोह्यमानशुचि शोकसङ्कुचितकञ्चुकिनि निरानन्दवन्दिनि निःश्वसन्निराशासन्नसेवके निःसृ[6]तताम्बूलधूसराधरवारयोषिति विल[7]क्षवैद्योपदिश्यमानपथ्याहा[8]रणावहितपौरोगवेनुजीविपीयमा

द्रवौ रसः । तत्रेत्यादौ तत्र चैवंविधे धवलगृहे स्थितमीदृशं पितरमद्राक्षीदिति सम्बन्धः । गृहावग्रहणी देहली द्वारारम्भदेशः । वेत्रिणो द्वाःस्थाः । तिरस्करिणी जवनिका । सुवीथी धवलगृहस्याभ्यन्तरीकृता प्रच्छन्नमन्तर्द्वारं यत्पक्षद्वारं तदुच्यते । घटितो रक्षितः । निभृतं गुप्तं । आचमनवाही पानीयहारकः । चन्द्रशालिका धवलगृहस्योपरिप्रासादिका । आधिर्मानसी पीडा । सञ्जवनं चतुःशाला । विपश्चित्पण्डितः । आप्ता आश्वस्ताः । प्रसादेन वित्ताः प्रख्याताः प्रसादवित्ताः । जागरूका जागरणशीलाः । विलक्षो लज्जितः । पौरोगवो महानसाध्यक्षः ।

---

१. द्रव्यद्रवगर्भमुत्क्वथयतां क्वाथान्तैलानां सर्पिषां च A. B. T. २. °रणिते A. B. ३. अपचीयमान° A. B. ४. नातिनृपतिकटोपविष्ट° A. B; corrected *secunda manu* in A. ५. ज्वराभिभवभीत° A. B. T. ६. विसृत° A. B. ७. विलक्ष्य° A. B. T. ८. आहारा° A. B.

नोच्चचषकधारावारि[1]विनोद्यमानास्य शोषरुजि राजाभिलाषभोज्यमानबहु-भुजि भेषजसामग्रीसम्पादनव्यग्रसमग्रव्यवहारिणि मुहुर्मुहुराहूयमानतोय-कर्मान्तिकानुमितघोरातुरतृषि तुषारपरिकरितकर[2]कशिशिरीक्रियमाणोदश्वि-नि श्वेतार्द्रकर्पटार्पितकर्पूरपरागशीतलीकृतशलाके ना[3]ध्यानपङ्कलिप्यमान-नवभाण्डगतगण्डूषग्रहणमस्तुनि निम्यत्कोमलकमलिनी[4]पलाशप्रावृतमृदुमृ-णालके सनालनीलोत्पल[5]पूलीसनाथसलिलपान[6]भाजनभुवि धारानिपातनिर्वा-प्यमाणक्कथिताम्भसि पटुपाटलशर्करामोदमुचि [7]मञ्चकाश्रितसिकतिलकर्करी-[8]विश्रान्तान्तरचक्षुषि [9]सरसशैवलवलयितगलद्गोलयन्त्रके गल्वर्कशाला[10]जि-रोल्लासितलाजसाक्तु[11]निपीतमसारपारीपरिगृहीतकर्कशर्करे शिशिरौषधरस-चूर्णावकीर्णस्फटिकशुक्तिशङ्खसञ्चये सञ्चितप्रचुरप्राचीनामलकमातु-लुङ्गद्राक्षादाडिमादिफले प्रतिग्राहितविप्रप्रकीर्यमाणशान्त्युदकविप्रुषि प्रे-ष्याप्रेष्यमाणललाटलेपोपदिग्धहृषदि धवलगृहे स्थितं परलोकविजयाय नीराज्यमानमिव [12]ज्वरज्वलनेनानवरतपरिवर्त्तनैस्तरङ्गिणि शयनीये शेष-मिव विषोष्मणा क्षीरोदन्वति विचे[13]ष्ट्यमानं मुक्ताफलबालुकाधूलिधव-लितं जलधिमिव क्षयकाले शुष्यन्तं कालेन कैलासमिव दशानने-नोद्ध्रियमाणमविरतचन्दन[14]चर्चापराणां परिचारिकाणामत्युष्णावयवस्पर्श-

[15]उच्चचषकमपगतपानभाजनं । भेषजमौषधं । तोयकर्मान्तिका तोयकर्मशाला । करको जलभाण्डं । [16]मुखपूरणं गण्डूषः । शलाकाः पाषाणकणिकाः । निर्वा-प्यमाणं शीतलीक्रियमाणं । पाटलाः शर्कराविशेषाः । मञ्चका आधार-भेदाः । कर्करी वारिधानी । गोलयन्त्रकं बहुच्छिद्रं जलभाण्डम् । उल्लासिता विस्तारिताः । प्रतिग्राहिताः प्रतिग्रहं ग्राहिताः । प्रेष्या दासी । कालेन यमेन कृष्णेन च । दशाननो व्याधी राक्षसश्च ।

१. विनोद्यमानशोषरुजि A. B. T. २. °कर्करी° A. B. T. ३. अनाध्यान° A. B. ४. °पत्र° A. B. T. ५. °मूली° A. B. T. ६. °भोजन° A. B. ७. मञ्चिका° A. B. ८. °विश्रान्तातुरचक्षुषि A. B. ९. सरलशैवल° K. Jambû ed. १०. °लाल° A. B. ११. A. B. T. omit पीत. १२. ज्वरदहनेन K. K1. १३. विवेष्टयमानम्. K. K1. Jambû ed. १४. °चर्चापातिनीनां A. B. T. १५. तस्य-स्याच्चषकम° C1. C2.; *secunda manu* corrected to उच्चषकम° in C1. १६. असञ्जातो मुखे पूर्णे C2.

भस्मीभूतोदरैरिव धवलैः करैः स्पृश्यमानं लोकान्तरप्रस्थितं स्थास्नुना स्वयशसेव चन्दनानुलेपनच्छलेनापृच्छ्यमानमविच्छिन्नदीयमानकमलकुमुदेन्दीवरदलं कालकटाक्षपतनशबलमिव शरीरमुद्वहन्तं निबिडदुकूलपट्टनिपीडितकेशान्तकथ्यमानकष्टवेदनानुबन्धं मूर्धानं[1] धारयन्तं दुर्धरवेदनोन्नमन्नीलसिरा[2]जालककरालेन च कालाङ्गुलिलिख्यमानलेखाख्यातमरणावधिदिवससंख्यानेनेव[3] ललाटफलकेन भयमुपजनयन्तमासन्नयमदर्शनोद्वेगादिव च किञ्चिदन्तःप्रविष्टतारकं चक्षुर्[4]दधानं शुष्यद्दशनपङ्क्तिप्रसृत[5]धूसरदीधितितरङ्गिणीं मृगतृष्णिकामिवोष्णां[6] निःश्वासपरम्परामुद्वहन्तमत्युष्णनिःश्वासदग्धयेव च श्यामायमानया रसनया निवेद्यमानदारुणसन्निपातारम्भमुरःस्थलस्थापितमणिमौक्तिकहारचन्दनचन्द्रकान्तं कृतान्तदूतदर्शनयोग्यमिवात्मानं कुर्वाणमङ्गभङ्गवलनोत्क्षिप्तभुजयुगलं पर्यस्तहस्तनखमयूखैर्धारागृहमिव तापशान्तये रचयन्तं नेदिष्ठसलिलमणिकुट्टिमादर्शोदरेषु निपतद्भिः प्रतिबिम्बैरपि सन्तापातिशयमिव कथयन्तं स्पृशन्तीं प्रणयिनीमिव विश्रामभूमिं मूर्च्छामपि बहुमन्यमानमन्तकाह्वानाक्षरैरिव सभयभिषग्दृष्टैर[7]रिष्टैराविष्टं महाप्रस्थानकाले सर्वसन्तापसन्तानमाप्तहृदयेषु[8] सञ्चारयन्तमरतिपरिगृहीतमीर्ष्ययेव छायया विमुच्यमानमुद्योगमिवोपद्रवाणां सर्वास्त्रमोक्षमिव क्षामताया हस्तीकृतं विहस्ततया विषयीकृतं वैषम्येण क्षेत्रीकृतं[9] क्षयेण गोचरीकृतं ग्लान्या दष्टं दुःखासिकया आत्मीकृतमस्वास्थ्येन[10] विधेयीकृतं व्याधिना[11] क्रोडीकृतं कालेन लक्ष्यीकृतं[12] दक्षिणाशाया पीतमिव पीडाभिर्जग्धमिव जागरेण निगीर्णमिव वैवर्ण्येन ग्रासीकृतमिव गात्रभङ्गेन

आपृच्छ्यमानं ज्योत्क्रियमाणं । नेदिष्ठमन्तिकतमं । जिह्वा । रसना अरिष्टैर्दुर्लक्षणैः। अरतिरेकत्रानवस्थितिः। छाया कान्तिः। विहस्तोऽक्षमः। लक्ष्यीकृतमाघ्रातमित्यर्थः।

---

१. K1. Jambû ed. omit this word. २. °शिरा° A. B. T. ३. °संख्येनेव A. B. ४. K. K1. Jambû ed. omit this word. ५. °प्रसृति° A. B. ६. इवोष्णनिःश्वासपरम्परामुद्वहन्तमत्युष्णनिःश्वासनिर्दग्धयेव A. B. T. ७. °दृष्टैराविष्टं A. B. T. ८. स्वसन्तापमाप्तहृदयेषु संस्थापयन्तं A. B. T. ९. कक्षीकृतं A. B. T. १०. असात्म्येन A. B. ११. व्याधिभिः A. B. १२. लक्षीकृतं A. B.

ह्रियमाणमिव[1] विपद्भिर्वण्टयमानमिव[2] वेदनाभिर्लुण्ठयमानमिव दुःखैरादित्सितं[3] दैवेन निरूपितं नियत्या समाघ्रातमनित्यत्वेनाभिभूयमानमभावेन[4] परिकलितं परासुतया दत्तावकाशं क्लेशस्य[5] निवासं वैमनस्यस्य समीपे कालस्यान्तिकेन्तोच्छ्वासस्य मुखे महाप्रवासस्य द्वारि दीर्घनिद्राया जिह्वाग्रे जीवितेशस्य वर्त्तमानं विरलं वाचि चलितं चेतसि विह्वलं वपुषि क्षीणमायुषि प्रचुरं प्रलापे[6] सन्ततं श्वसिते[7] जितं जृम्भिकाभिः पराधीनमाधिभिरनुबद्धमनुबन्धिकाभिः पार्श्वोपविष्टया चानवरतरोदनोच्छूननयनया[8] गृहीतचामरिकयापि निःश्वसितैरेव[9] वीजयन्त्या त्रिविधौपधिधूलि[10]धूसरित[11]शरीरया मुहुर्मुहुरयंपुत्र स्वपिषीति व्याहरन्त्या देव्या यशोमत्या[12] शिरसि वक्षसि च स्पृश्यमानं पितरमद्राक्षीत् ॥

दृष्ट्वा च प्रथमं दुःखसम्पात[13]मध्यमानमनिराशङ्कित इव भागधेयेभ्यः समभवत् । अन्तकपरवर्त्तिनमेव च पितरममन्यत । निराकृत इव चान्तःकरणेन[14] क्षणमासीत् । अवधूतश्च धैर्येण क्षेत्रीकृतः क्षोभेण रिक्तीकृतो रत्या विषयीकृतो विषादेन पावकमयमिव[15] हृदयमुद्वहन्विषमविषदूषितानीव मुह्यन्तीन्द्रियाणि बिभ्राणस्तमसा रसातलमपि[16] विशोषयञ्छून्यत्वेनाकाशमप्यतिशयानो नाविन्दत[17] कर्त्तव्यं परस्पर्श च हृदयेन प्रियमुत्तमाङ्गेन च गां । अवनिपतिस्तु दूरादेव दृष्ट्वातिदयितं तनयं तदवस्थोपि निर्भरस्नेहावर्जितः प्रधावमानो मनसा प्रसार्य भुजावेह्येहीत्याह्वयञ्छरीरार्धेन शयनादुदगात् । ससम्भ्रममुपसृतं चैनं विनया-

वण्टचमानं भागीक्रियमाणं । जीवितेशो यमः । अनुबन्धिका गात्रसन्धिपीडा । भागधेयेभ्यो दैवेभ्यः । अन्तःकरणेन मनसा ।

१. पीड्यमानमिव A. B. T. २. वेष्टचमानमिव A. B. T. ३. आत्सादितं A. आच्छादितं B. ४. अभिभूतं A. B. T. ५. क्लेशस्य समीपे वैमनस्यस्यान्तिकेन्त्योच्छ्वासस्य A. B. ६. प्रलापसन्ततं K. ७. श्वासे A. B. ८. °रोदनाताम्रोच्छून° A. °रोदनाताम्रोसून° B. ९. निःश्वासैरेव A. B. १०. °धूलि° K2. Jambû ed. ११. °धूसर° A. B. T. १२. यशोवत्या K2. Jambû ed. १३. दुःखावपात° A. B. T. दुःखसन्ताप° K2. Jambû ed. १४. A. B. omit च. १५. अविवेकमयमिव. A. B. १६. रसान्तरमपि K2. Jambû ed. १७. न विवेद कर्तव्यमकर्तव्यं वा A. B. T.

वनम्रमुन्नमय्य बलादुरसि निवेश्य विशन्निव प्रेम्णा निशाकरमण्डलमध्यं [1]मज्जन्निवामृतमये महासरसि [2]स्नापयन्निव महति हरिचन्दनरसप्रस्रवणेऽभिषि[3]च्यमान इव तुषाराद्रिद्रवेण पीडयन्नङ्गैरङ्गानि कपोलेन [4]कपोलमवघट्टयन्निमीलयन्पक्ष्माग्रग्रथिताजस्रा[5]स्रविस्राविणी विलोचने विस्मृतज्वरसञ्ज्वरः सुचिरमालिलिङ्ग । कथं कथमपि च चिराद्विमुक्त[6]मपसृत्य पुनः कृतनमस्कारं प्रणतजननीकमुपागतमासीनं च शयनान्तिके पिबन्निव विगतनिमेषनिश्चलेन चक्षुषा व्यलोकयत् । प[7]स्पर्श च पुनः पुनर्वेपथुमता पाणितलेन क्षयक्षामकण्ठश्च कृच्छ्रादिवावादीत् वत्स कृशोसीति । भण्डिस्त्वकथयत् । देव तृतीयमहः कृताहारस्यास्याद्येति । तच्छ्रुत्वा राजा बाष्पवे[8]गगृह्यमाणाक्षरं कथं कथमप्यायतं निःश्वस्योवाच वत्स जनामि त्वां पितृप्रियमतिमृदुहृदयमीदृशेषु विधुरयति च धीमतोपि धियमतिदुर्धरो बान्धवस्नेहः सर्वप्रमाथी [9]यतो नार्हस्यतिमात्रमात्मानं शुचे दातुम् । उद्दाममहादाहज्वरदग्धोपि दह्ये खल्वहमधिकतरमनेनायुष्मदाधिना निशि[10]तमिव शस्त्रं तक्ष्णोति मां त्वदीयस्तनिमा । सुखं च राज्यं च वंशश्च प्राणाश्च [11]परलोकश्च त्वयि मे स्थि[12]ताः । यथा मम तथा सर्वासां प्रजानां त्वद्विधानां पीडाः पीडयन्ति सकलमेव भुवनतलं न ह्यल्पपुण्यभाजां वंशमलङ्कुर्वन्ति भवादृशाः फलमस्यानेकजन्मान्तरसहस्रोपार्जितस्याकलुषस्य कर्मणः करतलगतमिव कथयन्ति चतुर्णामप्यर्णवानामाधिपत्यं ते लक्षणानि त्वज्जन्मनैव कृतार्थोस्मि निरभिलाषोस्मि जीवि[13]तव्ये भिषगनुरोधः पाययति मामौषधम् । अपि च वत्स स[14]र्वप्रजापुण्यैः सकलभुवनतलपरिपालनार्थमुत्पत्स्यमानानां भवादृशां जन्मग्रहणोपायः पितरौ । प्रजाभिस्तु बन्धुमन्तो राजानो न ज्ञातिभिः । तदुत्तिष्ठ

प्रस्रवणे निम्ने । द्रवो रसः । सञ्ज्वरः सन्तापः । सूची शलाका ।

---

१. मज्जन्निव महामृतमये सरसि A. B. २. स्नातमिव A. B. T. ३. लिप्यमानः A. B. T. ४. कपोलमनवद्यचक्षुं निमीलयत्पक्ष्माग्रग्रथिताश्रु A. ५. अश्रु° A. B. T. ६. उपसृत्य K. K1. Jambû ed. ७. आममर्श A. B. T. ८. °वेगे B. ९. अतस् K. Jambû ed. १०. निशित इव निस्त्रिंशः A. B. T. ११. K. K1. Jambû ed. omit परलोकश्च. १२. स्थितं A. B. T. १३. जीविते A. B. T. १४. सकल° A. B.

कुरु पुनरेव सर्वाः क्रियाः कृताहारे च त्वय्यहमपि स्वयमुपभोक्ष्ये पथ्यमित्येवमभिहितस्य चास्य धक्ष्यन्निव हृदयमतितरां शोकानलः सन्दुधुक्षे। क्षणमात्रं च स्थित्वा पित्रा पुनराहारार्थमादिश्यमानो धवलगृहादवततार। चकार चेतस्यकाण्डे खल्वयं समुपस्थितो महाप्रलयो व्यभ्र इव वज्रपातः सामान्योपि तावच्छोकः सोच्छ्वासं मरणमनुपदिष्टोपधो महाव्याधिरभस्मीकरणोऽग्निप्रवेशः। अनुपरतस्यैव नरकवासो निर्ज्योतिरन्धतमसमशकलीकरणं क्रकचदारणमव्रणो वज्रसूचीपातः किमुत विशेषाश्रितः किमत्र करवाणीति राजपुरुषेणाधिष्ठितश्च गत्वा स्वधाम धूममयानिव कृताश्रुपातानग्निमयानिव जनितहृदयदाहान्विषमयानिव दत्तमूर्च्छावेगान्महापातकमयानिवोत्पादितघृणान्क्षारमयानिवानीतवेदनान्कथंचित्कवलानगृह्णात्। आचामंश्च चामरग्राहिणमादिदेश विज्ञायागच्छ कथमास्ते तात इति गत्वा च प्रतिनिवृत्य च देव तथैवेति विज्ञापितस्तेनागृहीतताम्बूल एवोत्ताम्यता मनसास्ताचलाभिलाषिणि सवितरि सर्वानाहूयोपह्वरे वैद्यान् किमस्मिन्नेवंविधे विधेयमधुनेति विषण्णहृदयः पप्रच्छ। ते तु व्यज्ञापयन्। देव धैर्यमवलम्बस्व कतिपयैरेव वासरैः पुनः स्वां प्रकृतिमापन्नं स्वस्थं द्रक्ष्यसि पितरमिति। तेषां तु भिषजां मध्ये पौनर्वसवो युवाष्टादशवर्षदेशीयस्तस्मिन्नेव राजकुले कुलक्रमागतो गतः परम्पारमष्टाङ्गस्यायुर्वेदस्य भूभुजा स्वसुतनिर्विशेषं

धूममयानिवेति धूमः किलाश्रु मोचयति। घृणा जुगुप्सा। उपह्वरं रहसि। स्वां प्रकृतिममन्दत्वमव्यक्तरूपत्वं च पृथिव्यादिषु वा लयम्। स्वस्थं व्याधिविनिर्मुक्तं स्वर्गस्थं च। यतो जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च। तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसीत्युक्तम्। पुनर्वसोरपत्यं पौनर्वसवः। पुनर्वसुना मुनिना प्रोक्तमायुर्वेदमधीते पौनर्वसव इति। अष्टाङ्गमिति। उक्तं च। कायबालग्रहोर्ध्वाङ्गशल्यदंष्ट्राजरावृषानष्टावङ्गानि तस्याहुश्चिकित्सा येषु संश्रितेति। आयुर्वेदस्य वैद्यशास्त्रस्य।

१. सुखमुपभोक्ष्ये A. B. T. २. भिन्नभुरिव A. B. ३. व्यभ्रे वज्रपातः A. B. व्यभ्रा वज्रपातः K. K1. ४. वर्षः A. B. ५. भेदः A. B. ६. चामरग्राहिणीं A. B. ७. कथितेऽगृहीत A. B. ८. मनसा A. B. ९. वैद्यः K. K1. Jambú ed. १०. व्यजिज्ञपन् A. B. ११. पारमष्टाङ्गस्य K. K1. Jambú ed.

लालितः प्रकृत्यैवातिपटीयस्या प्रज्ञया यथावद्विज्ञाता व्याधिस्वरूपाणां [१]रसायनो नाम वैद्यकुमारकः [२]सास्रस्तूष्णीमधोमुखोभूत् । [३]पृष्टश्च राजसूनुना सखे रसायन कथय तथ्यं यद्यसाध्विव पश्यसीति । सोब्रवीद् देव श्वः प्रभाते यथावस्थितमावेदयितास्मीति । अत्रैव चान्तरे भवनकमलिनीपालः [४]कोकमाश्वासयन्नपरवक्त्रमुच्चैरपठत् ।

विहग कुरु दृढं मनः [५]स्वयं त्यज शुचमास्स्व विवेकवर्त्मनि ।
सह [६]कमलसरोजिनीश्रिया श्रयति सुमेरुशिरो विरोचनः ॥

तच्चाकर्ण्य वाङ्निमित्तज्ञः पितरि सुतरां जीविताशां शिथिलीचकार गतेषु च भिषक्षु क्षतधृतिः क्षपामुखे क्षितिपालसमीपमेव पुनरारुरोह । तत्र च दाहो महानाहर [७]हारान्हरिणि [८]मणिदर्पणान्मे देहे देहि वैदेहि हिमलवैर्लिम्प ललाटं लीलावति घनसारक्षोद[९]धूलीं निधेहि [१०]धवलाक्षि निक्षिप चक्षुषि चन्द्रकान्तं कान्तिमति कपोले कलय कमलकुवलयं कलावति चन्दनचर्चां [११]रचय चारुमति पाटय पटमारुतं पाटलिके [१२]मन्दय [१३]दोहमिन्दुमत्यरविन्दैर्जनय जलार्द्रया मुदं मदिरावति समुपनय मृणालानि [१४]मालति तरलय तालवृन्तमावन्तिके मूर्धानं [१५]धावमानं बधान बन्धुमति कन्धरां धारय [१६]धारणिक [१७]उरसि सशीकरं करं कुरु [१८]कुरङ्गवति संवाहय [१९]बाहू बलाहिके पीडय पादौ पद्मावति गृहाण गाढमङ्गमनङ्गसेने

कोकश्चक्रवाकः । विरोचनो रविः । तत्र चेत्यादौ । तत्र च क्षितिपालसमीप इत्यादीन्भृत्य[२०]कलापालानाकर्णयन्निशामनैषीदिति सम्बन्धः । घनसारः कर्पूरः । [२१]पाटय पटुं कुरु । कन्धरां ग्रीवां । संवाहय मर्दय ।

१. रसायननामा. A. B. २. सास्रं तूष्णीमधोमुखोभवत् A. B. T. ३. पृष्टश्च स यच्च साधु पश्यसीत्यसावब्रवीत् A. B. T. ४. कोकं समाश्वासयन् A. B. ५. स्वकं त्यज शुचमाशु A. B. ६. सकलसरोजिनी° A. B. T. ७. हारं A. B. ८. मणिदर्पणं देहे देहि. A. B. ९. °धूलीर्निधेहि K. K1. Jambû ed. १०. धवलाक्षिणि° A. ११. चारय A. B. T. १२. मर्दय K. Jambû ed. १३. दाहमरविन्दैरिन्दुमति A. B. T. १४. मलयवति A. B. १५. बाधमानं A. B. १६. धारावति. A. B. १७. तमसि. K. १८. कुरङ्गिके A. B. १९. बाहुं A. B. २०. °कलालापान° Jambû ed. २१. पटय C1. C2.

का वेला वर्त्तते विलासवति नैति निद्रा कथाः[1] कथय कुमु-[2]
द्वतीत्येवम्प्रायान्पितुरालापाननवरतमाकर्णयन्दूयमानहृदयो दुःखदीर्घां
जाग्रदेव निशामनैषीत् । उषसि चावतीर्य राजद्वारदेशोपसर्पिणा
परिवर्धकेनोपस्थापितेऽपि[3] तुरङ्गे चरणाभ्यामेवाजगाम स्वमन्दिरम् । तत्र
च त्वरमाणो भ्रातुरागमनार्थमुपर्युपरि क्षिप्रपातिनो दीर्घाध्वगाननि-
प्रजविनश्चोष्ट्रपालान्[4]प्राहिणोत् । प्रक्षालितवदनश्च परिजनेनोपनीतमपि
प्रतिकर्म नाग्रहीत् । अग्रतः स्थितानां च राजपुत्रयूनां विमनसां रसा-
यनो रसायन इति जल्पितमव्यक्तमश्रौषीत् । पर्यपृच्छच्च तान्
भद्राः कथयत किं रसायन इति पृष्टाश्च ते सर्वे सममेव तूष्णीं
बभूवुः । भूयो भूयश्चानुबध्यमाना दुःखेन कथं कथमप्याचचक्षिरे
देव पावकं प्रविष्ट इति । तच्च श्रुत्वा प्लुष्ट इवान्तस्तापेन सद्यो विव-
र्णतामगात् । उत्पाट्यमानमिव च न शशाक शोकान्धं धारयितुं
हृदयम् । आसीच्चास्य चेतसि कामं स्वयं न भवति न तु श्रावयत्य-
प्रियं वचनमरतिकर[6]मितर इवाभिजातो जनः कृच्छ्रेव[7] यथानेनानुष्ठि-
तमुज्ज्वलीकृतमधिकतरं ज्वलनप्रवेशेन कल्याणप्रकृतिकार्त्तस्वरमिव सा-
म्प्रतं[8] कौलपुत्र[9]मस्येति पुनश्चाचिन्तयत् । समुचितमेवाथवा स्नेहस्येदं
किमस्य तातो न तातः किं वाम्बा[10] न जननी वयं न भ्रातरः । अ-
न्यस्मिन्नपि तावत्स्वामिनि दुर्लभीभवति भवन्त्यसवो ध्रियमाणा ह्री-
हेतवो लोके किमुतामृतमयेनुजीविनां निर्व्याजबान्धवे[11]बन्ध्यप्रसादे सु-
गृहीतनाम्नि ताते सम्प्रति साम्प्रतमाचरित[12]मनेनात्मानं दहता किं वास्या-
कल्पमवस्थितस्य स्थेयसो यशोमयस्य दह्यते । पतितः[5] स केवलं

कुमुद्वतीत्यादयः शब्दत्वात्साधवः । परिवर्धकोश्वपालः । प्रतिकर्म
प्रसाधनम् । कार्त्तस्वरं हेम । तदपि ज्वलनप्रवेशेनाधिकतरमु-
ज्ज्वलं । साम्प्रतं युक्तम् । अतिशयेन स्थिरं स्थेयः ।

---

१. कथां A. B. २. कुमुद्वति· K. K1. Jambû ed. ३. अवस्थापितेऽपि तुरङ्गमे A. B. ४. उष्ट्रवामिकान् A. B. ५. सशोकं A. B.; here D. commences again and reads शोकयुक्तं. ६. अरतिकर इवाभिजातः D. ७. कृच्छ्रेऽपि A. B. T. कृच्छ्रैव K. ८. K. K1. A. B. D. omit साम्प्रतं ९. कौलपुत्र्यम॰ D. १०. किमम्बा जननी वयं वा न भ्रातरः A. B. T. ११. °बधावबन्ध्यप्रसादे A. B. D. १२. आचरितमात्मानं दहतानेन A. B.

दहने दग्धास्तु वयं धन्यः खल्वसावग्रणीः पुण्यभाजाम[1]पुण्यभाक्त्वद-
मेव राजकुलं कुलपुत्रेण यत्तादृशा वियुक्त[2]म्। अपि च ममापि[3] खल्वे-
तेषां प्राणानां कः कार्यातिभारः कृत्यशेषो वा का वा[4] व्यापृतता येन[5]
नाद्यापि प्रष्ठा निष्ठुराः प्राणाः प्रतिष्ठन्ते को वान्तरायो हृदयस्य येन
सहस्रधा न दलतीति दुःखार्त्तश्च न जगा[6]म राजसद्म समुत्ससर्ज
च सर्वकार्याणि शयनीये निपत्योत्तरीयवाससा सोत्तमाङ्गमात्मानमव-
गुण्ठयातिष्ठत्। इत्थम्भूते च देवे हर्षे राजनि च तदवस्थे सर्वस्यैव-
लोकस्य कपोलेषु कीलिता इव करा लोचनेषु लेप्यमय्य इवाश्रुस्रुत-
यो नासाग्रेषु ग्रथिता इव दृष्टयः कर्णेषूत्कीर्णा इव रुदितध्वनयो जि-
ह्वासु सहजानीव हा क[7]ष्टानि लपनेषु पल्लवितानीव श्वसितान्यधरेषु लि-
खितानीव [8]परिदेवितपदानि हृ[9]दयेषु निधानीकृतानीव दुःखान्यभवन्। उष्णा-
श्रुदाहभीतेव नाभजत नेत्रोदराणि निद्रा निःश्वासवातविधूता इव व्य-
लीयन्त हासा निर[10]वशेषदग्धेव च सन्तापेन न प्रावर्त्तत वाणी कथा-
स्वपि नाश्रूयन्त परिहासाः क्वाप्यगमन्निति नाज्ञायन्त गीतगोष्ठ्यः।
जन्मान्तरातीतानीव नास्मर्यन्त लास्यानि स्वप्नेऽपि नागृह्यन्त प्रसाधनानि
वार्त्तापि नालभ्यतोपभोगानां नामापि नाकीर्त्यताहारस्य खपुष्पप्रति[11]मा-
न्यासन्नापानमण्डलानि लोकान्तरमिवानीयन्त बन्दिवाचो युगान्तर इवा-
वर्त्तन्त निवृ[12]त्तयः पुनरिवादह्यत शोकाग्निना मकरकेतुः दिवापि नामु-
च्यन्त शयनानि। शनैः शनैश्च महापुरुषविनिपातपिशुनाः सम[13]न्ता-
त्समुदभवन्भुवने भूयांसो भूपतेरभावाय भयमुत्पाद[14]यन्तो भूतानां महोत्पा-

तस्य व्यापृतता [15]व्यग्रत्वं। प्रष्ठा अग्रगामिनः। प्रतिष्ठन्ते प्रति[16]ष्ठां कुर्वन्ते।

---

१. अपुण्यं त्विदमेव A. B.; D. omits एव. २. विमुक्तं A. B, ३. समाधिकः K. ४. च A. B. ५. नाद्यापि येनातिनिष्ठुराः प्राणाः प्रष्ठाः A. B. T. ६. जगामैव A. B. ७. कष्टविलपितान्यधरेषु पल्लवितानीव श्वसितानि लपनेषु लिखितानीव A. B. T. ८. च परिदेवितानि D. ९. हृदये A. B. १०. निरवशेषं दग्धेव A. B. ११. °प्रतिमान्यापानमण्डलानि B. प्रतिमान्यासन्नासन्नमण्डलानि D. १२. निर्वृतयः D. १३. A. B. omit समन्तात्. १४. उद्भावयन्तः A. B. १५. व्यग्रता Jambû ed. १६. स्थानप्रतिष्ठां कुर्वन्ति C₂.

नाः। तथा हि दोलायमानसकलकुलाचलचक्रवाला पत्या सार्धं गन्तुकामेव[1] प्रथममचलद्धरित्री धान्वन्तेररिवान्तरे तस्मिन्स्मरन्तः परस्परास्फालनवाचालवीचयो विजुघूर्णिरेर्णवा भूभृदभावभीतानां वितत[2]शिखाकलापविकटकुटिलाः केशपाशा इवोर्व्वीविभूवुर्धूम[3]केतवः ककुभां धूमकेतुकरालितदिङ्मुखं दिक्पालारब्धायुष्कामहोमधूम[4]धुम्र[4]मिवाभवद्भुवनम्। भ्रष्टभासि तप्तकालायसकुम्भवभ्रुणि भानुमण्डले[5] भयङ्करं कबन्ध[6]कायव्याजेन कोपि पार्थिवप्राणितार्थी[7] पुरुषो[8]पहारमिवोपजहार। ज्वलित[9]पृथुपरिवेषमण्डलाभोगभास्वरो[10] जिघृक्षाजृम्भमाणस्वर्भानुभयादुपरचिताग्निप्राकार इव प्रत्यदृश्यत श्वेतभानुरवनिपतिप्रतापप्रसादिताः[11] प्रथमतर[12]कृतपावकप्रवेशा इवादह्यन्तानुरक्ता दिशः। स्रुतशोणितशीकरासारारुणिततनुरनुमरणाय पर्याकुला[13] प्रावृतपाटलांशुक[14]पटेवादृश्यत वसुधावधूः। नराधिपविनाशसंभ्रम[15]भीतैर्लोकपालैरिव कालायसकवाट[16]पुटैरकालकालमेघपटलैररुध्यन्त दिग्द्वाराणि प्रेतपतिप्रयाणप्रहताः[17] पटवः पटहा इवारटन्तो हृदयस्फोटमानाः पस्फायिरे निपततां निर्घातानां घोरा निर्घोषाः[18]। निकटीभवद्यममहिषखुरपुटोद्धूता इव[19] द्युमणिधाम धूसरीचक्रुः। क्रमेलककचकपिलाः पांसुवृष्टयो[20] विरसविराविणी[21]नामुन्मुखीनां शिखिनो ज्वालाः[22] प्रतीच्छन्त्य इव

शिखी मयुरोपि। धूमकेतव उत्पातशंशिनोग्नयश्च। करालितानि भीषणीकृतानि व्याप्तानि च। बभ्रु कपिलं[23]। श्वेतभानुश्चन्द्रः। प्रसादिता आवर्जिता भूषिताश्च। कचाः केशाः। शिवानां मृगादीनां।

---

१. प्रथममेवाचल° A. B. २. वितथशिखा° D. ३. D. omits धूम° ४. °श्याममिषा° A. B. ५. भानुमन्मुखे K. ६. कबंधकायं कोपि A. B. ७. प्रणयितार्थी पुरुषोहारमिव D. ८. पुष्पोप° K. I. Jambû ed. ९. D. omits °ज्वलित; K. K1. Jambû ed. omit पृथु. १०. °भासुरः A. B. ११. प्रसाधिताः A. B. T. १२. प्रथमकृत° A. B. १३. K. K. Jambû. ed omit पर्याकुला. १४. अंशुकेवा° D. १५. °भीतैरिव लोकपालैः D. १६. °पाट° A. B. १७. प्रहिताः K. Jambû ed. १८. K. K1 K2 Jambû ed. omit this word. १९. इव च द्युमणेर्धाम A. B. T. २०. °वृष्टयः A. B. २१. विरासिनीनां A. B. D. २२. ज्वालाभिः A. B. T. २३. कपिशं Jambû ed.

पतन्तीरुल्का नभसो व[1]वाशिरे शिवानां राजयः । राजधामनि धूमायमानकबरीविभागविभावितविकाराः प्रकीर्णकेशपाशप्रकाशितशोका इव [2]प्राकाशन्त प्रतिमाः कुलदेवतानामुपसिंहासनमाकुलं कालरात्रिविधूयमानवृजिनवेणीबन्धनविभ्रमं [3]बिभ्राणं बभ्राम भ्रामरं पटलम् । अटतामन्तःपुरस्योपरि क्षणमपि न शशाम व्याक्रोशी वायसानाम् । श्वेतातपत्रमण्डलमध्याज्जीवितमिव राज्यस्य सरसपिशितपिण्डलोहितं चञ्चच्चञ्चुरुच्चैरुच्चखान खण्डं [4]माणिक्यस्य [5]कूजज्जरद्गृध्रः । महोत्पातदूयमानश्च [6]कथमपि निनाय निशाम् । अन्यस्मिन्नहनि समीपमस्य राजकुलाद्द्रुतगति[7]वंशविशीर्यमाणालङ्कारझाङ्कारिणी विजयघोषणेव विषाद[8]स्याकुलचरणचलत्तुलाकोटिक्वणितवाचालिताभिरुद्ग्रीवाभिः किं किमेतदिति पृच्छ्यमानेव दूरादेव भवनहंसीभिः स्खलितविशालश्रोणिशिञ्जानरशनानुराविणीभिश्च बाष्पान्धा समुपदिश्यमानमार्गेव गृहसारसीभिरदृष्टकवाट[9]पट्टसङ्घट्टस्फुटितललाटपट्टरुधिरपटलेन पदान्तेनेव रक्तांशुकस्य मुखमाच्छाद्य [10]प्ररुदती [11]सन्तापबलविलीनकनकवलयरसधारामिव वेत्रलतामुत्सृजन्ती [12]मुखमरुत्तरङ्गितामुत्तरीयांशुकपटीं स्फुरन्तीं [13]फणिनीव निर्मोकमञ्जरीमाकर्षन्ती नम्रांसस्रंसिना[14]निलविलोलेन नीलतमेन तमाल[15]पल्लवचीरचीवरेणेव शोकोचितेन धम्मिल्लरचनारहितेन शिरोरुहसञ्चयेन [16]चलिता प्रवृत्तकुचा कुचताडनपीडया

कबरीशब्देनात्र कचा लक्ष्यन्ते । व्याक्रोशी [17]परस्पराह्वानशब्दः । वायसानां काकानाम् । अन्यस्मिन्नित्यादौ समीपस्था यशोमत्याः प्रतीहार्याजगामेति सम्बन्धः । तुलाकोटिर्नूपुरं । चीरचीवरं वृक्षत्वक् चीरवासः ।

---

१ वभासिरे शिवाः शिवानां A. B. T. २. प्राक्रोशन्त A. B. ३. K. K1. K2. Jambû ed. omit बिभ्राणं ४. माणिक्यकूजज्जरद्गृध्रः D. ५. कूजन्सरद्गृध्रः B. ६. A. B. D. omit कथमपि. ७. D. omits वश. ८. विषादस्य कुल° D. ९. °पादपट्टास्फोटस्फुटितललाटरुधिर° A. B. T., वाटपट्टस्फुटितललाटरुधिर° K. K1. १०. प्ररुदन्तीभिः D. ११. सन्तापवशविलीनवलय° A. B. T. १२. मुहुरुत्तं तरङ्गिता A., मुहुरुत्तरङ्गिता° B. १३. फलिनीव K. K2., फलिनीमिव D. १४. विलीननलिनलोलनीलतमेन B., विनील° A1. D. omits नलिन १५. K. K1. Jambû ed. omit पल्लव° १६. बलता A. B. १७. परैरा°Jambû ed. १८. यशोवत्याः C1.

समुच्छूनाताम्रश्यामतलं मुहुर्मुहुरत्युष्णाश्रुप्रमार्जनप्रदग्धमिव करकिसलयं धुनाना । [१]चक्षुर्निर्झरे शीर्यति स्नपयन्तीव शोकाग्निप्रवेशाय स्वकपोलतल-प्रतिबिम्बितमासन्नलोकं लोललोचनप्रवृत्तैस्तरलैस्तारकांशुभिः श्यामायमान-मात्मदुःखेन दिवसमपि दहन्तीव क्व कुमारः क्व कुमार इति [२]प्रतिपुरुषं पृच्छन्ती वेलेति नाम्ना [३]यशोमत्याः प्रतीहार्याजगाम । विषण्णलोकलोचनप्रत्युद्गता चोपसृत्य [४]मणिकुट्टिमन्यस्तहस्तयुगला गलन्तीभिः सिञ्चतीव शुष्यन्तं दशन-दीधिति[५]धाराभिराधूसरमधरमधोमुखी विज्ञापितवती देव परित्रायस्व परित्रा-यस्व जीवत्येव भर्त्तरि कि[६]मध्यवसितं देव्येति । [७]तनस्तदपरमाकर्ण्य च्युत इव सत्त्वेन द्रुत इव दुःखेनाचान्त इव चिन्तया तुलित [८]इवातपेना[९]ङ्कीकृत इवान्त-केनाप्रतिपत्तिरासीत् । आसीच्चास्य चेतसि प्रतिपन्नसंज्ञस्य बहुशोऽपि हृदये दुःखाभिषङ्गो नि[१०]पतन्नश्मनीव लोहप्रहारः कठिने हुतभुजमुत्थापयति न तु भस्मसात्करोति मे निरनुक्रोशस्य कायमित्युत्थाय च त्वरमाणोऽन्तःपुर-मगात् । तत्र च [११]भर्त्तुमुद्यतानां राजमहिषीणामशृणोद्दूरादेव तात [१२]चूत चिन्त-यात्मानं प्रवसति ते जननी [१३]वत्स जातीगुच्छ गच्छाम्यापृच्छस्व मां मया विना[१४]द्यानाथा भवसि भगिनि भवन[१५]दाडिमलते रक्ताशोक मर्षणीयाः पाद-प्रहाराः कर्णपूरपल्लवभङ्गापराधाश्च पुत्रकान्तःपुरबालबकुलक वारुणीगण्डू-षग्रहणदुर्ललित दृष्टोऽसि । वत्से प्रियङ्गुलतिके गाढमालिङ्ग मां दुर्लभा भवामि ते

अप्रतिपत्तिः किंकर्त्तव्यतामू[१६]र्ख्यः । हृदयेति कठिने । अनुक्रोशो दया । तत्रेत्यादौ राज-महिषीत्येवंप्रायानालापानशृणोदिति सम्बन्धः । आपृच्छस्व ज्योत्कुरु । वारुणी सुरा ।

---

१. चक्षुर्नैर्झरे गलति A. B. २. पुरुषं K. K. Jambû ed. ३. K. K1. K2. Jambû ed. omit मणि ५. 'धाराधूसर' A. B. T. ६. किमपि व्यवसितं A. B. ७. ततश्च तद' दग्ध इव A. B. ८. इव तापेन A. B. ९. अङ्गीकृतः D. [illegible] .दमहा-रकठिने D. ११. भर्तुमुद्यताया राजमहिष्या अशृणोत् [illegible] D. १३. जात A. B. १४. विनाद्यैवानाथासि A. B. D. १५. [illegible] B. D. T. १६. मूढः C1. C2.

भद्र भवनद्वारसहकारक दातव्यो निवापतोयाञ्जलिस्त्वयमसि भ्रातः पञ्जरशुक यथा न विस्मरसि मां किं व्याहरसि दूरीभूतास्मि ते शारिके [1]स्वप्ने नः समागमः पुनर्भूयात् । मातर्मार्गलग्नं कस्य समर्पयामि गृहमयूरकमम्ब सुतवल्लालनीयमिदं हंसमिथुनं मन्दपुण्यया मया न संभावितोस्य चक्रवाकयुगलस्य विवाहोत्सवः । मातृवत्सले निवर्त्तस्व गृहहरिणिके समुपनय सौविदल्लवल्लभवल्लकीं परिष्वजे तावदेनां चन्द्रसेने सुहृष्टः क्रियतामयं जनः । बिन्दु[3]मतीयं तेन्या वन्दना चेटि मुञ्च[4] चरणावार्ये कात्याय[5]निके किं रोदिषि नीतास्मि दैवेन[6] तात कञ्चुकिन्किं मामलक्षणां प्रदक्षिणीकरोषि धात्रेयि धारयात्मानं किं पादयोः पतसि भगिनि गृहाण मामपश्चिमां कण्ठे कष्टं न दृष्टा प्रियसखी मलयवती कुरङ्गवत्ययमामन्त्रणाञ्जलिः सानुमत्ययमन्त्यः[9] प्रणामः कुवलयवत्येष तेवसानपरिष्वङ्गः सख्यः क्षन्तव्याः प्रणयकलहा इत्येवं[10]प्रायानालापान् । दह्यमानश्रवणश्च तैः [11]प्रविशन्नेव निर्यान्तीं दत्तसर्वस्वापतेयां गृहीतमरणप्रसाधनां जानकीमिव जातवेदसं पत्युः पुरः[12]प्रवेक्षन्तीं प्रत्यग्रस्नानार्द्रदेहतया श्रियमिव भगवतीं सद्यः समुद्रादुत्थितां कुसुम्भबभ्रुणी वाससी दिवमिव तेजसी सान्ध्ये दधानां ताम्बूलदिग्धरा[13]गान्धकाराधरप्रभाप[14]टलपाटलं प[15]ट्टांशुकमिव विधवामरणचिह्नमङ्गलग्रमुद्वहन्तीं रक्तकण्ठसूत्रेण कुचान्तरावलम्बिना स्फुटितहृदयविगलितरुधिरधाराशङ्कां कुर्वन्तीं तिर्यक्कुटिलकुण्डलकोटिकण्[16]टकाकृष्टतन्तुना हारेण वलितेन सितांशुकपाशेनेव कण्ठमुत्पीडयन्तीं सरसकुङ्कुमाङ्गरागतया कवलितामिव दिधक्षता[17] चितार्चिष्मता चितानलार्चनकुसुमैरिव धवलधवलैरश्रुबिन्दुभिरंशुकोत्सङ्गमापूरयन्तीं गृहदेवतामन्त्रणबलिमिव वलयैर्वि-

निवापोमृतमुद्दिश्य दीयते जलादिकम् ।

समागमः A. B. २. मिथुनकं A. B. ३. बिन्दुमति वन्दनीया ते B ४. मुञ्च D. ५. कात्यायनि A. B. T. ६. दैवेन D. ...रङ्गवत्ययमामन्त्रणाञ्जलिस्ते ...भानुमत्ययमन्त्यः A. B. ...०. प्रायान् प्रलापान् A. B. ११. प्रवेशन्नेव D. १२. प्रविवि-... ...धाधरप्रभा° D. १४. पटलं A. B. १५. पट्टकंचु... ...कमिव विधवा° B. १६. कण्टकाकृततन्तुना D. १७. दिध-...क्षन्° A. B.

गलद्भिः पदे पदे विकिरन्तीमाप्रपदीनां कण्ठे गुणकुसुममालां यमदोलामिवा-रूढामन्तर्गुञ्जन्मधुकरमुखरेणामन्त्र्यमाणलोचनोत्पलामिव कर्णोत्पलेन प्रदक्षि-णीक्रियमाणमिव मणिनूपुरबन्धुभिर्बद्धमण्डलं भ्रमद्भिर्भवनहंसैः सन्निहितप्रा-णसमं मरणाय चित्तमिव चित्रफलकमविचलं धारयन्तीमर्चावद्धोद्धूयमान-धवलपुष्पदामकां पतिव्रतापताकामिव पतिप्रासयष्टिमिष्टामुपगूहमानां बन्धो-रिव निजचारित्रस्य धवलस्य नृपातपत्रस्य पुरो नेत्रोदकमुत्सृजन्तीं पत्युः पाद-पतनसमुद्गमदभ्यधिकबाष्पाम्भःप्रवाहप्रतिरुद्धदृशःकथमपि प्रतिपन्नादेशान्स-चिवान्सन्दिशन्तीमनुनयनिर्वर्तितविधुरवृद्धबन्धुवर्गवर्धमानध्वनिभिर्गृहाक्रन्दै-राकृष्यमाणश्रवणां भर्तृभाषितैर्निर्भैः पञ्जरसिंहबृंहितैर्ह्रियमाणहृदयां धात्र्या भर्तृभक्त्या च निजया प्रसाधितां मूर्च्छया जरत्या च संस्तुतया धार्य-माणां सख्या पीडया च व्यसनसङ्गतया समालिङ्गितां परिजनेन सन्तापेन च गृहीतसर्वावयवेन परीतां कुलपुत्रोच्छ्वसितैश्च महत्तरैरधिष्ठितां कञ्चुकि-भिर्दुःखैश्चातिवृद्धैरनुगतां भूपालवल्लभान्कौलेयकानपि सास्रमालोकयन्तीं सपत्नीनामपि पादयोः पतन्तीं चित्र[11]पुत्रिकामप्यामन्त्रयमाणां गृह[12]पतत्रिणा-मप्यञ्जलिं पुरस्तादुपरचयन्तीं पशूनप्या[13]पृच्छयमानां भवनपादपानपि [14]परिष्वज्यमानां मातरं ददर्श। दूरादेव च बाष्पायमाणदृष्टिर[15]भ्यधादम्ब त्वम-पि मां मन्दपुण्यं त्यजसि प्रसीद निवर्त[16]स्वेत्यभिदधान एव च सस्नेहमिव नूपुरमणिमरीचिभिश्चुम्ब्यमानचूडश्चरणयोर्न्यपतत्। देवी तु य[17]शोमती तथा तिष्ठति पादनिहितशिरसि विमनसि कनीयसि प्रेयसि तनये गुरुणा गिरिणेवोद्वि[18]र्गावेगेनावष्टभ्यमाना मूर्च्छान्धतमसं रसातलमिव प्रविशन्ती बाष्प-प्रवाहेणेव चिरनिरोधसं[20]पिण्डितेन स्नेहसम्भारेण निर्भराविर्भूतेनाभिभूयमाना

आपृच्छ्यमानां ज्योत्कारयन्तीं। बाष्पायमाणा बाष्पमुद्वमन्ती।

---

१. लोचनोत्पलेन D. २. क्रियमाणामिव. A. B. ३. नूपुररवबन्धुभि-बिन्दुभिः B. ४. °मण्डलां K. ५. °चारित्रधवलस्य A. B. T. ६. D. ७. A. B. omit कथमपि प्रतिपन्नादेशान् ८. D. omits भर्तृभक्त्या, but reads अनुनयति च निजया° ९. संस्तुतया ... तैश्च A. B. ११. चित्रपुत्रिका अप्यामन्त्रयाणां K. Kl. ...ताः A. B. १४. ...णामपि पुरस्तादंजलिमुपरचयन्तीं. A. B. T. १२. अ...धाराभिरधोमुखी परिष्व-जमानां. A. B. T. १५. अभ्यवदत् A. B. T. ...गण्ये ...त इव सत्त्व. B. T. १७ यशोवती. A. B. T. Jambû ed. १८. ...निपन्नस्मनीव ...Jambû ed. १९. मूर्च्छान्धतमसं तरसानलमिव A. B. २०. A. A. B. D. १२. ... २१. पीडितेने B.D. ...डिमीलते

[1]कृतप्रयत्नापि निवारयितुं न शशाक बा[2]ष्पोत्पतनम् । उत्कटकुचोत्कम्पप्रक-
टितासह्यशोकाकुता च गद्गदिकागृ[3]ह्यमाणगलविकला निःसामान्यमन्युतर-
लीक्रियमाणाधरोद्देशा पुनरुक्तस्फुरणनिबिडितनासापुटा [4]निमील्य नयने
न[5]येनाम्भःसेकप्लवेन प्लावयन्ती वि[6]मलौ कपोलौ संछाद्य करनखमयूखमा-
लाखचि[7]तंतनुना तन्वन्तरनिर्गच्छदच्छा[8]स्रस्रोतसेवां[9]शुकपटान्तेन किञ्चिदुन्ना-
नितं वदनेन्दुं दूयमानमानसा स्म[10]रन्ती प्रस्तुतस्तनौ प्रसवदिवसादारभ्य सकल-
मङ्कशा[11]यिनः शैशवमस्य ज्ञा[12]तिगृहगतहृदयाम्ब तात न पश्यतं पापां परलो-
कप्रस्थितां मामेवमतिदुःखितामिति मुहुर्मुहुराक्रन्दन्ती पितरौ हा वत्स विश्रा-
न्तभागधेयया न दृष्टोसीति प्रेष्ठं ज्येष्ठं तनयमसन्निहितं क्रोशन्त्यनाथा जातेति
श्वशुरकुलवर्तिनीं दुहितरमनुशोचन्ती निष्करुण किमपराद्धं तवामुना जने-
नेति दैवमुपालभमाना नास्ति मत्समा सीमन्तिनी दुःखभागिनीति निन्दन्ती
बहुविधमात्मानं मुषितास्मि [13]कृतान्त नृशंस त्वयेत्यकाण्डे कृतान्तं गर्हमाणा
मुक्तकण्ठमतिचिरं [14]प्राकृतप्रमदेव प्रारोदीत् । प्रशान्ते च मन्युवेगे सस्नेहमु-
त्थापयामास सुतं हस्तेन चास्य प्ररुदितस्य पक्ष्मपालीपुंज्यमाननखकिरण-
नि[15]वहां द्रुतमिवाधिकतरं क्षरन्तीं दृष्टिमुन्ममार्ज । स्वयमपि [16]कठोररागपरि-
पीयमानेन धवलिम्ना मुच्यमानोदरे क्वथदस्रु[17]श्च्यवत्पर्यन्ते शुक्ल[18]शीकरतारतार-
कितपक्ष्मणी सू[19]क्ष्मतरास्रुबिन्दुपरिपाटीपतनानुबन्धविधुरे लोचने पुनः पुनरापू-
र्यमाणे प्रमृज्य बा[20]ष्पार्द्रगण्डगृहीतां च श्रवणशिखरमारोप्य शोकलम्बामलक-
लता[21]मधःस्रस्तविलोलबालिकाव्याकुलितां च समुत्सार्य्य तिरश्चीं चिकुरस-
टामस्रुप्रवाह[22]पूरितमार्द्रं च किंचिच्च्युतमुत्क्षिप्य हस्तेन स्तनोत्तरीयं तरङ्गि-
तमिव [23]नखांशुपटलेन मग्नांशुकपटान्तत[24]नुताम्रलेखालाञ्छितलावण्य
देवी बाष्पोत्पतनं धारयितुं न शशाकेति संबधः । बाष्पोत्पतनमस्रुप्रवाहम् ।

---

१ कृतयत्नापि A. B. D. २. बाष्पोत्पीडनं A. B. बाष्पोत्पीडं D. K. K1. ३. °विव-रा A. ... विनिमील्य A. B. T. ५ नयनाम्भसामकल्लवेन A. B. ६. सकलौ A. B. ७. °दशान्तेन ... A. B. D. reads° दशान्तेन. ८. अश्रु A. B. ९. °सेवचीनांशु° A. B. १०. स्वतीरे प्र... ११. °शायि A. B. १२. ज्ञातिगतहृदया चाम्ब तात A. B. T. १३. A. B. D. T. ... कृतान्त. १४. °प्रमत्तवदेव K. Jambû ed. १५. °निवहाहता-मिवाधिकतरं A. B. ... १६. °...कठोर° A. B. T. १७. अश्रूणी श्च्यवस्यर्थ्यन्ते B. D. अश्रूणी श्च्यवत्यर्थ्यन्ते ... १८. शुक्लसीकरतारकित° A. B. T. १९. शुक्ष्मतराश्रुबिन्दु°. A. B. T. २०. बाष्पार्द्रकपोल परिगृहीतां A. B. T. २१. अर्धविश्रस्तविलोलबालिका-कुलितां A. B. २२. प्रेरित° A. B. T. २३. K. K1. K2. Jambû ed omit this word. २४ तन्तुता A. B.

कु[१]ब्जकावर्जितराजतराजहंसास्यसमुद्गीर्णेन पयसा प्रक्षाल्य मुख[२]कमलं कल[३]-मूकलोकविधूते वासःशकले सुचिनि समुन्मृ[४]ज्य पाणी सुतवदनविनिहितनि-भृतनयनयुगला चिरं स्थित्वा पुनः पुनरायतं निःश्वस्यावादीद् वत्स ना[५]सि न प्रियो निर्गुणो वा परित्यागार्हो वा स्तन्येनैव सह त्वया पीतं मे हृदयम-स्मिंश्च समये प्रभूतप्रभुप्रसादान्तरिता त्वां न पश्यति दृष्टिः। अ[६]पि च पुत्रक पुरुषान्तरविलोकनव्यसनिनी राज्योपकरणमकरुणा वा नास्मि लक्ष्मीः क्षमा[७] वा कुलकलत्रमस्मि [८]चारित्रमात्रधना धर्मधवले कुले जाता। किं वि[९]स्मृतोसि मां समरशतशौण्डस्य पुरुषप्रकाण्डस्य केसरिण इव केसरिणीं गृहिणीं। वीर[१०]जा वीरजाया वीरजननी च मादृशी पराक्रमक्र[११]यक्रीता कथ-मन्यथा कुर्यात्। एवंविधेन पित्रा ते भरतभगीरथनाभागनिभेन नरेन्द्र-वृन्दारकेण गृहीतः पाणिः। [१२]आसेवितः सेवासम्भ्रान्तानन्तसामन्तसीमन्तिनी-समावर्जितजाम्बूनदघटाभिषेकः शिरसा लब्धो मनोरथदुर्लभो महादेवीपट्ट-बन्धसत्कारलाभो ललाटेन। आपीतौ यु[१३]ष्मद्विधैः पुत्रैरमित्रकल[१४]त्रबन्दिवृन्द-विधूयमानचामरमरुच्चलचीनांशुकधरौ पयोधरौ सपत्नीनां शिरःसु निहितं नमन्निखिलकटककुटुम्बिनीकिरीटमाणिक्यमालार्चितं चरणयुगलकम्। एवं कृतार्थसर्वावयवा किमपरमपेक्षे। क्षीणपुण्या मर्त्तुमविधवैव वाञ्छामि। न च शक्नोमि द[१५]ग्धस्य स्वभर्त्तुरार्यपुत्रविरहिता रतिरिव निरर्थकान्प्रलापान्क-र्तुम्। पितुश्च ते पादधूलिरिव प्र[१६]थमं गगनगमनमावेदयन्ती बहुमता [१७]भवि-ष्यामि शूरानुरागिणीनां सुराङ्गनानां प्र[१८]त्यग्रदृष्टदारुणदुःखदग्धायाश्च मे किं धक्ष्यति धूमध्वजः। म[१९]रणाच्च मे जीवितमेवास्मिन्समये साहसम्। अतिशी-तलः पतिशोकानलादक्षयस्नेहेन्धनादस्मादनलः। कैलासकल्पे प्रवसति जीवेश्वरे जरत्तृणकणिकालघीयसि जीविते लोभ इति क्व घटते। अपि च जाम्बूनदं सुवर्णं। पादधूलिरिवेति सापि प्रथमगतागमनमावेदयति। धक्ष्य-ति भस्मीकरिष्यति। धूमध्वजोग्निः।

---

१. A. B. T. omit राजत. २. वदनकमलं A. B. T. ३. कल धौतधवले A. B. T. K2. ४. प्रमृज्य A. B. T. ५. जानासि A. ६. अपि A. B. T. ७. अपि च पुत्र आर्य पुत्रकलत्रमस्मि A. B. D. T. ८. चारित्र K. K1. K2. Jambû ed. ९. विस्मितोसि K. Jambû ed. १०. A. B. read वीरजां वीर-जायां वीरजननीं च ११. K1. K2. K3. omit क्रय, K. reads क्रीड १२. आसाहितः A. D., आसादितः B. T. K. १३. विधै A. B. D. T. १४. °व K. Jambû ed. १५. दग्धे भर्तर्यसुभिरविरहिता A. T. १६. प्रथमगता B. D. १७. प्रविश्यामि A. D. १८. प्रत्यक्ष° A. १९. मरणात्तु A. B. T कल्पे च जीवितेश्वरे प्रवसति जरत्तृणकणि यसि [ Correted यसि *secunda manu* in A. ] जीविते लोभ इति क किं घटते

जीवन्तीमपि मां [1]नरपतिमरणावधीरणमहापातकिनीं न [2]स्प्रक्ष्यन्ति [3]पुत्र पुत्रा-उपसुखानि। दुःखदग्धानां च [4]भूतिरमङ्गला चाप्रशस्ता च निरुपयोगा च भवति। [5]वत्स विश्वस्तानां यशसा स्थातुमिच्छामि लोके न वपुषा तदहमेव [6]त्वां तावत्तात प्रसादयामि न पुनर्मनोरथप्रातिकूल्येन कदर्थनीयास्मीत्युक्त्वा पादयोरपतत्। स तु ससंभ्रममपनीय चरणयुगलमवनमिततनुरुभयकरविधृत-[7]वपुषमवनितलगतशिरसमुदनमयन्मातरम्। दुर्निवारतां च शुचः समवधार्य कुलयोषिदुचितां [8]च तामेव श्रेयसीं मन्यमानः क्रियां कृतनिश्चयां [9]च तां ज्ञात्वा तूष्णीमधोमुखोभवत्। अभिनन्दति हि स्नेहकातरापि [10]कुलीनता देश-कालानुरूपम्। दे[11]व्यपि [12]यशोमती परिष्वज्य समाघ्राय च शिरसि निर्गत्य चरणाभ्यामेव चान्तःपुरात्पौराक्रन्द[13]प्रतिशब्दनिर्भराभिरुपरुध्यमानेव दिग्भिः सरस्वतीतीरं ययौ। तत्र च स्त्रीस्वभावकातरैर्दृष्टिपातैः प्रविकसितरक्तपङ्क-जपुञ्जैरिवार्चयित्वा भगवन्तं भानुमन्तमिव मूर्तिरैन्दवी चित्रभानुं प्राविशत्। इतरोपि मातृमरणविह्वलो बन्धुवर्गपरिवृतः पितुः पार्श्वं प्रायात्। [14]अपश्यञ्च स्वल्पावशेषप्राणवृत्तिं [15]परिवर्त्यमानतारकं [16]तारकराजमिवास्तमभिलषन्तं जन-यितारमसह्यशोकोद्रेकाभिद्रु[17]तश्च त्याजितः स्नेहेन धैर्यमाश्लिष्यास्य सकल दुर्मदमहीपालमौलिमालालालितौ पादपद्मावन्तस्तापान्मुखचन्द्रमिव द्रवीभ-वन्तं [18]दशनज्योत्स्नाजालमिव जलतामापद्यमानं [19]लोचनलावण्यमिव विलीय-मानं मुखसुधारसमिव स्यन्दमानमच्छाच्छमस्रुस्रोतसां सन्तानं महामेघमय-

भूतिः समृद्धिर्भस्म च। विश्वस्तानां विधवानां। अमावस्यायामिन्दु[20]र्भानुमन्तः प्रविशतीति प्रसिद्धं। चित्रभानुमग्निं। तारकराजं चन्द्रं। असह्येत्यादौ चिरं रुरो-देति सम्बन्धः। उद्रेक आधिक्यं। उपरुध्यमाना उपरोधवती दृष्टिर्बुद्धिर्यस्य सः।

---

T. read न पतिमरणावधीरणमहापतकिनीं स्प्रक्ष्यन्ति २. स्प्रक्ष्यन्ति
१. A K. Jambû ed. ३. A. B. D. omit पुत्र. ४. भूतिरमङ्गलं. A. B.
K1. संप्रक्ष्या read वत्स स्थाष्णु यशसा ६. तावत्त्वां तात A. B. ७. °वपुष-
D. ५. A. B. [illegible] bû ed. ८. च श्रेयसीं तामेव A. B. ९. K. K1. Jambû
वनिगत° K. K2. [illegible] B. T. ११. देव्यापि यशोमती शिरसि समाघ्राय निर्ग-
mit च. १०. कुलीना [illegible] K. K1. K2. K3. Jambû ed. १३. K. K1.
D. T. १२. यशो [illegible] यचाल्पशेष° A. B. T. १५. परिवर्तमान°
mit प्रतिशब्द. १४. [illegible] A. B. D. १८. दन्त° A. B. १९.
A. B. T. १७. अ [illegible]
B. २०. भानुमन्तं Jambû ed.

विलोचन इव [1]वर्षन्नितरवद्विमुक्तारावश्चिरं रुरोद । राजा तु तमुपरुध्यमान[2]दृष्टिरविरतरुदितशब्दाश्रितश्रवणः प्रत्यभिज्ञाय शनैःशनैरवादीत् । पुत्र ना[3]र्हस्येवं भवितुं भवद्विधा न ह्यमहासत्त्वाः । महासत्त्वता हि प्रथममवलम्बनं लोकस्य[4] पश्चाद्राजवीजिना[5] सत्त्ववतां [6]चाग्रणीः सर्वातिशयाश्रितः क्व भवान् क्व वैक्लव्यं । [7]कुलप्रदीपोसीति दिवसकरसदृशतेजसस्ते लघूकरणमिव पुरुषसिंहोसीति [8]शौर्यपट्टप्रज्ञोपवृंहितपराक्रमस्य निन्देव क्षितिरियं तवेति [9]लक्षणाख्यातचक्रवर्त्तिपदस्य पुनरुक्तमिव । गृह्यतां श्रीरिति स्वयमेव श्रिया [10]परिगृहीतस्य विपरीतमिव । अध्यास्यतामयं लोक [11]इत्युभयलोकविजिगीषोरपुष्कलमिव [12]स्वीक्रियतां कोशः शशिकरनिकरनिर्मलयशःसञ्चयैकाभिनिवेशिनो निरुपयोगमिव । [13]आत्मीक्रियतां राजकमिति [14]गुणगणात्मीकृत जगतो गतार्थमिव । उह्यतां राज्यभार इति भुवनत्रयभार[15]वहनोचितस्यानुचितनियोग इव । प्रजा परिरक्ष्यन्तामिति दीर्घदोर्दण्डार्गलितदिङ्मुखस्यानुवाद इव परिजनः परिपाल्यतामिति लोकपालोपमस्यानुषङ्गिकमिव । [16]सांतत्येन [17]शस्त्राभ्यासः कार्य इति धनुर्गुणकिणकलङ्ककालीकृतप्रकोष्ठस्य किमादिश्यते । नि[18]र्ग्राह्यतां [19]चापलजातमिति [20]नूतनतरवयसि निगृहीतेन्द्रियस्य निरवकाशैव मे वाणी नि[21]रवशेषतां शत्रवो नेया इति सहजस्य तेजस एवेयं चिन्ता । इत्येवं वदन्नेवापुनरुन्मीलनाय निमिमील [22]राजसिंहो

अवलम्बनमाश्रयः । राजवीजिता राजान्वयिता । कुलप्रदीपोसीत्यादौ [23]पूर्ववदाक्षेपाभ्यूहः । आनुषङ्गिकं प्रस्तावागतम् । अपुनरुन्मीलनाय पुनरप्रबोधनाय । निमिमील

---

१. वर्षन्नित मुक्ता° A. B. २. °दृष्टिरपि रुदित° A. B. D. ३. भवद्विधानां येथम स्त्ववतां तां हि प्रथम° A. भवद्विधानां भव्यानां महासत्त्ववतां हि प्रथम° B. ४. लोकस्य B. ५. राजवीजितां A. B. D. ६. चाग्रणीरसि सर्वाभि श्रयः A. B. D. ७. In A. and B. तथा हि precedes this senten . A. B. T. omit शौर्य लक्षणानि लख्यते marginally corrected . १०. K, K1. Jambû ed. गृहीतस्य. ११. इति लोकत्रितयविजिगीषो A. B. D. १२. आत्मीक्रियतां B. १३. स्वीक्रियतां A. B. १४. गुणगणात्म तजगतो A. B. १५. K. K2. Jambû ed. omit वहन. K1. Jambû ed. this ed. १७. शास्त्राभ्यासः A. B. D. ग्राह्यं A. B. १९. K. . K2. Jambû ed. २०. नूतन वयसि A. B. D. २° B. D. T. २२. लोचने राजसिंह. A. D. २३. वंश पूर्ववदाक्षे

लोचने [1]प्रत्यपद्यत च पूषात्मजः ॥ अस्मिन्नेवा[2]न्तरे पूषाप्यायुषेव तेजसा व्ययुज्यत ततश्च लज्जमान इव नरपतिजीवितापहरणजनितादात्मजापराधादधोमुखः समभवत् । भूपालाभावशोकशिखिनेव चान्तस्ताप्यमानस्ताम्रतां प्रपेदे । मन्दं मन्दमप्रियप्रश्नार्थमिव च स्थितिमनुवर्त्तमानो लौकिकी-[3]मैवातरद्दिवः । दित्सुरिव जनेशाय जला[4]ञ्जलिमपरज[5]लनिधिसमीपमुपससर्प । सद्योदत्तनृपजलाञ्जलिर्दुःखदहनदग्धमिव [6]करसहस्रमालोहितमाधत्त । एवं च महानराधिपनिधननिधीयमानविपुलवैराग्य इव शान्तवपुषि विशति गिरिगुहागह्वरं गभस्तिमालिनि [7]समुपोह्यमानमहाजनास्रुदुर्दिनार्द्रीकृत इव निर्वात्यातपे रोदनताम्रसकललोकलोचनरुचेव लोहितायति जगति । ऊष्मायमानानेकनरनिःश्वाससन्तापप्लुष्ट इव च [9]नीलायमाने दिव[10]से नृपानुगमनप्रचलितयेव लक्ष्म्या विमुच्यमानासु कमलिनीषु पतिशुचेव [11]परिवृतच्छायायां श्यामायमानायां भुवि कु[12]लपुत्रेष्विव परित्यक्तकलत्रेषु कृतकरुणप्रलापेषु वनान्तानाश्रयत्सु दुःखितेषु चक्रवाकेषु छत्रभङ्गभीतेष्विव निगूढकोशेषु कुशेशयेषु स्फुटितदिग्वधूहृदयरुधिरप[13]टलप्लव इव गलिते रक्तातपे

प्रत्यपद्यत प्राप्तः । पूष्ण आत्मजो यमः । एवं चेत्यादावस्मिन्नस्मिन्सति नरेन्द्रो हुताशनसत्क्रियया यशःशेषतामनीयतेति सम्बन्धः । गभस्तीन् रश्मीन्मलते धारयतीति गभस्तिमाली सूर्यः । तस्मिन् समुपोह्यमानं वर्धमानं [14]निर्वाति शाम्यति सति । यथार्द्रीकृतः सोवश्यं निर्वाति शीतलीभवति । छायातपप्रतिपक्षजातिः कान्तिश्च । श्यामा रात्रि[15]र्नायिका च । वनं तोयं विपिनं च । छत्रभङ्गो राजदण्डः पत्राणां च छत्राकारताभेदः । कोशो गञ्जः कर्णिका च ।

१. K. A. D. T. omit this sentence. २. एव चान्तरे A. B. ३. अवततार दिवः A. B. T. ४ °जलमपर° A. B. ५. जलधिमुपससर्प K. Jambû ed. ६. A. read चालोहितमधत्त करसहस्रं. ७. समुपो- B. ८. रोदनाताम्र A. B. D. ९. A. B. T. omit. च १०. दिने ११. परिवृत्त° A. १२. कुलपुत्रेषु छत्रभङ्गभीतेष्विव A. K. K1. Jambû ed. omit पटल. १४. निर्वात्य C2. Jambû

क्रमेण च लोकान्तरमुपगत[1]वत्यनुरागशेषे जाते तेजसामधीशे गगनतलवितन्यमानबहलरागपाटलायां प्रेतपताकायामिव प्रवृत्तायां सन्ध्यायां शवशिबिकालङ्कारकृष्णचामरमालास्विव विस्फुरन्तीषु दर्शनप्रतिकूलासु तिमिरलेखासु। असितागुरुकालकाष्ठायां केनापि चितायामिव रचितायां रजन्यां दन्तामलपत्रप्रसाधित[2]कर्णिकासु केसरमालाकल्पितमुण्डमौलिकास्व[3]नुमर्त्तुमिवोद्यतासु प्रहसितमुखीषु कुमुदलक्ष्मीषु। अवतरत्त्रिदशविमानकिङ्किणीक्वणित इव श्रूयमाणे शाखिशिखरकुलायलीयमानशकुनिकुलकूजिते नाकपथ[4]प्रस्थित पार्थिवप्रत्युद्गतपुरुहूतातपत्र इव पूर्वस्यां दिशि दृश्यमाने चन्द्रमसि नरेन्द्रः स्वयं समर्पितस्कन्धैर्गृहीत्वा शवशिबिकां शिबिसमः सामन्तै[5]ः पौरैश्च पुरोहितपुरःसरैः सरितं सरस्वतीं नीत्वा नरपति[6]समुचितायां चितायां हुताशसत्क्रियया यशःशेषतामनीयत। देवोऽपि हर्षः पुञ्जीभूतेन सकलेनेव जीवलोकेन लोकेन राजकुलसम्बद्धेनाशेषेण शोकमूकेन परिवृतोऽन्तर्वर्त्तिनापि शोका[7]नलतप्तेन स्नेहद्रवेण बहिरिव सिच्यमानो निर्व्यवधानायां धरण्यामुपविष्ट एव तां निशीथिनीं भी[8]मरथीमिमामखिलां स[9]राजको जजागार। अजनि चास्य चेतसि ताते दूरीभूते सम्प्र[10]त्येनानाथः खलु जीवलोको लोकस्य भग्ना[11]ः पन्थानो

अनुरागो भक्तिर्लौहित्यं च। तेजसामधीशो राजापि। शवशिबिका मृतयानं। चामरमाला अपि दर्शनप्रतिकूलाः। काष्ठा दिशो दारु च। काष्ठं दन्तवत्तस्य चामलं पत्रं। कर्णिका कर्णाभरणं च। केसरशब्दः किञ्जल्कबकुलयोः। शिबिर्नाम राजर्षिरभूत्। निशीथिनी रात्रिं। भीमरथी नरकनदी कालरात्रिर्वा। अन्ये तु सप्तसप्तत्या वर्षैस्तत्संख्यैश्च मासैर्दिनैश्च तावद्भिर्गतैरेकारात्रिर्भीमरथी भवति। तामतिक्रान्तो वर्षशतजीवी नरो भवतीति प्राहुः। जीवलोकः संसारः।

---

१. उपगते A. B. २. °प्रसादित° K. K1. Jambû ed. ३. °मालिकासु भर्तुमिवोद्यतासु A. B. D. ४. A. B. D. omit पथ. ५. सामन्तैश्च A. B. D. ६. नरपतिः समुपचितया चिताहुताशनक्रियया यशःशेषतामनीयत A. B. D. ७. दुःखानलतप्तेन A. B. ८. भैमरथी. A. B. D. ९. सजागरः K. K1. Jambû ed. १०. सम्प्रत्येवायं खल्वनाथीभूतो जीवलोकः A. B. D. T. ११. हताः A. B. D.

मनोरथानां खिलीभूतानि [1]भूतिस्थानानि स्थगितान्यानन्दस्य द्वाराणि सुप्ता सत्यवादिता लुप्ता लोकयात्रा विलीना बाहुशालिता प्रलीना प्रियालापिता प्रोषिताः पुरुषकार[2]विहारविकाराः समाप्ता समरशौण्डता ध्वस्ता परगुणप्रीतिर्विश्रान्ता विश्वासभूमयो[4]पदान्यपदानानि निरुपयोगानि शास्त्राणि निरवलम्बना विक्रमैकरसता कथावशेषा विषेषज्ञता। ददातु जनो जलाञ्जलिमौर्जित्याय [5]प्रतिपद्यतां प्रव्रज्यां प्रजापालता बध्नातु वैधव्यवेणीं वरमनुष्यता समाश्रयतु राजश्रीराश्रमपदं परिधत्तां धवले [6]वाससी वसुमत [7]वहतु वल्कले विलासिता तपस्यतु तपोवनेषु तेजस्विता प्रावृणोतु चीवरे। वीरता क्व गम्यतां पुनर्[8]स्तस्य कृ[9]ते कृतज्ञतया क्व पुनः [10]प्रांस्यति तादृशान्महापुरुष[11]निर्माणपरमाणून्परमेष्ठी। शून्याः संवृत्ता दशदिशो गुणानां जगज्जातमन्धकारं धर्मस्य निष्फलमधुना जन्म शास्त्रोपजीविनाम्। तातेन विना कुतस्त्या[12]स्तादृश्यो दिव[13]समसमसमररससमारब्धकलहकथाकण्टकितसुभटकपोलभित्तयो [14]वीरगोष्ठ्यः। स्वप्नेपि किं दृश्येत दीर्घरक्तनयनं पुनस्तन्मुखसरोजम्। जन्मान्तरेपि पुनः परिष्वज्येत तल्लोहस्तम्भाभ्यधिकगरिमगर्भं भुजयुगलं लोकान्तरेपि पुत्रेत्यालपतः पुनः पुनः श्रूयेत सा सुधारसमुद्गिरन्ती मथ्यमानक्षीरसागरोद्गारगम्भीरा भारतीत्येतानि चान्यानि च चिन्तयत एवास्य कथमपि सा [15]क्षयमियाय यामिनी॥

ततः शुचेव मुक्तकण्ठ[16]मारटत्सु कृकवाकुकुलेषु गृहगिरितरुशिखरेभ्यः पात-

खिलीभूतानि शून्यानि। लोकयात्रा व्यवहारः। प्रावृणोतु परिदधातु। लहो रणः। ततः शुचेत्यादौ चचाल स्नानाय देवो हर्ष इति सम्बन्धः। शुचेवेति है गिर्यादौ योज्यम्।

---

१. भूतानि स्थानानि K2. Jambû ed. विभूते स्थानानि A. D. विभूतः corrected in R २. A. B. D. omit विहार. ३. प्रमृष्टा A. B. D. ४. अपगतान्यवदातकर्माणि A. B. ५. प्रपद्यतां A. प्रत्यपद्यतां B ६. D. omits वाससी. ७. A. R. D. read बध्नातु वल्कले मनस्विता. ८. तस्याः कृते कृतज्ञतायाः A. B. T. ९. कृतज्ञे K3. Jambû ed. १०. प्राद्यति A. B. T. ११. °निर्माणः A. १२. K. K1. Jambû ed. omit तादृश्यः १३. दिवसमसमसमरसंरब्ध° A. B. D. T. १४. शूरगोष्ठ्यः A. B. D. १५. साक्षिपा क्षयमियाय A. B. D. १६. मारवत्सु A.

यत्स्वात्मानं मन्दिरमयूरेषु परित्यक्त[1]निजनिवासेषु च वनाय प्रस्थितेषु पत्ररथेषु सद्यस्तनूभूते ताम्यति तमसि मन्दीभूतात्मस्नेहेष्वभावमभिलषत्सु प्रदीपेषु स्फुरदरुण[2]किरणवल्कलप्रावृतवपुषि प्रव्रज्यामिव प्रतिपन्ने नभसि प्रभात[3]समयेन समुत्तीर्यमाणासु पार्थिवास्थिशकलकलास्विव कलविङ्ककन्धराधूसरासु तारकासु [4]भूभृद्धातुगर्भकुम्भधारिषु विविधसरःसरित्तीर्थाभिमुखेषु प्रस्थितेषु वनकरिकुलेषु [5]शावशुचिसिक्थपटलपाण्डुरे पिण्ड इवापर[6]पयोनिधिपुलिनपरिसरे पात्यमाने शशिनि क्रमेण च नृपति[7]चिंतानलधूमविसरधूसरीकृतन-तेजसीव नृपतिशोकपावकदाहकिणकलङ्ककालीकृतचेतसीव [8]प्रोषितसमस्तान्तः[9]पुरपुरन्ध्रिमुखचन्द्रवृन्दोद्वेगविद्राणवपुषीव प्रथमास्तमितरोहिणीरणरणकविमनसीव चास्तमुपगते रजनिकरे राजतीव देवे [10]दिवमारूढे सवितरि [11]परिवृत्ते राज्य इव रजनीप्रबन्धे प्रबुद्धराजहंसमण्डलप्रबोध्यमानः पङ्कजाकर इव चचाल [12]चोपस्नानाय देवो हर्षः । ततश्च नूपुररवविराममूकमन्दमन्दिरहंसेषु शोकाकुलकतिपयकञ्चुकिमात्रावशेषेषु शुद्धान्तेषु पतितयूथप इव वनगजयूथे कक्ष्यान्तरवर्त्तिनि पितृपरिजने विषादिन्युपरिरुदन्निषादिनि च स्तम्भनिषण्णे निष्पन्दमन्दे राजकुञ्जरे [13]मन्दुरापालकाक्रन्दकथिते चाजिरभाजि राजवाजिनि विश्रान्तजयशब्दकलकले च शून्ये च महास्थानमण्डपे दह्यमानदृष्टिर्निर्जगाम राजकुलात् । अगाच्च [14]सरस्वतीतीरं तस्यां च स्नात्वा

स्नेहः प्रेम तैलं च । अरुणो रविसारथिर्लोहितं चारुणं । कलविङ्कः ग्रामचटकः । भूभृद्गिरी राजा च । धातवो लघून्यस्थीनि गैरिकाद्याश्च । कुम्भौ [15]कपाटौ घटश्च कुम्भः । शावे धूसरे शवसम्बन्धिनि च । सिक्थं भक्तं मधूच्छिष्टं च । राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः । राजहंसा इव राजानो हंसाश्च । ततश्चेत्यादावस्मिन्नस्मिन्सति दह्यमानदृष्टिर्निर्जगाम राजकुलादिति सम्बन्धः । निषादी हस्तिपकः ।

---

१. K. K1. K2. Jambû ed. omit. निज. २. K. K1. K2. Jambû ed. omit किरण. ३. °समये समुच्चीयमानास्व A. B. D. ४. भूभृद्धातुगर्भ° A. B. ५. शावे शर्वर्यां A. B. D. ६. °पयोधि A. B. T. ७. °चितागल [ मल B. ] धूमधूसरी° A. B. D. ८. °कृतोरसीव A. B. D. T. ९. °अन्तःपुरन्ध्रिषु चन्द्रोद्वेग° A. T. १०. दिवमधिरूढे A. B. D. T. ११. प्रतिनिवृत्ते राज्ञीव A. B. D. १२. K. K1. K2. Jambû ed. omit this. १३. मन्दुरापालाक्रन्दकदर्थिते A. B. १४. सरस्वतीमेव. A. B. T. १५. कवाटौ C2.

पित्रे ददावुदकम् । अपस्नातश्चानिष्पीडितमौलिरेव परिधायोद्गमनीयदुकूल[1]वा-[2]
ससी निःश्वासपरो निरातपत्रो निरुत्सारणः[3] समुपनीतेपि सप्तौ[4] चरणाभ्यामेव
नासाग्रासक्तेन रक्ततामरसताम्रेण चक्षुषा हृदयावशेषस्यापि[5] पितुर्दाहशङ्कया
शोकाग्निमिवोद्गिरन् । अताम्बूलस्यापि सुचिर[6]प्रक्षालितस्य कल्पतरुकिसलय-
कोमलस्येव स्वभावपाटल[7]स्याधरस्याधरपल्लवस्य प्रभया[8] मांसरुधिरकवला-
निव हृदयाभिघातादुद्गमन्नुष्णनिःश्वासमोक्षैर्भवन[9]माजगाम । राजवल्लभास्तु
भृत्याः सुहृदः सचिवाश्च तस्मिन्नेवाहनि निर्गत्य[10] प्रियं पुत्रदारमुत्सृज्योद्बा-
ष्पैर्बन्धुभिर्वार्यमाणा अपि बहुनृपगुणगणहृतहृदयाः केचिदात्मानं भृगुषु [11]ब-
बन्धुः केचित्तत्रैव[12] तीर्थेषु तस्थुः केचिदनशनैरास्तीर्णतृणकुशा[13] व्यथमान[14]-
मानसाः शुचमसमामशमयन् केचिच्छलभा इव वैश्वानरं शोकावेग[15]विवशा
विविशुः केचिद्दारुणदुःखदहनदह्यमान[16]हृदया गृहीतवाचस्तुषारशिखरिणं श-
रणमुपययुः केचिद्विन्ध्योपत्यकासु वनकरिकुलकरशीकरासारसिच्यमानत-
नवः पल्लवशयनशायिनः सन्तापमशमयन्[17] केचित्सन्निहितानपि विषयानु-
त्सृज्य सेवाविमुखाः [18]परिच्छिन्नैः पिण्डकैरटवीभुवः शून्या जगृहुः केचित्प-
वनाशना धर्मधना धमद्धमनयो मुनयो बभूवुः केचिद्गृहीतकाषायाः कापिलं
मतमधिजगिरे[19] गिरिषु केचिदाचोटितचूडामणिषु शिरःसु शरणीकृत[20]धूर्ज-

अपस्नातेत्यादौ भवनमाजगामेति सम्बन्धः । अपस्नातो मृतस्नातः । मौलयः
केशाः । तस्यादुद्गमनीयं यद्धौतयोर्वस्त्रयोर्युगं । सप्ती हये । भृगुषु प्रपातेषु ।
[21]कुशोऽत्र सन्ध्या । पिण्डकैः शरीरैः । धमनयो [22]नाड्यः । अनेन कार्श्यं लक्ष्यते ।
अधिजगिरे अध्यैषत । आचोटित उत्खातः । धूर्जटिः शिवः ।

---

१. अपःस्नातश्च निःपीडित° A. B. D. T. २. °दुकूले निश्वासपरः A. B. D. T. ३ *Secunda manu* corrected to निरुत्साहः in A. ४. A. has the magrinal gloss अश्व ५. A. B. omit अपि. ६. सरिदम्बुप्रक्षालितस्य A. B. D. ७. °पाटस्याधरपल्लवस्य. A. B. ८. प्रभयानुविद्धान् सरुधिर° A. B. ९. °उद्गमन्नुष्णा-न्निश्वासान् पुनर्भवनमाजगाम A. B. D. १०. निर्गत्य त्यक्त्वा प्रियपुत्रदारानुद्बाष्पैः A. B. D. T. ११. बभञ्जुः A. B. १२ A. B. omit तत्रैव. १३. कुशाः क्रथ्यन्मनसः शुचमशमयन् A. B. D. १४. वृषमान° K. १५. शोकावेश-विवशाः A. B. १६. °दह्यमानविग्रहा गृहीतपादं तुषार° A B. D. १७. अग-मयन्. A. B. D. T. १८. परिखिन्नकैः A. B. १९. मनसाधिजगिरे. A. २०. शारीकृत° A. B. २१. कुथ्योत्र सन्ध्या C1. C2. for सन्ध्या marginal gloss दया in C1. २२. नाज्यः C1. C2.

टयो जटा जघटिरे। अपरे परिपाटलप्रलम्बचीवराम्बरसम्वीताः स्वाम्यनुरागमुज्ज्वलं चक्रुरन्ये तपोवनहरिण[1]जिह्वाञ्चलोलिह्यमानमूर्त्तयो जरां ययुः। अपरे [2]पुनः पाणिपल्लवप्रमृष्टैरानाम्रराग‍ैर्नयनपुटैः कमण्डलुभिश्च वारि [3]वहन्तो गृहीतव्रता मुण्डा विचेरुः। देवमपि हर्षं तदवस्थं पितृशोकविक्लवीकृतं श्रियं शाप इति महीं महापातकमिति राज्यं रोगा इति भोगान्भुजङ्गा इति निलयं निरय इति [4]बन्धून्बन्धनमिति जीवितमयश इति देहं द्रोह इति कल्यतां कलङ्क इत्यायुरपुण्यफलमित्याहारं विषमिति विषममृतमिति चन्दनं [5]दहनमिति कामं [6]क्रकच इति हृदय[7]स्फोटनमभ्युदय इति च मन्यमानं सर्वासु क्रियासु विमुखं पितृपितामहपरिग्रहागताश्चिरन्तनाः [8]कुलपुत्रा वंशक्रमाहितगौरवाश्च ग्राह्यगिरो गुरवः श्रुतिस्मृतीतिहासविशारदाश्च जरद्द्विजातयः श्रुताभिजनशीलशालिनो [9]मूर्धाभिषिक्ताश्चामात्या राजानो यथावद[10]धिगताध्यात्मतत्त्वाश्च संस्तुता मस्करिणः [11]समदुःखसुखाश्च समाश्रिताः सनाभयश्चित्तज्ञाश्च प्रध्मनाः सचिवा निष्कारणबान्धवाश्च मुनयः [12]संसारासारत्वकथनकुशला ब्रह्मवादिनः शोकापनयननिपुणाश्च पौराणिकाः पर्यवारयन्। अस्वतन्त्रीकृतश्च तैर्मनसापि नालभत [13]शोकानुप्रवणमाचरितुम्। [14]प्रचुरमि-

वारि अश्रु उदकं च। देवमित्यादौ देवमपि हर्षमेवंविधा जनाः पर्यवारयन्निति सम्बन्धः। कल्यतामरोगितां। ग्राह्यगिर आदेयवाचः। अध्यात्ममात्मज्ञानं। तत्त्वमिति कर्त्तव्यता। मस्करिणः परिव्राजकाः। सनाभयः सगोत्राः शौचानुप्रवणं शरीरबाधादि।

---

१. जिह्वालतालिह्यमानमूर्तयो राज्याङ्गरागमक्षपयन्. A. B. *secunda manu* corrected to राज्यान्नगरागमक्षपयन् in A. २. पुनःपुनः A. B. ३. A. B. T. read वहन्तो महीं भुजङ्गा इति and so on. ४. बन्धुबन्धमिति K. K1. K2. Jambû ed. ५. दहन इति. A. B. D. ६. क्रकचमिति A. B. ७. स्फुटन° A. B. ८. कुलपुत्रवंश A. B. D. ९. अभिषिक्ताश्च मान्या राजानः A. B. १०. अधिगतात्म° K. K1. Jambû ed. ११. K. K1. K2. Jambû ed. read समदुःखसुखाश्च मुनयः १२. संसारकथनकुशलाश्च A. B. D. १३. शोकमनुप्रचरितुं K. K1. K2 Jambû ed. १४. K. K1. Jambû ed. omit प्रचुरमित्र.

त्रानुनीयमानश्च सनाभिभिः कथं कथमप्याहारादिकासु क्रियास्वाभिमुख्यमभजत। भ्रातृगतहृदयश्चाचिन्तयत्। अपि नाम तातस्य मरणं महाप्रलयसदृशमिदमुपश्रुत्यार्यो बाष्पजलस्नातो न गृह्णीयाद्वल्कले नाश्रयेद्वा राजर्षिराश्रमपदं न विशेद्वा पुरुषसिंहो गिरिगुहाम्। अश्रुसलिलनिर्भरभरितनयननलिनयुगलो वा पश्येदनाथां पृथिवीं [1]प्रथमव्यसनविषमविषविह्वलः स्मरेदात्मानं वा पुरुषोत्तमः। अनित्यतया जनितवैराग्यो वा न निराकुर्य्यादुपसर्पन्तीं राज्यलक्ष्मीं दारुणदुःखदहनप्रज्वलितदेहो वा प्रतिपद्येताभिषेकं। इहागतो वा राजभिरभिधीयमानो न [2]पराचीनतामाचरेदिति। अतिपितृपक्षपाती खल्वार्यः सर्वदा तात[3]श्लाघायां मामभिधत्ते तात हर्ष कस्यचिदभूद्भविष्यति वा पुनः काञ्चनतालतरुप्रांशुप्रमाणमिदमीदृ[4]क्च दिवसकरप्रीत्या दिवसमुन्मुखविकसितं मुखमहाकमलम्। एतौ च वज्रस्तम्भभास्वरौ भुजकाण्डावेते च हसितमदालसहलधरविभ्रमा विलासाः कोन्यो मानी विक्रान्तो वदान्यो वेति। एतानि चान्यानि च चिन्तयन्दर्शनोत्सुकहृदयो भ्रातुरागमनमुदीक्षमाणः कथं कथमप्यतिष्ठदिति॥

[5]इति श्रीमन्महाकविचक्रचूडामणिश्रीबाणभट्ट[6]विरचिते हर्षचरिते महाकाव्ये महाराजमरणं नाम पञ्चम उच्छ्वासः सम्पूर्णः॥ ५॥

बाष्पजलस्नातो न गृह्णीयाद्वल्कल इति प्रतीयमानता बोद्धव्या। अत्र च सर्वत्र नेत्याशङ्कायां। पुरुषोत्तमो हर्षो हरिरपि। पराचीनता पराङ्मुखत्वमनानुकूल्यं वा॥ मुखकमलस्य दिवसकरप्रीतिः प्रतापित्वं। वदान्यो दाता। [7]इति श्रीशङ्करकविविरचिते श्रीहर्षचरितसङ्केते पञ्चम उच्छ्वासः समाप्तः॥ ५॥

---

१. प्रथमव्यसनविषविह्वलो वा न विस्मरेत. A. B. D. २. पराचीनमा° A. B. ३. °श्लाघया K. K1 Jambû ed. ४. इदं च दिवसकरप्रीत्यतिशया दिवसमुन्मुखं A. B. ५. इति हर्षचरिते पितृमरणो नाम पञ्चम उच्छ्वासः A. B. T. इति श्रीहर्षचरिते राजमरणं नाम K. ६. °कृतौ K2 Jambû ed. ७. शङ्कररचित हर्षचरितसङ्केते पञ्चम उच्छ्वासः C1. C2.

# ॥ षष्ठ उच्छ्वासः प्रारभ्यते ॥

[1]उच्चित्योच्चित्य भुवि प्रहितनिगूढात्मदूतनीतानाम् ।
विजिगीषुरिव कृतान्तः शूराणां सङ्ग्रहं कुरुते ॥ १ ॥
वि[2]स्रब्धघातदोषः स्ववधाय खलस्य वीरकोपकरः ।
[3]नवतरुभङ्गध्वनिरिव हरिनिद्रातस्करः करिणः ॥ २ ॥

अथ प्रथमप्रेतपिण्ड[4]भुजि भुक्ते द्विजन्मनि गतेषूद्वेजनीयेष्व[5]शौचदिवसेषु चक्षुर्दाहदायिनि दीयमाने द्विजेभ्यः शयनासनचा[6]मरातपत्रामत्रपत्रशस्त्रादिके नृपतिनिकटोपकरणकलापे नीतेषु तीर्थस्थानानि सह जनहृदयैः की[7]कसेषु कल्पितशो[8]कशल्येषु सुधानिचयचिते चिताचैत्यचिह्ने वनाय विसर्जिते महाजिजिति रा[9]जगजेन्द्रे क्रमेण च मन्देष्वा[10]क्रन्देषु विरलीभवत्सु च विलापेषु विश्राम्यत्यस्रुणि शिथिलीभवत्सु श्वसितेष्व[11]स्पष्टेषु हाकष्टेषूत्सार्यमाणासु च व्यसनशय्यासूपदेशश्रवणक्षमेषु श्रोत्रेष्वनुरोधावधानयोग्येषु [12]हृदयेषु गणनीयेषु नृपगुणेषु प्रदेशवृत्तितामाश्रयति [13]शोके कृतेषु कविरुदितकेषु जाते च स्वप्नावशेषदर्शने हृदयावशेषावस्थाने चित्रावशे-

उच्चित्येति । कृतान्तोन्तकः शूराणां सङ्ग्रहं कुरुते । किं कृत्वोच्चित्योच्चित्य यथा प्रधानं प्रहिता निगूढाः स्वभावप्रच्छन्ना यमदूता यमकिङ्करास्तैर्नीतानाम् । विजिगीषुर्यथान्विष्यान्विष्यात्मदूतानां शूराणां सङ्ग्रहं कुरुते । अनेनोच्छ्वासार्थः सङ्गृहीतः । तथा हि कृतान्तो विनाशो येन स शशाङ्कनामा गौडाधिपतिः शूराणां राज्यवर्धनानुचराणां प्रधानराजपुत्राणां तत्सहितानां सङ्ग्रहमकरोत् । कथमुच्चित्योच्चित्यान्विष्यान्विष्य । कीदृशानां प्रहितनिगूढात्मदूतानाम् । तथा हि तेन शशाङ्केन विश्वासार्थं दूतमुखेन कन्याप्रदानमुक्त्वा प्रलोभितो राज्यवर्धनः स्वगेहे सानुचरो भुञ्जान एव छद्मना व्यापादितः ॥ १ ॥

[14]अत एव चाह विस्रब्धेत्यादि । खलो[15]त्र गौडापसदः शशाङ्को वीरश्च हर्षः ॥२॥

---

१. K. K1. Jambú ed. C1. C2. prefix. ओं. २. विश्रम्भघात° A. B. ३. वनतरु° D. ४. भुजि भुजि A. B. ५. आशौचदिनेषु A. B. D. ६. चामरात-पत्रामत्रशस्त्रपत्रादिके. A. B. ७. कीकसशकालारेष्वकल्पिते A., कीकसशकलेषु B. D. ८. शोकशल्ये A. B. D. ९. राजगजे A. B. १०. A. B. D. T. omit आक्रन्देषु. ११. अस्पष्टेषु K. K1. १२. हृदयेषु खिन्नेषु नृपगुणग्रहणेषु A. B. D. १३ शोककृतेषु K K1. १४. अत एवाह विस्रम्भेत्यादि C1. C2. १५. खलेन गौडान्यापदेशेन C1. C2.

षाकृतौ काव्यावशेषनाम्नि नरनाथे देवो हर्षः कदाचिदुत्सृष्टव्यापारः[1] पुञ्जीभूतवृद्धबन्धुवर्गाग्रेसरेणावनतमूकमुखेन महाजनेन[2] मौलेनाकाले आत्मानं वेष्ट्यमानमद्राक्षीत्। दृष्ट्वा चाकरोन्मनसि किमन्यदार्यमागतमावेदयत्ययं[3] शोकपराभूतो लोकोत्कर[4] इति वेपमानहृदयश्च पप्रच्छ प्रविशन्तमधिकृत[5]रप्रचारमन्यतमं पुरुषम्। अङ्ग कथय किमार्यः प्राप्त इति स मन्दमब्रवीत्। देव यथादिशसि द्वारीति श्रुत्वा च सोदर्यस्नेहनिहितनिरतिशयमन्युमूढकृतमनाः कथमपि न वैवाम[6] बाष्पवारिप्रवाहोत्पीडेन सह जीवितम्। अनन्तरं च द्वारपालप्रमुक्तेन प्रथमप्रविष्टेन परिजनेनैवाक्रन्देन[7] कथ्यमानं दूरद्रुतागमनमुषितबाहुल्येन विच्छिन्नच्छत्रधारेण लम्बिताम्बरवाहिना भ्रष्ट[8]भृङ्गारग्राहिणा च्युताचमनधारिणा[9] ताम्यत्ताम्बूलिकेन खङ्गखड्गग्राहिणा[10] [11]कतिपयप्रकाशदासेरकप्रायेण बहुवासरान्तरितस्नानभोजनशयनश्यामक्षामवपुषा परिजनेन परिवृतमविरलमार्गधूलिधूसरितशरीरतया शरणीकृतमि[12][13]·

अथ प्रथमेत्यादावस्मिन्नस्मिन्सति देवो हर्षो मौलेन महाजनेनात्मानं सकलं वेष्ट्यमानमद्राक्षीदिति सम्बन्धः। भोजनं भुक्तं तदस्यास्तीति। अर्श आदिभ्योऽच्। अमत्राणि पात्राणि। पत्राणि वाहनानि। कीकसेष्वस्थिषु। चितायां चैत्यचिह्नस्थमाकारं चिह्नं श्मशानेदेवगृहं वा। कविरुदितकेषु दुःखोद्दीपनेकाव्येषु। लोकोत्करो जनसमूहः। मन्युः शोकः। अनन्तरमित्यादौ प्रविशन्तं ज्येष्ठं भ्रातरमद्राक्षीदिति सम्बन्धः। परिजनेनापि प्रथमप्रविष्टेन द्वारपालप्रमुक्तेन च। आचमनं पतद्ग्रहः। प्रकाशा अन्तरङ्गत्वान्निश्चीयमानाः[14]। दासेरकाः

---

१. उत्सृष्टव्यापारेण A. B. D. २. महाजनेनात्मनमकाल एवावेष्टयमानम° A. B. D. ३. दार्यागमनादवेदयत्ययमगृहीतशोकाकुलो लोकाकरः A. B. D. ४. लोकाकरः K. K1. ५ अधिकपदप्रचारम° A. B. D. ६. वदाम A. B. ७. एवाक्रन्दितेन A. B. ८. भ्रष्टशृङ्गार° A. B. T. ९. आचमनकधारिणा A. B. D. १०. स्वञ्जत्खड्ग° A. ११. कतिपयासपरिश्रान्तदासेरक° A B. D. १२. क्रियमाणमिवा° A. B. १३. °कालेषु Jambû ed. १४. अन्तरङ्गत्वात C2.

वाशरणया क्रमागतया वसुन्धरया हूननिर्जयसमरशरव्रणबद्धपट्टकैर्दीर्घधवलैः समासन्नराजलक्ष्मीकटाक्षपातैरिव शबलीकृतकायमत्रानिपतितप्राणपरित्राणार्थमिव शोकहुतभुजि हुतमांसं निकृत्तशरीरयन्त्रैर्गात्रैर्व्यमानदुःखभारमपगतचूडामणिनि मलिनाकुलकुन्तले शोकशून्ये शिरसि शुचमारूढमूर्त्तिमतीमिव दधानमनपगलितस्वेदराजिना रुदतेव पितृपादपतनोत्कण्ठितेन ललाटपट्टेन लक्ष्यमाणं प्रथीयसा वाष्पपयःप्रवाहेन वाभिमतपतिमरणमूर्च्छितामिव महीमनवरतमभिषिञ्चन्तमनन्तसन्ततास्रप्रवाहनिपतननिम्नीकृताविव दुःखक्षामौ कपोलावुद्वहन्तमन्दुर्गमुखमारुतमार्गगतेन द्रवेनेव गलिततांबूलरागेणाधरबिम्बेनापलक्षितं पवित्रिकामात्रावशेषचन्द्रनीलिकांशुश्यामायमानमचिरश्रुतपितृमरणमहाशोकाग्निदग्धमिव श्रवणप्रदेशमुद्वहन्तमस्फुटाभिव्यक्तव्यञ्जनेनाप्यधोमुखस्तिमितनयननीलतारकामयूखमालाखचितेन शोकप्ररूढश्मश्रुश्यामलेनेव मुखशशिना लक्ष्यमाणं केसरिणमिव महाभूभृद्विनिपातविह्वलं निरवलम्बनम्। दिवसमिव तेजःपतिपतनपरिम्लानश्रियं श्यामीभूतं नन्दनवनमिव भग्नकल्पपादपं विच्छायं दिग्भागमिव प्रोषितदिक्कुञ्जरं शून्यं गिरिमिव गुरुवज्रपातदारितं प्रकम्पमानं क्रीतमिव कृशिम्ना किङ्करीकृतमिव कारुण्येन दासीकृतमिव दौर्मनस्येन शिष्यीकृतमिव शोचितव्येनान्धीकृतमिवाधिना मूकीकृतमिव मौनेन निष्पिष्टमिव पीडया स्विन्नमिव सन्तापेनाचान्तमिव चिन्तया विलुप्तमिव विलापेन धूतमिव वैराग्येण प्रत्याख्यातमिव प्रतिसंख्यानेनावज्ञातमिव प्रज्ञया

दासीसुताः। शेखर आपीडः। अधः बिम्बेनापीतीत्थम्भूतलक्षणे तृतीया। अभिव्यञ्जनं श्मश्रु। भूभृद्राजा गिरिश्च। तेजःपतिर्नृपतिः सूर्यश्च। श्यामः कृष्णः श्यामा च रात्रिः। कल्पपादपो राजापि। छाया कान्तिरातपाभावश्च। प्रत्याख्यातं त्यक्तम्। प्रतिसंख्यानेन विवेककुशलया बुद्ध्या। कलितं धृतम्।

---

१. हूणनिर्जयसमरसरसत्रणपट्टकैः A. B. D. २. राज्यलक्ष्मी K. K1. ३. अतिकृशैरङ्गैरावेद्यमान° A. B. D. ४. °शून्यशिखे A. B. ५. A. B. D. omit this word. ६ A. B. T. omit उपलक्षितं. ७. °नीलांशु° A. B. D. ८. गुरुवज्रपतनताडितं A. B. ९. आत्मीकृत° K. K1. K2. १०. वृतमिव A. B. ११. अधरबिम्बेनापीत्थं C1. C2.

दूरीकृतमिव दुरभिभवत्वेनाबोध्येन वृद्धबुद्धीनामसाध्येन साधुभाषितानामगम्येन गुरुगिरामशक्येन शास्त्रशक्तीनामपथेन प्रज्ञाप्रयत्नानामगोचरेण सुहृदनुरोधानामविषयेण विषयोपभोगानामभूमिभूतेन कालक्रमोपचयानां शोकेन कवलीकृतं ज्येष्ठं भ्रातरमपश्यत् । आवेगोद्गतकृत्स्नस्नेहोत्कलिकाकलापोत्क्षिप्यमाणकाय इव च परवशः समुदगात् ॥

अथ तं दूरादेव दृष्ट्वा देवो राज्यवर्धनश्चिरकालकलितं बाष्पावेगं मुमुक्षुः सुदूरप्रसारितेन संकल्पयन्निव सर्वदुःखानि दीर्घेण दोर्दण्डद्वयेन गृहीत्वा कण्ठे मुक्तकण्ठं पुनः पतितक्षौमे क्षामे वक्षसि पुनः कण्ठे पुनः स्कन्धभागे पुनः कपोलोदरे निधाय तथा तथा रुरोद । यथा सम्बन्धनानीवोदपाट्यन्त हृदयानि । अश्रुस्रोतः शिरा इवामुच्यत लोचनेषु लोकेन स्मृतनृपतिना राजवल्लभेनापि प्रतिशब्दकनिभेन निर्भरमिवारुद्यत सुचिराच्च कथं कथमपि निर्वृष्टनयनजलधरः पर्जन्य इव शरदि स्वयमेवोपशशाम । उपविष्टश्च परिजनोपनीतेन तोयेन तरत्करनखमयूखपुञ्जतया महोजलप्लवजायमानफेनलेखमिव पुनः पुनः प्रमृष्टमपि पक्ष्माग्रसङ्गलग्नबाष्पबिन्दुवृन्दमन्दोन्मेषमुषितदर्शनं कथंकथमपि चक्षुरक्षालयत् । ताम्बूलिकोपस्थापितेन च वाससा चन्द्रातपशकलेनेवोष्णोष्णबाष्पदग्धं वदनमुन्ममार्ज तूष्णीमेव च स्थिरं स्थित्वोत्थाय स्नानभूमिमगात् । तस्यां च स्थित्वा विभूषं वित्रस्तव्यस्तकुन्तलं मौलिमनादरान्निष्पीड्य सावशेषमन्युस्फुरितेन जिह्मीविषतेव जल-

बन्धनं लाभं । पर्जन्य इन्द्रः। पर्जन्यौरसदभ्रेन्द्रावित्युक्तेः। स हि मेघान्वर्षयति । वित्रस्ता ऊर्ध्वे क्षिप्ता निर्गता इत्यन्ये । व्यस्ता विक्षिप्ताः।कुन्तलाः केशाः । उक्तं च । चिकुरः कुन्तलो वालः कचः केशः शिरोरुह इति ।

---

१.असह्येन A. B. D. २ °क्रमापचयानां A.B. ३. प्रविशन्तं ज्येष्ठं A. B. D. T. ४. च्चिरं A. D. ५. कालकल्पितं K. K1 Jambû ed. ६. संकलयन्निव A. B. T. ७. पातितं° A. B. ८ निधाय निधाय मुखं तथा रुरोद A B. ९. यथा बन्धनातीवो. रुपाट्यन्ते A. १०. K. K1. K2. Jambû ed. omit this sentence up to स्मृतनृपतिना. ११. लोकस्य B. १२. राजभवनेनापि A. B. D. १३. °नयनजलः K. K1. K2. Jambû ed. १४. तरलक्षरन्नख° A. B. D. तरत्करनख° K. K1. १५. महाजव° A. B. १६. उन्मृज्य A. B. D. १७. च्चिरं A. B. D. T. १८. तस्यां च स्नात्वा विक्रस्तव्यस्त° A. B. १९. जिजयिषतेव A. B. D.

धौतसुभगमात्मानमपि चुचुम्बिषतेवाधरेण क्षालितस्य चक्षुषः श्वेतिम्ना च शारदशशिकरविकसित[१]विषदकुमुदवनदलावलिबलिविक्षेपैरिव दिग्देवतार्चन-कर्म कुर्वाणश्चतुःशालवि[२]तर्दिकाविनिवेशितायामप्रतिपादिकायां चापाश्रयवि-निहितैकोपबर्हणायां पर्यङ्किकायां निपत्य जोषमस्थात्। देवोऽपि हर्षस्तथैव च स्नात्वा धरणितलनिहितकुथाप्रसारितमूर्तिरदूर एवास्य तूष्णीमेव समवा-तिष्ठत। [३]दृष्ट्वा दृष्ट्वा दूयमानमानसम[४]ग्रजन्मानं समस्फुटदिवास्य सह-स्रधा हृदयम्। [५]औरसदर्शनं हि यौवनं शोकस्य लोकस्य तु[६] नरपति[७]मरणदिव-सादपि दारुणतरः स [८]बभूव दिवसः। सर्वस्मिन्नेव च नगरे न केनचिदप्य-पाचि न केनचिदस्नायि नाभोजि सर्वत्र सर्वेणारोदि केवलमनेन च क्रमेणा-तिचक्राम दिवसः। स च प्रत्यग्रत्व[९]ष्टृटङ्क[१०]तष्टतनुरिव व[११]मद्बहलरुधिर[१२]संमां-सच्छेदलोहितच्छविरपरपारावारपर्यासि ममज्ज मञ्जिष्ठारुणोरुणसारथिः। मु-कुलायमानकमलिनी[१३]कोशविकलं चकाण चञ्चरीककुलं कमलसरसि। स-विधवि[१४]रहव्याधिविधुरवधूबाध्यमानं बबन्ध बन्धाविव विबुद्धबन्धूकभासि भास्वति सास्रां दृशं चक्रवाकचक्रवालम्। सञ्चरन्त्याः समधुकररवं कैरवाकरं कलहंसर[१५]मणीरमणीयं माणिक्यकाञ्चीकिङ्किणीजा[१६]लमिवाण श्रियः। प्रकट-

चूडा किरीटं केशाश्च संयता मौलयस्त्रय इत्युक्तमत्र तूपचारान्मौलिशब्देन शिर उच्यते। वितर्दिका वेदिका। उपबर्हणमुपधानं। जोषं तूष्णीं। कुथो वर्णकम्बलः। औरसो भ्राता। त्वष्टा विश्वकर्मा। तस्य टङ्कश्छेदनशस्त्रं। तेन तनूकृता तनुर्यस्य। पुरा स्वभर्तृतेजो विसरोद्विग्नया सूर्यभार्ययावमानितः सूर्यस्त्वष्टारमवोचन्मम तेजस्तनूकुरु तेनाप्यारोप्य चक्रभ्रमं टङ्केनासौ तष्ट इति वार्ता। अपरः पश्चिमः। पारावारः समुद्रः। च[१७]काण जुगुञ्ज। चञ्चरीका भ्रमराः। कादम्बः कलहंसः स्यात्। [१८]आण चुकूज। कैरवाकरे सञ्चरन्त्याः श्रियः किङ्किणीजालमिव चुकूजेत्युत्प्रेक्षा।

---

१. °विशदकुमुदवनदलावली° A. B. २. °वितर्दिकायां नीचापाश्रयविनिहितै-कोपबर्हायां K. K1. K2. Jambû ed. ३. दृष्ट्वा च A. B. ४. अग्रजमस्फुट° A. B. ५. सोदरदर्शनं A. B. D. ६ च K. K1. Jambû ed. ७. °मरणादपि दारुणः सम्बभूव K. K1. K2. Jambû ed. ८. A. B. D. T. omit स च. ९. °ब्रष्ट° A. १०. °नष्ट° K. Jambû ed. ११. मध्यहल° K. K1. K2. Jambû ed. १२. A. B. read सरस १३. शोकविकलं कलं चकले A. B. १४. °विरहाधिविधुर° A. B. D. १५. रमणीयमनणुमाणिक्य° A. B. । *secunda manu* corrected to. । °रमणीयमतनुमाणिक्य° in A. १६. °जालमिव श्रियश्चकाण A. B. D. १७. चक्रणं Jambû ed. १८. Corrected to चकाण *Secunda manu* in C2.

कलङ्कमुदयमानं विशङ्कटविषाणोत्कीर्णपङ्कसङ्करशङ्करबर्कुरशक्करककुदकूट-संकाशमकाशताकाशे शशाङ्कमण्डलम् । अस्यां च वेलायामनतिक्रमणीय-वचनैरुपसृत्य प्रधानसामन्तैर्विज्ञाप्यमानः कथं कथमप्यभुक्तः प्रभातायां च शर्वर्यां सर्वेषु प्रविष्टेषु राजसु समीपस्थितं हर्षदेवमुवाच । तात भूमिरसि गुरुनियोगानाम् । शैशव एवाग्राहि गुणवत्पताकेव भवता तातस्य चित्तवृत्तिर्यतो भवन्तमेवंविधं विधेयं विधिविधानोपनीतनैर्घृण्यमिदं किमपि बिभणिषति मे हतहृदयम् । नावलम्बनीया बालभावसुलभा प्रेमविलोमा वामता वैधेय इव मा कृथाः प्रत्यूहमीहितेऽस्मिन् । शृणु न खलु न जानासि लोकवृत्तं लोकत्रयत्रातरि मान्धातरि मृते किं न कृतं पुरुकुत्सेन भ्रूलतादिष्टाष्टादशद्वीपे दिलीपे वा रघुणा महासुरसमरमध्याध्यासितत्रिदशरथे दशरथे वा रामेण गोष्पदीकृतचतुरुदन्वदन्ते दुष्यन्ते वा भरतेन । तिष्ठन्तु तावत्ते तातेनैव शतसमधिकाधिगताध्वरधूमविसरधूसरितवासववयसि सुगृहीतनाम्नि तत्रभवति परासुतां गते पितरि किं नाकारि राज्यं । यं च किल शोकः समभिभवति त

विशङ्कटो विशालः । बर्कुरस्तरुणः । शक्करो दान्तः । भातुं प्रवृत्ता प्रभाता तस्यां । नियोग आदेशः । विधेयमायत्तम् । बिभणिषति कथयितुमिच्छति । विलोमानुकूला । वामता प्रतिकूलता । वैधेयो मूर्खः । धूमेन मलिनीक्रियते । स्त्रैणे स्त्रीत्वे । परासुता मरणम् ।

---

१. विसङ्कट° A. B. । विषङ्कट° K. २. पङ्काङ्कशङ्करसात्करककुरकूटसङ्काशमाकारो च काशे A. B. ३. °शङ्कुरशक्कर K3 Jambû ed. ४. लभवता A D. ५. उपनतनैः K. K1. Jambû ed. ६. घृण्यं. A. B. ७. प्रत्यूहमीशिते A. B. D. ८. महासुरासुर° A. B. ९. दोष्पदीकृत K. K1. १०. दुष्कन्ते B. ११. °यशसि A. B. D. १२. परेततां परागते A. B. T. १३ .शाक्करः C1. शाक्कारः C2. १४. अनुकूलता C2.

कापुरुषमाचक्षते शास्त्रविदः । स्त्रियो हि विषयाः शुचां तथापि किं करोमि स्वभावस्य सेयं कापुरुषता वा स्त्रैणं वा यदेवमस्मादपि पितृशोकहुतभुजो जातोस्मि । मम हि भूभृति पर्यस्ते निरवशेषतः प्रस्रवणानीव स्रुतान्यस्रूणि । अस्तमिते महति तजस्यन्धकारीभूतदशाशस्य प्रणष्टः प्रज्ञालोकः प्रज्वलितं हृदयमात्मदाहभीत इव स्वप्नेपि नोपसर्पति विवेको बलीयसा सन्तापेन जातुषमिव विलीनमखिलं धैर्यं पदे पदे दिग्धरोपाहतेव हरिणी मुह्यति मतिः पुरुषद्वेषिणीव दूरेण भ्रमति परिहरन्ती स्मृतिः । अस्तेव तातेनैव सह गता धृतिर्वार्धुषिकप्रयुक्तानि धनानीव प्रतिदिवसं वर्धन्ते दुःखानि शोकानलधूमसम्भारसम्भूताम्भोधरभरितमिव वर्षति नयनवारिधाराविसरं शरीरम्। सर्वः पञ्चजनः पञ्चत्वमुपयाति वितथमेतद्वदति बालो लोकः । तातो हुताशनतामेव केवलामापन्नोपि नैवं मां दहति । अन्तस्स्येदेवमिदमसाम्परायिकमिव हृदयमवष्टभ्य व्युत्थितः शोको दुर्निवारो वाडव इव वारिराशिं [11]पविरिव पर्वतं क्षय इव क्षपाकरं राहुरिव रविं दहति दारयति तनूकरोति कवलयति च मां। कामं न शक्नोति मे हृदयं तादृशस्य सुमेरुकल्पस्य कल्प-

मम हीत्यादिवाक्यद्वये श्लेषो व्याख्येयः। प्रस्रवणानि निर्झरा[12]ः । जतुनो विकारो जातुषं। त्रपुजतुनोः षुक्। पदे शब्दे क्रमे च। दिग्धो विषलिप्तः शरः। उक्तं च। बाणे विषाक्ते दिग्धलिप्तकाविति। मेरुमहीधरवत्तु रोपशब्दः प्रशंसार्थः। वृद्ध्या जीवति वार्धुषिको वणिक्। वृद्धेर्वृधुषीभावः। पञ्चजनः पञ्चमहाभूतानि मनुष्यश्च। उक्तं च। मनुष्या मनुजा मर्त्या मानुषा मानवा नराः । स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरा इति । पञ्चत्वं मरणम् । वितथमिति पञ्चसु पृथिव्यादिषु लयात्पुरुषस्ताद्रूप्यं प्रतिपद्यत इत्यलीकं । यतस्तत इत्याद्यग्निमात्रप्रतिबद्धकार्यदर्शनादित्यर्थः । आपत्कष्टं क्लेश इत्यर्थः। सम्परायः संग्रामस्तस्मै यत्न भवति तदसाम्परायिकं। सभयं यः किल भीतः स कथं व्युत्थितं निवारयेत् । वाडव इत्यादयो दहतीत्यादिर्यथाक्रमं योज्यः । पविर्वज्रः । कल्पतेस्मादभीष्टार्थ इति कल्पः ।

---

१. यदेवमास्पदं पितृपरासुताशोक° A. B. D. २. स्नुतानि श्रुतानि A. B. सुतानि श्रुतानि D. T. ३. प्रनष्टः A. B. K. ४. विगलितं A. B. D. ५. K. K1. Jambū ed. omit इव दूरेण. ६. प्रवृत्त्याति K. ७. °सम्भृताम्भोधर° K. Jambū ed. ८. सर्व एव जनः पञ्चतामुपगतः पञ्चतां प्रयातीति वितथमिदं प्रलपति चपलो लोकः A. B. ९. हुताशनतामिव केवलमापन्नस्ततैवं K. K1. Jambū ed. १०. °तदेवमदं A. B. D. ११. A. has the marginal gloss वज्रं. १२. निर्करा: C1. C2.

महापुरुषस्य विनिपातमश्रुबिन्दुभिरेव केवलैरतिवाहयितुम् । राज्ये विष इव चकोरस्य मे विरक्तं चक्षुः। [1]बहुमृतपटावगुण्ठनां रञ्जितरङ्गां जनङ्गमानामिव वंशबाह्यामनार्यां श्रियं [2]त्यक्तुमभिलषति मे मनः । [3]क्षणमपि दग्धगृहे शकुलिरिव न पारयामि स्थातुं सोहमिच्छामि मनसि वाससीव सुलग्नं स्नेहमलमिदममलैः शिखरिशिखर[4]प्रस्रवणैः स्वच्छस्रोतोम्बुभिः प्रक्षालयितुमाश्रमपदे। [5]यतस्त्वमन्तरितयौवनसुखामन[6]भिमतामपि जरामिव [7]पुरुराज्ञया गुरोर्गृ[8]हाण मे राज्यचिन्ताम् । त्यक्तसकलबालक्रीडेन हरिणेव दीयतामुरो लक्ष्म्यै परित्यक्तं मया शस्त्रमित्यभिधाय च खड्गग्राहिणो हस्तादादाय [9]निजं निस्त्रिंशमुत्ससर्ज्ज धरण्याम् ॥

अथ तच्छ्रुत्वा निशितशिखेन [10]शूलेनेवाहतः प्रविदीर्णतरहृदयो देवो हर्षः समचिन्तयत् । किं नु खलु मामन्तरेणार्यः केनचिदसहिष्णुना किञ्चिद्ग्राहितः कुपितः स्यात् । उतानया दिशा परीक्षितुकामो मामुत तातशोकजन्मा [11]चेतसः समाक्षेपोयमस्य । [12]आहोस्विदार्य एवायं न भवति किं वार्येणान्यदेवाभिहितमन्यदेवाश्रावि मया शोकशून्येन श्रवणेन्द्रियेणार्यस्य

चकोरः क्रकचस्तस्य विषे दृष्टेक्षिणी विरज्येते मृतस्य पटोवगुण्ठनं मस्तकाच्छादनं । रङ्गः समाजः । जनङ्गमश्चण्डालः । उक्तं च । चण्डालप्लवमातङ्गदिवाकीर्त्तिजनङ्गमाः । निषादश्वपचावन्तेवासिचण्डालपुक्कसा इति। वंशोभिजननं । प्रबन्धो वेणुश्च।बाह्या बहिर्भूता बहनीया च।शकुलिर्गृहचटिका गृहशारिकेत्यन्ये।स्नेहः प्रेम तैलादिश्च। यतस्त्वमिति।पुरा ययातिः शुक्रदुहितरं देवयानीमवमन्य देवयान्या दासीभूतां शर्मिष्ठामसक्तन्मिथ्याकामयानेन शुक्रेण जरां यास्यसीति शप्तः । प्राप्तजरादुःखो विषयलम्पटोन्यपुत्रैरगृहीतां जरां पूरौ स्वपुत्रे कृताभ्युपगमे सङ्क्रमयाम्बभूवेति वार्ता । जराप्यन्तरितयौवनसुखानभिमता च । गुरोर्ययातेरपि । मामन्तरेण मां विना मय्यसन्निहित इत्यर्थः ।

---

१. बहुमृतपटकृतकपटा° A. B. २. निराकर्तुं A. B. D. T. ३. क्षणमपि कुलिरिव दग्धगृहे न पारयामि A. B. ४. °प्रस्रवणस्वच्छ° A. B. D. ५. अतस्त्वम° A. B. ६. अधिगतामपि A. B. D. ७. पुनराज्ञया K. K1. Jambû ed. ८. गृहाणेमां A. B. D. ९. निजं शस्त्रं समुत्सर्ज A. B. T. १०. शूलेनेव ताडित A. B. ११. चेतसा A. १२. अहोस्विदार्य एवायं न भवति किं चान्यदेवार्येणाभिहितमन्यदेवापतितं मुखेन A. B.

चान्यद्विवक्षितमन्यदेवापतितं मुखेन। सकलवंशविनाशाय निपाननोपायोयं विधेः[2]। मम वा निखिलपुण्यपरिक्षयोपक्षेपः कर्मणाम[3]ननुकूलसमग्रग्रहचक्रवालविलसितं वा। अथवा तातविनाशनिःशङ्ककलिकालक्रीडितं येनायं किञ्चिदिव यत्किञ्चनकारिणं मामपुण्यभूतिवंशसम्भूतमिवानाननयमिवानात्मानुजमिवाभक्तमिवादृष्टदोषमपि श्रोत्रियमिव सुरापाने सद्भृत्यमिव स्वामिद्रोहे सज्जनमिव नीचोपसर्पणे सुकलत्रमिव व्यभिचारेतिदुष्करे कर्मणि समादिष्टवान्। तदेतत्तावदनुरूपं यच्छौर्योन्माद[6]मदिरोन्मत्तसमस्तसामन्तमण्डलसमुद्रमथनमन्दिरे तादृशि पितरि मृते तपोवनं वा गम्यते वल्कलानि[7] वा गृह्यन्ते तपांसि वा सेव्यन्ते। या तु मयि राजाज्ञा सा दग्धेपि दाहकारिणी मय्यवग्रहग्लपिते धन्वनीवाङ्गारवृष्टिः। तदसदृशमिदमार्यस्य यद्यपि च विभुरनभिमानो द्विजातिरनेषणो मुनिररोषणः कपिरचपलः कविरमत्सरो वणिगतस्करः प्रियजानिरकुहनः साधुरदरिद्रो द्रविणवानखलः कीनाशोनक्षिगतः मृगयुरहिंस्रः पाराशरी ब्राह्मण्यः सेवकः सुखी कितवः कृतज्ञो गोप्यैः प्रियवागमात्यः सत्यवादी राजसूनुरदुर्विनीतश्च जगति दुर्लभस्तथापि ममार्य एवाचार्यः[10]। को[11] हि नाम तद्विधे पतिते राजगन्धकुञ्जरे जनयितरि चेदृशे विफलीकृतविशालशिलास्तम्भोरुभुजे भूपजिति[12] भ्रातरि त्यक्तराज्ये[13] ज्यायसि नववयसि तपोवनं गच्छति सकललोकलोचनजलपातापवित्रं मृद्गोलकं वसुधाभिधानं धनमदखेलनिखिलखलमुखविकारलक्षणाख्यायमाननीचाचरणां च श्रीसंज्ञिकां सुभटकुटुम्बकर्मकुम्भदासीं चण्डालोपि कामयेत। कथमिव सम्भावितमत्यन्त-

श्रोत्रियो वेदपारगः। धन्वनि मरौ। धन्वन्यपि दग्धे राजाज्ञापि दाहकारिणी। अनेषणो निरभिलाषः। प्रिया जाया यस्य जायाया निङ्। कुहना ईर्ष्या शङ्का वा। कीनाशः क्षुद्रः। उक्तं च। कृतान्ते पुंसि कीनाशः क्षुद्रकार्षिकयोस्त्रिषु। अनक्षिगतः प्रियः। मृगयुर्व्याधः। पाराशरी भिक्षुः। कितवो द्यूतकृत्। गोप्यो दासः[14]। राजसूनुरदुर्विनीतश्चेत्येतत्प्रस्तावने तदुक्तं। खेलाः सविलासाः। अनवद्या-

---

१. °विनाशाशनि A. B. २. विधिः A. B. D. ३. अनन्तकूल° K. K1. ४. मामपुण्यभूति° A. ५. अत्यन्तदुष्करे A. B. ६. °मदिराद्युन्मत्त° A. B. D. ७. A. B. omit वल्कलानि down to धन्वनि. ८. प्रियजातिः A. B. ९. A. has the marginal gloss दासीभूतः १०. एवार्यः A. B. D. ११. कोपि K. K1. Jambu ed. १२. भूपयुजि A. B. १३. लापवित्यक्तराज्ये A. १४. दास्यः C1.

मनु[1]चितमिदमार्येण किमुपलक्षितमनवदातमिदं मयि किंवास्य चेतसश्च्युत: सौमित्रिर्विस्मृता वा वृकोदरप्रभृतयोनपेक्षितभक्तजना स्वार्थैकनिष्पादननिष्ठुरा नासीदियमार्यस्येदृशी प्रभविष्णुता। अपि चार्ये तपोवनं गतेपि जिजीविषुः को मनसापि महीं ध्यायेत्। कुलिशशिखरखरनखरप्रचयप्रचण्डचपेटापाटितमत्तमातङ्गोत्तमाङ्गमदच्छटाच्छुरितचारुकेसरभारभा[2]स्वरमुखे केसरिणि वनविहाराय विनिर्गते निवासं गिरिगुहां कः पाति पृष्ठत: प्रतापसहाया हि सत्त्ववन्त: कश्चपलां राजलक्ष्मीं प्रत्यनुरोधोयमार्यस्य । [3]यदीयमपि न [4]चीवरान्तरितकुचा कुशकुसुमसमित्पलाशपूलिकां वहन्ती त[5]त्रैव तपोवने वनमृगीव नीयते जरा[6]जालिनी। किंवा ममानेन वृथा बहुधा विकल्पितेन तूष्णीमेवार्यमनुगममिष्यामि । गुरुवचनातिक्रमकृतं च किल्बिषमेतत्तपोवने तप एवापास्यतीत्यवधार्य मनसा प्रथमतरं गतस्तपोवनमधोमुखस्तूष्णीमवातिष्ठत्। अत्रान्तरे पूर्वादिष्टेनैव रुदता वस्त्रकर्मान्तिकेन समुपस्थापितेषु वल्कलेषु निर्दयकरतलताडनभियेव क्वापि गतहृदये र[7]टति राजस्त्रैणे तारमब्रह्मण्यमूर्ध्वदोर्ष्णि वि[8]रुदति विप्रजने पादप्र[9]णतिपरे फूत्कुर्वति पौरवृन्दे विद्रातिविद्रुतचेतसि चिरन्तने परिजने परिजनावलम्बिते [10]गते वर्षीयसि वेपमानवपुषि पर्याकुलवाससि शोकगद्गदवचसि विगलितनयनपयसि नि-

तमनिर्मलं। सौमित्रिर्लक्ष्मणः । वृकोदरो भीमसेनः । प्रचयः समूहः । चपेटा करतलाघातः । वनमृग्यपि कुशादि वहति। जालिनी मायिनी। अत्रेत्यादौ संवादको नाम सदस्यात्मानमपातयदिति सम्बन्धः । कर्मान्तिकोऽधिकृतः। करत[11]लताडनं हृदये वा। स्त्रैणे स्त्रीसमूहे । अब्रह्मण्यमवध्योक्तौ। फूत्करणमुद्दामरोदनध्वनिः । विद्रातिः कुत्सितः । गते प्राप्ते । वर्षीयसि वृद्धतरे ।

---

१. अनपचितं A. B. D. T. २. °भासुर° A. B. ३. यदियमपि A. B. ४. चीरान्तरित° K. Jambû ed. ५. तत्रैवोपवने K. K1. Jambû ed. ६. जरां जालिनी A. B. ७. चारटति A. B. D. ८. विरुचति A. B. ९. °प्रणतिपरिपूत्कुर्वति A. B. D. १०. A. B. D. T. K. omit गते वर्षीयसि. ११. ताल° C1. C2.

वारणोद्यतमनसि विशति बन्धुवर्गे निराशेषु नखलिखितमणिकुट्टिमेष्ववाङ्मुखेषु निःश्वसत्सु सामन्तेषु सबालवृद्धासु तपोवनाय प्रस्थितासु सर्वासु प्रजासु सहसैव प्रविश्य शोकविक्लवःप्रक्षरितनयनसलिलो राज्यश्रियः परिचारकः संवादको नाम प्रज्ञाततमो विमुक्ताक्रन्दः सदस्यात्मानमपानयत्। अथ सम्भ्रान्तो भ्रात्रा सह स्वयं देवो राज्यवर्धनस्तं पर्यपृच्छत्। भद्र भण भण किमस्मद्व्यसनव्यवसायवर्धनबद्धधृतिरवनिपतिमरणमुदितमनिरधृतिकरमपरमधिकतरमितो दुःखातिशयं समुपनयति विधिरिति। स कथं कथमप्यकथयत्। देव पिशाचानामिव नीचात्मनां चरितानि छिद्रप्रहारीणि प्रायशो भवन्ति। यतो यस्मिन्नहन्यवनिपतिरुपरत इत्यभूद्वार्त्ता तस्मिन्नेव देवो ग्रहवर्मा दुरात्मना मालवराजेन जीवलोकमात्मनः सुकृतेन सह त्याजितः। भर्त्तृदारिकापि राज्यश्रीः कालायसनिगडयुगलचुम्बितचरणा चौराङ्गनेव संयता कन्यकुब्जे कारायां निक्षिप्ता। किंवदन्ती च यथा किलानायकं साधनं मत्वा जिघृक्षुः सुदुर्मतिरेतामपि भुवमाजिगमिषनीति विज्ञापिते प्रभुः प्रभवतीति। ततश्च तादृशमनुपेक्षणीयमसम्भाविनमाकस्मिकमुपरि व्यतिकरमाकर्ण्याश्रुतपूर्वत्वात्परिभवस्य परपरिभवासहिष्णुतया च स्वभावस्य दर्पबहुलतया च नवयौवनस्य वीरक्षेत्रसम्भवत्वाच्च जन्मनः कृपाभूमिभूतायाश्च स्वसुः स्नेहात्स तादृशोपि बद्धमूलोप्यत्यन्तगुरुरेकपद एवास्य ननाश शोकावेशः। विवेश च सहसा केसरीव गिरिगुहागृहं गम्भीरहृदयं भयङ्करः कोपावेगः। केशिनिसूदनशङ्खकुलकालियकुलभङ्गुरभ्रूभङ्गतरङ्गिणी श्यामायमाना यमस्व-

कारायां बन्धने। किंवदन्ती लोकवार्त्ता। केशिनिसूदनः कृष्णः। यमस्वसा यमुना। सापि कालियकुला सतरङ्गा श्यामायमाना च।

---

१. A. B. D. T. K. Read वर्षीयसि विशति २. वसति लिखित° A. ष्पस्तति लिखित°B. ३. अधोमुखेषु A. B. ४. °विह्वलः A. B. D. ५. °युगलः A. B. T. ६. किमस्मद्व्यसनविवर्धन° A. B. ७. मुषित° marginally corrected in A. ८. K. Jambû ed. omit दुःखातिशयं° ९. एनामिव A. B. १०. तं च A. B. ११. उत्प्रेषितमसंभावनीयमाकस्मिकमपरं A. B. D. T. १२. गिरिगुहा° A. B.

मेकाकिनः कोपकवल एकस्तिष्ठतु भवानित्यभिधाय च तस्मिन्नेव वासरे निर्जगा[1]माभ्यमित्रम् । अथ तथागते भ्रातर्युपरते च पितरि प्रोषितजीविते च जामातरि मृ[2]तायां च मातरि संयतायां च स्वसरि स्वयूथभ्रष्ट इव वन्यैः[3] करी देवो हर्षः कथं कथमप्येकाकी का[4]लं तमनैषीत् । अतिक्रान्तेषु च बहुषु वासरेषु कदाचित्तथैव भ्रातृगमनदुःखासिकया दत्तप्रजागरत्रिभागावशेषायां त्रि[5]यामायां यामिकेन गीयमानामिमामार्यां शुश्राव ।

[6]द्वीपोपागतगुणमपि समुपार्जितरत्नराशिसारमपि ।
पोत[7]म् पवन इव विधिः पुरुषमकाण्डे निपातयति ॥

तां च श्रुत्वा [8]सुतरामनित्यताभावनया दूयमानहृदयः प्रक्षीणभूयिष्ठायां क्षपायां [9]क्षणमिव निद्रामलभत स्वप्ने चाभ्रंलिहं लोहस्तम्भं भज्यमानमपश्यत् । उत्कम्पमानहृदयश्च पुनः प्रत्यबुध्यत । अचिन्तयच्च किन्नु खलु मामेवममी सततमनुबध्नन्ति दुःस्वप्नाः स्फुरति च दिवानिशमकल्याणाख्यानविचक्षणमदक्षिणमक्षि सुदारु[10]णाश्चाक्षुद्रक्षितिपक्षयमाचक्षाणाः क्षणमपि न शाम्यन्ति पुनरुत्पाताः प्रत्यहं राहुरविकल[11]कायबन्ध इव कबन्धवति ब्रध्नबिम्बे घटमानो विभाव्यते तपःकरणकालकवलितानिव धूसरितसमग्रग्रहानुद्गिरन्ति धूमोद्गारान्संप्र[12]सर्पयो दिने[13] दिने दारुणा दिशां दाहा दृश्यन्ते दिग्दाहभस्मकणनिकर इव निपतति नभस्तलात्तारागणतारापातशुचेव निष्प्रभः शशी निशि निशीतस्ततः प्र[14]ज्वलिताभिरुल्काभिरुग्रं ग्रहयुद्धमिव वियति विलोकयन्ति विलोलतारकाः ककुभो राज्य[15]सञ्चारसूचकः सञ्चारयतीव

अभ्यमित्रं शत्रुसम्मुखं । यामिकेन जागरानियुक्तेन । रत्नराशिर्मणिसमूहोऽब्धिश्च । तस्य साराः श्रेष्ठरत्नानि । पोतं यानपात्रं । निपातयति व्यापादयति । [16]अत्युन्नतमभ्रंलिहं नभःस्पृशं । अक्षुद्रः प्रधानभूतः । राहोरविकलकायबन्धनं कबन्धयोगात् । कबन्धदर्शनं चोत्पातसूचकम् । विलोलतारका इति स्त्रीणां च युद्धदर्शनवशादक्ष्णोश्च लोलत्वं भवति ।

---

१. निर्जगाम जगाम चाभ्यमित्रं A. B. D T. २. K. K2. Jambû ed. omit this sentence. ३. वनकरी A. B. ४. कालान्तरमनैषीत् A. B. ५. यामवत्यां A. B. D. ६ द्वीपोपगीत° K. K1. ७. पवनःपोतमिव विधिः A. B. D. ८. नितरां A. B. ९. क्षणं कथमपि A. B. D. १०. मे दारुणाः A. B. ११. °बाहु° K K1. Jambû ed. १२. सम्प्रसर्पयः B. १३. दिने दिने दारुणा दिग्दाहा दिग्दाहभस्मकणनिकर इव निर्वाणतेजा निपतति A. B. D. T. १४. प्रज्वलन्तीभिरुल्काभिरुग्रग्रह° A. B. १५. राज्यसंक्रान्तिसूचकः A. B. D. A. १६. अभ्युन्नतं C1.

क्ष्मां क्वापि[1] वहद्बहलरजःपटलकलिलशर्कराशकलशूत्कारी[2] मारुतो[3] न खलु कुशलमिव पश्यामि लग्नस्यास्मिन्नस्मद्वंशे करिण इव करीरं[4] कोमलमपि कवलयतः[5] कृतान्तस्य कः परिपन्थी सर्वथा स्वस्ति भवत्वार्यायेति चिन्तयित्वा चान्तर्भिन्नं भ्रातृस्नेहकातरं द्रवदिव हृदयं कथं कथमपि संस्तभ्योत्थाय यथाक्रियमाणं क्रियाकलापमकरोत्। आस्थानगतश्च सहसैव प्रविशन्तमनुप्रविशता विषण्णवदनेन लोकेनानुगम्यमानमसह्यदुःखोष्णनिःश्वास[6]धूमरक्तनन्तुनेव मलिनेन पटेन प्रावृतवपुषं जीवितधारणलज्जयेवावनतमुखं नासावंशस्याग्रे ग्रथितदृष्टिं दुःखदूरप्ररूढगरिम्णा मूकेनापि मुखेन स्वामिव्यसनमविच्छिन्नैरस्रुबिन्दुभिर्विज्ञापयन्तं कुन्तलं नाम[7] बृहदश्ववारं राज्यवर्धनस्य प्रसादभूमिमभिज्ञाततमं ददर्श। दृष्ट्वा च जाताशङ्कश्चक्षुषि सलिलेन मुखशशिनि श्वसितेन[8] हृदये हुताशनेनोत्सङ्गे[9] भुवा दारुणाप्रियश्रवणसमये सममिव[10] सर्वेष्वङ्गेष्वगृह्यत लोकपालैस्तस्माच्च हेलानिर्जितमालवानीकमपि[11] गौडाधिपेन मिथ्योपचारोपचितविश्वासं मुक्तशस्त्रमेकाकिनं विस्रब्धं स्वभवने[12] च भ्रातरं व्यापादितमश्रौषीत्। श्रुत्वा[13] च महातेजस्वी प्रचण्डकोपपावकप्रसरपरिचीयमान[14]शोकावेगः सहसैव प्रजज्वाल। अतश्चा[15]मर्षविधुतशिरः शीर्यमाणशिखामणिशकलाङ्गारकिताङ्गमिव रोषाग्निमुद्वमन्ननवरतस्फुरितेन पिबन्निव सर्वतेजस्विनामायूंषि रोषनिर्भुग्नेन दशनच्छदेन लोहितायमानलोचनालोकविक्षेपैर्दिग्दाहानिव दर्शयन्। रोषानलेनाप्यसह्यसहजशौर्योष्मदहनदह्यमानेनेव वितन्यमानस्वेदसलिलशीकरासारदुर्दिनः स्वावयवैर[16]दृष्टपूर्वप्रकोपप्रभीतैरिव कम्पमानैरुपेतो हर इव कृतभैरवाकारो हरिरिव प्रकटितनरसिंहरूपः सूर्यकान्तशैल इवापरतेजःप्रसरदर्शनप्रज्वलितः क्षयदिवस इवो[17]द्यतद्वादशदिनकरदुर्नि[18]रीक्ष्यमूर्तिर्महोत्पातमारुत इव सकलभूभृत्प्रकम्पकारी विन्ध्य इव वर्धमान[19]निग्रहोत्सेधो महाशीविष

कलिलानि व्याप्तानि। वंशो वेणुरपि। करीरो वंशाङ्कुरः। अपि शब्दः कृतान्तस्येत्यतः परं योज्यः। परिपंथी रोधकः। परिपूर्वपर्यायः परिपंथशब्दोस्तीति ज्ञापितं। अप्रियेत्यप्रियग्रहणकाले च दुःखं सर्वाङ्गेषु गृह्यते। अत इत्यादौ परां भीषणतामयासीदिति संबन्धः। निर्भुग्नेन वक्रीकृतेन। दह्यमानेनेति दाहभीतेन च सलिलकणा वितन्यन्ते। भैरवो भीषणोपि। प्रशस्तो नरो नरसिंहः। इत्थं च। स्युरुत्तरपदे

---

१. क्वोपि A. २. सात्कारी A. B. D. ३. मारुतो महीं न A. B. D. T. omitting क्ष्मां before. ४. शरीरं A. B. D. ५. कवलयतः A. B. ६. निश्वासं A. B. ७. कुन्तलनामानं A. B. T. ८. श्वसनेन A. B. ९. हुताशने तत्संगे K. K1 हुताशनेनोत्संगे K2. Jambū ed. १०. सममेव सर्वांगेषु A. B. ११. °मालवानीकमपि A. B. १२. स्वभवन एव A. B. T. १३. शुश्राव A. B. D. १४. °परिणीयमान° A. B. १५. ततश्च A. B. १६. °वैरदृष्ट° A. B. १७. इवोदित° A. B. D. १८. °निरीक्ष° A. B. १९. विवर्धमान° A. B. D. K.

इव दुर्नरेन्द्ररोषितः पारीक्षित इव सर्वभोगिदहनोद्यतो[1] वृकोदर इव रिपुरुधिरतृषितः सुरगज इव प्रतिपक्षवारणप्रधावितः पूर्वागम[2] इव पौरुषस्योन्माद इव मदस्यावेग[3] इवावलेपस्य तारुण्यावतार इव तेजसः सर्वोद्योग इव दर्पस्य युगागम इव यौवनोष्मणो राज्याभिषेक[4] इव रणरसस्य नीराजनदिवस इवासहिष्णुतायाः परां भीषणतामयासीत् । अत्रादीच्च गौडाधिपाधममपहाय[5] कस्तादृशं महापुरुषं तत्क्षण एव निर्व्याजभुजवीर्यनि[6]र्जितसमस्तराजकं मुक्तशस्त्रं कलशयोनिमिव कृष्णवर्त्मप्रसूतिरीदृशेन सर्व[7]वीरलोकविगर्हितेन मृत्युना शमयेदेवमार्यम् । अनार्यं[8] च तं मुक्त्वा भागीरथीफेनपटलपाण्डुराः केषां मनःसु सरःसु राजहंसा इव परशुरामपराक्रमस्मृतिकृतो न कुर्युरार्यशौर्यगुणाः पक्षपातं । कथमिवात्युग्रस्यास्यार्यजीवितहरणे निदाघरवेरिव कमलाकरसलिलशोषणेनपेक्षितप्रीतयः प्रसृताः कराः । कां नु गतिं गमिष्यति कां वा योनिं प्रवेक्ष्यति कस्मिन्वा नरके निपतिष्यति श्वपाकोपि क इदमाचरेत् । नामापि च गृह्णतोस्य पापकारिणः पापमलेन लिप्यत इव मे जिह्वा किं वाङ्गीकृत्य कार्यमार्यस्तेन क्षुद्रेणानुप्रविश्य विगतघृणेन घुणेनेव सकलभुवनाह्लादनचतुरश्चन्दनस्तम्भः क्षयमुपनीतः । नूनं नानेन मूढेन मधुरसास्वा[9]दलुब्धेन मध्विवार्यजीवितमाकर्षता भावी दृष्टः कष्ट[10]शिलीमुखसम्पातो[11]पद्रवो

व्याघ्रपुङ्गवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थवाचका इति । नृसिंहरूपी च हरिरिति । तेजोक्षमता आतपश्च । दिनकरवत्तैश्च दुर्निरीक्षणः । भूभृतो राजानोपि गिरयश्च । वर्धमानेन देहेनोत्सेध औन्नत्यं यस्य । नरेन्द्रो मन्त्रज्ञो राजापि । परिक्षितिदग्धे जनमेजयः पितृपरिभवेन सर्पसत्रे भोगिनां क्षयार्थमियाजेति[12] वार्ता । भोगिनो राजानः । वृकोदरो भीमसेनः । वारणं निषेधो हस्ती च वारणः । अवलेपस्य दर्पस्य । नीराजनं शान्तिकर्मविशेषः । कलशयोनिं द्रोणाचार्यं । कृष्णवर्त्मप्रसूतिः पापमार्गप्रवर्त्तको धृष्टद्युम्नश्चाग्निजातः । कृष्णवर्मा वह्निः । भागीरथीत्यादि परशुराम इत्यादि च हंसानामपि विशेषणं । रामेण हि हंसमार्गः कैलासे कृत इति । हंसास्तत्कीर्तिं स्मारयन्ति । पक्षपातं स्नेहं पक्षैर्गमनं च । अत्युग्रस्यातिक्रूरस्यातिचण्डस्य च । अत्रार्यस्य कमलाकरेणोपमा लक्ष्मीयात्रादिगुणयुक्तत्वात् । करा हस्ता रश्मयश्च । क्षुद्रेण क्रूरेण परिचितपरिपणेन च । अनुप्रविश्य विश्वासं नीत्वान्तर्भूय च । घुणेन काष्ठक्रिमिणा । शिलीमुखाः शरा भ्रमराश्च ।

---

१. सर्वभोगीदहनोद्यतः B. २. पुरागमः A. B । *secunda manu* corrected to स्वरागमः in A. ३. आवेशः A. B. D. ४. वरणरसस्य A. B. ५. गौडाधिपमपहाय K. Jambû ed. ६. °विजित° A. B. ७. K. Jambû ed. omit वीर. ८. प्रतिशालि K. K1. ९. मधुररसास्वाद° A. B. D. १०. K. K.1. Jambû ed omit. कष्टः ११. उपद्रवो द्रवः A. B. १२. क्षयाथमयजदिति Jambû ed.

निजगृहदूषणं जालमार्गप्रदीपकेन कज्जलमिवातिमलिनं केवलमयशः संश्चित्य[1] नत्वाश्वेवास्तमुप[2]गतवत्यपि त्रिभुवनचूडामणौ सवितरि वेधसा[3]दिसृष्टः सत्पथशत्रोरन्धकारस्य निग्रहाय ग्रहषण्ड[4]विहारैकहरिणाधिपः शशी। विनयविधायिनि[5] भग्नेऽपि चाङ्कुशे विद्यत एव व्यालवारणस्य विनयाय सकलमत्तमातङ्गकुम्भस्थलस्थिरशिरोभागभिदुरः खरतरः केसरिनखरः। तादृशाः कुवैकटिका इव तेजस्विरत्नविनाशकाः कस्य न वध्याः। क्वेदानीं यास्यति दुर्बुद्धिरित्येवमभिदधत एवास्य पितुरपि[6] मित्रं सेनापतिः समग्रविग्रहप्राग्रहरो हरितालशैलावदातदेहः परि[7]णतप्रगुणसालप्रकाण्डप्रकाशः प्रांशुरतिशौर्योष्मणेव परिपाकमा[8]गतो गतभूयिष्ठे वयसि वर्त्तमानो बहुशरशयनसुप्तो[9]त्थितोऽपि हसन्निव शान्तनवमतिदीर्घेणायुषा दुरभिभवशरीरतया जरयापि भीतभीतयेव प्र[10]कटितप्रकम्पया परामृष्टः कथमपि सा[11]रमयेषु शिरोरुहेषु शशिकरनिकरसितसरलशिरोरुहसटालः सिं[12]हीमिव निष्कपटपराक्रमरसरुचितां सङ्क्रान्तो जीवन्नेव जा[13]तिमपरामपरस्वामिमुखदर्शनमहापातकपरिजिहीर्षयेव भ्रूयुगलेन वलिनशिथिलप्रलम्ब[14]चर्मणा स्थगितदृष्टिर्धवलस्थूलगुञ्जा[15]पिच्छप्रच्छादितकपोलभागभा[16]स्वरेण वमन्निव विक्र[17]मकालमकालेऽपि

जालस्य कुसृतेर्मार्गे दीपयति यस्तेन गवाक्षमार्गेण यः प्रदीपः स यथा कज्जलं सञ्चिनुते न[18]त्वाशु इत्यप्रस्तुतप्रशंसा बोद्धव्या। विशेषेण हरणं विहारो विच्छायीकरणं गमनं च। षण्डे[19] हि सिंहो गमनं करोति व्यालवारणस्य दुष्टदन्तिनः। स्थिरो दृढः शिरोभागो यस्य यं प्राप्यैव तस्य स्वयं विदारणं भवतीत्यर्थः। वैकटिको रत्नवेधकः। इत्येवमादौ सेनापतिः सिंहनादनामा सन्निधावेव समुपविष्टो विज्ञापितवानिति सम्बन्धः। विग्रहाः सङ्ग्रामास्तेषु प्राग्रहरोऽग्रेसरः। प्र[20]गुणं स्पष्टं। प्रकाण्डं स्कन्[21]धः। शान्तनवं भीष्मं। वलयोऽस्य सन्ति वलिनं। गुञ्जा उत्तरोष्ठोपरि रोमराजिः। विक्रमकालमिति शरदारम्भविशेषणं।

---

१. सञ्चितं गौडाधमेन Jambû ed. २. नत्वास्त एवास्तमुपगतेऽपि A. B. D. ३. °वेधसादिष्ट K. ४. °खण्ड° A B. T. ५. विनयनाय° A. B. ६. पितुः A. B. D. ७. परिणित° A. B. ८. आगते A. B. D. ९. °सुप्तोत्थितेन। अपहसन्निव A. B. D. T. १०. प्रकट. A. B. ११. मानमयेषु A. B. १२. सिंहीमिव° A. B. D. १३. जातिमपर° K. Jambû ed. १४. °प्रबन्ध° A. B. T. १५. °गुच्छ° A. B. १६. °भासुरेण A. B. १७. विक्रमकालपीतमकालेऽपि A. B. D. T. १८. नत्वास्त इति C2. १९. कुटो C 2. २०. प्रकटं C1. C2. २१. कुम्भः C 2.

विकासिकाशकाननविशदं शरदारम्भं भीमेन मुखेन मृतमपि हृदयस्थितं स्वा[1]मिनमिव सितचामरेण वीजयन्नाभिलम्बेन कूर्चकलापेन परिणामेपि धौतासिधाराजलपानतृषि तैरिव विवृतवदनैर्बृहद्भिर्व्रणविदारैर्विषमितविशालवक्षा निशितशस्त्रटङ्क[2]कोटिकुट्टितबहुबृहद्व्रणाक्षरपङ्क्तिनिरन्तरतया च सकलसमरविजयपर्व[3]पूर्व[4]पर्वत इव पादचारी विविधवीरै[5]रसपूर्ववृत्तान्तरामणीयकेन महाभारतमपि लघयन्निव प्रतिपक्षक्षपणातिनिर्बन्धेन परशुराममपि शिक्षयन्निवाब्भ्रमणेनानादरश्रीसमाकर्षणविभ्रमेण मन्दरमपि मन्दयन्निव वाहिनीनायक[6]मर्यादानुवर्त्तनेनाम्भोधिमप्यभिभवन्निव स्थैर्यकार्कश्योन्नतिभिरचलानपि ह्रेपयन्निव सहजप्रचण्डतेजःप्रसरपरिस्फुरणेन सवितारमपि तृणीकुर्वन्निवेश्वरभारोद्वहनघृष्टपृष्ठतया हरवृषभमपि ह[7]सन्निवारणिरमर्षाग्नेरैश्वर्यं शौर्यस्य म[8]दो मदस्य विसर्पो दर्पस्य हृदयं हठस्य जीवितं जिगीषुतायाः समुच्छ्वसितमुत्साहस्याङ्कुशो दुर्मदानां नागद[9]मनो दुष्टभोगिनां विरामो वरमनुष्यतायाः कुलगुरुर्वीरगोष्ठीनां तुला शौर्यशालिनां सीमा[10]न्तदृश्वा शस्त्रग्रामस्य निर्वोढा प्रौढवादानां संस्तम्भयिता भग्नानां पारगः प्रति[11]ज्ञायाः मर्मज्ञो महाविग्रहाणामा[12]घोषणपटहः समरार्थिनां सन्निधावेव समुपविष्टः

तत्र शत्रुषु जययात्रा विधेयेति । कूर्चकलापः श्मश्रुः । परिणामे वृद्धत्वे । तृषितोपि जलं पातुं विवृतवदनो भवति । विदारैः स्फोटैः । शस्त्राण्येव टङ्काश्छेदनभाण्डानि कुट्टितानि छेदाः । पूर्ववृत्तान्तः पूर्वप्रशस्तिः । अब्भ्रमणं समुद्रयात्रा जले परिवर्त्तनमपि ताभ्योनादरेण यल्लक्ष्मीसमाकर्षणं तदर्थं यो विविधो भ्रमस्तेन। वाहिनी सेना नदी च । स्थैर्यं व्यवसायादचलनमपि । कार्कश्यं परविषयं निर्दयत्वमपि। तत्र निरभिमानोपि । तेज उन्नतिः क्षमा घर्मश्च । ईश्वरो हरोपि । कार्येषु क्षुण्णो लोकेषु घृष्टपृष्ठ उच्यते । नागदमनो गजमर्दनो गरुडश्च । भोगिनो राजानः सर्पाश्च । यथाघोषणापटहाः समरार्थिनामुत्साहं जनयति तथासावपीत्यर्थः ।

---

१. स्वामिनं सितचामरेणेव A. B. २. °टङ्काकारिकुट्टित° A. B. ३. °पर्वगणनामिव कुर्वन्पूर्वपर्वत इव Jambû ed. ४. पूर्वा पर्वतः A. B ५. वीरवृत्तान्तरसरामणीयकेन A. B. D. ६. °नायकं मर्यादा° A. B. D. ७. उपहसन्निव A. E. ८. मेदः A. ९. नागदमनं A. B. १०. सीमन्त° K. Jambû ed. ११. प्रतिज्ञानां A. B. D. १२. घोषण° A. B.

सिंहनादनामा स्वरेणैव दुन्दुभिनिर्घोषगम्भीरेण सुभटानां समररसं मानयन्नि-व विज्ञापितवान्। देव न क्वचित्कृताश्रयया मलिनया मलिनतराः कोकिलया काका इव कापुरुषा हतलक्ष्म्या विप्रलभ्यमानमात्मानं च न चेतयन्ते श्रियो हि दोषान्धतादयः कामला विकाराश्छत्रच्छायान्तरिततरवयो विस्मरन्त्यन्यं तेजस्विनं जडधियः। किंवा करोतु वराको येनातिभीरुतया नित्यपराङ्मुखेन न तु दृष्टान्येव सर्वातिशायिशौर्यातिशयश्वयथुकपिलकपोलपुलकपल्लवितकोपानलानि कुपितानां तेजस्विनां मुखानि। नासौ तपस्वी जानात्येवं यथाभिचारा इव विप्रकृताः सद्यः सकलकुलप्रलयमुपाहरन्ति मनस्विन इति। जलेपि ज्वलन्ति ताडितास्तेजस्विनः सकलवीरगोष्ठीबाह्यस्य तस्यैवेदमुचितमनुत्तारनिरयनिर्धातनिपुणं कर्म। मनस्विनां हि प्रधनप्रधानधने धनुषि ध्रियमाणे सति च कमलाकलहंसीकेलिकुवलयकानने कृपाणे कृपणोपायाः पयोधिमथनप्रभृतयोपि श्रीसमुत्थानस्य किं पुनरीदृशा येषाञ्च धात्रा धरित्रीं त्रातुं नियुक्ताः स्वयमसमर्था इव कुलिशकर्कशभुजपरिघप्रहरणहेतोरुद्गिरन्ति गिरयोपि लोहानि ते कथमिव बाहुशा-

देवेत्यादौ कापुरुषा हतलक्ष्म्या विप्रलभ्यमानं वञ्च्यमानमात्मानं न चेतयन्त इति योजना। न क्वचित्कृताश्रयया सर्वत्र चाञ्चल्यात्। कस्मात्तान्हतलक्ष्मीर्विप्रलभत इत्याह। श्रियो हि दोषान्धतादयः कामला विकारा इति। हि तस्माच्छ्रियो दोषान्धतादयो विकारास्ते हि कामलाः कमलसम्बन्धिनः। कमलानां दोषायां रात्रावन्धता सङ्कोचस्तन्निवासाच्च लक्ष्म्या अपि। स विकारश्चान्यं विप्रलभति। रागादयस्तैरन्धतेवान्धतासत्कार्यानालोचनम्। अथ च पाण्डुरोगभेदस्तेन शङ्खादौ पीतत्वादिज्ञानं तद्विकाराश्च रात्र्यन्धतादयो दोषा भवन्ति। सर्वातिशायिना शौर्यातिशयेन श्वयथुर्येषां तानि। ततो विशेषणसमासः। विप्रकृता उपद्रुताः। विप्रैर्द्विजैः कृताः। जले तेपि ताडिता आहता वैद्युताश्च तेजस्विनोग्नयोपि गोष्ठी बाह्यश्च न जानाति धर्मं वृद्धासेवितत्वात्। प्रधनं रणः। गिरयो लोहान्युद्गिरन्ति गिरिभ्य एव लोहोत्पत्तेः।

---

१. °मानयन्विज्ञापितवान्. K. Jambû ed. २. तनवो विस्मरन्त्येव A. B. T. ३. °शौर्यश्चाधिश्वयथु° A. B. D. ४. कुपितानि A. B. ५. °निपतन° A. B. T ६. मारुतलक्ष्म्या C2. ७. जले निर्जेपि Jambû ed.

लिनो मनसापि विमलयशो [1]बान्धवा ध्यायेयुरकार्यम् । सर्वग्रहाभिभवभास्वराणां हि सुभटकराणामग्रतो दिग्ग्रहणे पङ्गवः पतङ्गकरा महामहिषशृङ्गतरङ्गभङ्गुरभङ्गिभीषणान्तराला लोकप्रवाद[2]मात्रेण च दक्षिणाशा [3]परमार्थतो भटभ्रुकुटिरधिवासो यमस्य चित्रं च यदुन्मुक्तसिंहनादानां सहसा [4]साहसरभसरसरोमाञ्चकण्टकनिकरेण सह न निर्यान्ति सटाः शूराणां रणेषु द्वयमेव च चतुःसागरसम्[5]भृतस्य भूतिसम्भारस्य भाजनं प्रतिपक्षदाहि दारुणं वडवामुखं वा [6]महापुरुषाणां हृदयं [7]वा तेजस्विनः सकलाननवाप्य पयोराशीन्सहजस्य कुतो निर्वृत्तिरूष्मणः । वृथावततविपुलफणाभारो भुजङ्गानां[8] भर्त्ता बिभर्ति यो भोगेन मृत्पिण्डमेव केवलं । अप्रतिहतशा[9]सनाक्रान्त्युपभोगसुखरसन्तु रसाया दिक्कुञ्जरकरभारभास्वरप्रकोष्ठा वीरबाहव एव जानन्ति । रविरिवोन्मुखपद्माकरगृहीतपादपल्लवः सुखेनाखण्डिततेजा दिवसान्नयति शूरः । कातरस्य तु शशिन इव हरिणहृदयस्य पाण्डुरपृष्ठस्य [10]कुतो द्विरात्रमपि निश्चला लक्ष्मीः । अपरिमितयशःप्रकरवर्षी विकासी वीररसः पुरःप्रवृत्त[11]प्रतापप्रहताः पन्थानः पौरुषस्य शब्दविद्रुतविद्विषन्ति [12]भवन्ति द्वाराणि दर्पस्य शस्त्रालोकप्रकाशिताः शून्या दिशः शौर्यस्य रिपुरुधिरशीकरासारेण भूरिव श्रीरप्यनुरज्यते बहुनरपतिमुकुटमणिशिलाशाणकोण[13]कर्षणेन चरणनखराजिरिव राजताप्युज्ज्वलीभवति । अनवरतशस्त्राभ्यासेन करतलानीव रिपुमुखान्यपि श्यामीभवन्ति विविधव्रणबन्धपट्टकशतैः शरीर-

सर्वस्य वस्तुनो ग्रहोपहरणं । ग्रहाश्चन्द्राद्याः । पतङ्गः सूर्यः । महामहिषशृङ्गयोस्तरङ्गवद्भङ्गुरा ये भङ्गास्तैर्भीषणमन्तरालं यस्याः सा । अन्यत्र महामहिषशृङ्गतुल्या । भूतिर्भस्मापि । तेजस्विनो वडवाग्नेरपि । मुखेन शोभनाकारेणापि । शूरो रविरपि । हरिणहृदयस्याल्पसत्त्वस्यापि । पाण्डुरपृष्ठस्य देशभाषया निर्लज्जस्यापि । द्विरात्रमपीति पौर्णमास्यामेव शशिनः सातिशयं शोभायुक्तत्वात् । लक्ष्मीः श्रीः कान्तिश्च । शून्या अनावृताः । अनुरज्यतेऽनुरक्ता भवत्युपलिप्ता च भवति । उज्ज्वला रम्या निर्मला च । श्यामानि कृष्णानि विच्छायानि च । श्रेयान्प्रशंसनीयः ।

---

१. °बान्धववध्यामलनमप्याचरेयुरकार्यं A. B. D. T. २. °मात्रेणैव A. B. ३. तत्त्वतो भटभ्रकुटिर° A. B. ४. साहसरससरोमाञ्च. A. Jambû ed. साहसरसरो° K. ५. तस्य A. B. ६. महापुरुषहृदयं. A. B. ७. वाश. K. K1. श्राम Jambû ed. ८. भुजङ्गमानां A. B. D. ९. °शाशना° A. B. T. १०. कुतोर्द्धरात्रमपि A. B. ११. °प्रतापाः A. B. १२. वदन्ति A. B. D. १३. कषणे नखराजिरिव A. B.

मिव यशोपि धवलीभवति । कवचिषु रिपूरः[1]कपाटेषु पात्यमानाः पावकशिखामिव श्रियमपि वमन्ते निष्ठुरा निस्त्रिंशप्रहाराः । यश्चाहिततहतस्वजनो [2]मनस्विजनो द्विषायोपि दुरन्ताडनेन कथयति हृदयदुःखं [3]परुषानंसिलतानिपातपवनेनोच्छ्वसिति निरुच्छ्वासितशत्रुशरीरासृग्धारापातेनरोदिति विपक्षवनिताचक्षुषा ददाति जलं स श्रेयान्नेतरः । न च स्वप्नदृष्टनष्टेष्विव क्षणिकेषु शरीरेषु निबध्नन्ति बन्धु[4]बुद्धिं प्रबुद्धाः स्थायिनि यशसीव [5]शरीरधीर्वीराणां । अनवरतप्रज्वलिततेजःप्रसरभास्वरस्वभावं च मणिप्रदीपमिव कलुषः कज्जलमलो न स्पृशत्येवातितेज[6]स्विनं शोकः । स त्वं सत्त्ववतामग्रणीः प्राग्रहरः प्रज्ञानां प्रथमः समर्थानां प्रष्ठोभिज्ञानानामग्रेसरस्तेजस्विनामादिरसहिष्णूनाम् । एताश्च [7]संततसन्निहितधूमायमानकोपाग्नयः मुलभासिधारातोयर्नृप्तया विकटबाहुवनच्छायोपगूढा धीर[9]तोया निवासशि[10]शिरभूमयः स्वायत्ताः सुभटानामुरःकपाटभित्तयः यतः किं [11]गौडाधिपाधमेनैकेन । तथा कुरु यथा नान्योपि कश्चिदाचरत्येवं भूयः सर्वोर्वीश्रद्धाकामुकानामलीकविजिगीषूणां सञ्चारय चाम[12]राण्यन्तःपुरपुरन्ध्रिनिःश्वसितैरुच्छिन्धि रुधिर[13]गन्धान्धगृध्रमण्डलाच्छादनैश्छत्रच्छायाव्यसनानि । अपाकुरु कदुष्णशोणितोदकस्वेदैः कुलक्ष्मीकुलटाकटाक्षचक्षूरागरोगान् । उपशमय निशित[14]शरसिरावेधैर्वीरकार्यशौर्यश्वयथून् । उन्मूलय लोहनिगडापीडमालामलयमहौषधैः पादपीठदोहददुर्ललितपादप[15]टुभान्द्यानि क्षपय तीक्ष्णाज्ञाक्षरक्षारपातैर्जयशब्दश्रवणकर्णकण्डूरपनय चरणनखमरीचिचन्दनचर्चाललाटलेपैर[16]नमितस्तिमितमस्तकस्तम्भविकारान् । उद्धर करदानसन्देशसन्दंशैर्द्रविणदर्पोष्मायमाण[17]दुःशीललीलाशल्यानि भि[18]न्धि मणिपादपीठदीधितिदीप्रप्रदीपिकाभिः शुष्कसुभटाटोपभ्रुकुटिबन्धान्धकारान् । जय चरणलङ्घनलाघवगलितशिरोगौरवारोग्यैर्मिथ्याभिमानमौनमहासन्निपातान् [19]प्रदय सततसेशिशिरभूमयोप्यग्नितोयच्छायायुक्ता भवन्ति । स्वेदैश्च नयनव्याध्युपशमो जायते । एवं निशितशरसिरावेधैरित्यादि बोद्धव्यम् । [20]सन्दंशः शल्याञ्चनं ।

---

१. कवाटेषु K. २. मनस्वी A. B. D. ३. पुरुषासिलतालतनपवनेन निःश्वसिति A. पुरुषासिलतावनपात° B. ४. बन्धुषु A. ५. बान्धवबुद्धिर्धीराणां A. बान्धवधीर्धीराणां B. ६. तेजस्विनां K. Jambû ed. ७. सततं A. B. ८. °वृष्टयः A. B. D. ९. °वीरताया° A. B. १०. °शिबिर° A. B. T. ११. गौडाधिपेनैकेन A. B. D. १२. चामरमरुतानन्तः A. B. T. १३. °गन्धाङ्ग B. १४. °शरव्यधशिराशोणितव्ययैरकार्य A. B. D. १५. °मदमान्द्यानि A. B. १६. अनमनस्तिमित° A. B. D. १७. दुःशीलताशिल्यानि A. B. D. T. १८. भिद्धि A. B. १९. प्रदय A. B. *secunda manu corrected to* प्रणुदय in A. २० सन्देशः C. 2.

वाञ्जलिमुकुलितकरसम्पुटोष्मभिरिष्वसनगुणकिणकार्कश्यानि येनैव च ते गतः पिता पितामहः प्रपितामहो वा तमेव मा हासीस्त्रिभुवनस्पृहणीयं पन्थानमपहाय कुपुरुषोचितां शुचं प्रतिपद्यस्व कुलक्रमागतां केसरीव कुरङ्गीं राजलक्ष्मीं देवे देवभूयं गते नरेन्द्रे दुष्टगौडभुजङ्गजग्धजीविते च राज्यवर्धने वृत्तेस्मिन्महाप्रलये धरणीधारणायाधुना त्वं शेषः समाश्वासयाशरणाः प्रजाः। क्ष्मापतीनां शिरःसु शरत्सवितेव ललाटन्तपान्प्रयच्छ पादन्यासान्। अहितानामभिनवसेवादीक्षादुःखसन्तप्तश्वासधूममण्डलैर्नखमयूखैः प्रचलितचूडामणिचक्रवालबालातपैश्चायाहि कल्माषपादताम्। अपि च हते पितर्येकाकी तपस्वी मृगैः सह सन्वर्धितः सहजब्राह्मण्यमार्दवसुकुमारमनाः कृतनिश्चयश्चण्डचापवनाटनिटाङ्कारनादनिर्मदीकृतदिग्गजं गुञ्जज्यजालजनितजगज्ज्वरं समग्रमुद्यतमेकविंशतिकृत्वः कृतवंशमुत्खातवान्राजन्यकं परशुरामः। किं पुनर्नैसर्गिककायकार्कश्यकुलिशायमानमानसो मानिनां मूर्धन्यो देवः। तदद्यैव कृतप्रतिज्ञो गृहाण गौडाधिपाधमजीवितध्वस्तये जीवितसङ्कलनाकुलकालाकाण्डदण्डयात्राचिन्हध्वजं धनुर्न ह्ययमरातिरक्तचन्दनचर्चाशिशिरोपचारमन्तरेण शाम्यति परिभवानलपच्यमानस्य देहस्य देवस्य दुःखदाहज्वरः सुदारुणा निकारसन्तापशान्त्युपायपरिक्षये हि हिडिम्बाचुम्बनास्वादितमिव रिपुरुधिरामृतममन्दरोपायमपायि पवनात्मजेन जामदग्न्येन च शाम्यन्मन्युशिखिशिखासञ्ज्वरसुखायमानस्पर्शशीतलेषु क्षत्रियक्षतजह्रदेष्वस्नायीत्युक्त्वा व्यरंसीत्॥

देवस्तु हर्षस्तं प्रत्यवादीत्। करणीयमेवेदमभिहितं मान्येनेतरथापि हि मे गृहीनभुवि भोगिनाथेऽपि दायादहृष्टिरीर्ष्यालोभुजसतताञ्जलिबन्धात्करयोरूष्मसम्भवः। इष्वसनं धनुः। देवभूयं देवत्वं। शेषोवशिष्टः शेषभट्टारकश्च। ललाटन्तपानिति प्रचण्डतोक्ता। कल्माषपादता चित्रचरणत्वं। राजन्यकं क्षत्रियसमूहः। रामो भार्गवः। नैसर्गिकः स्वाभाविकः। मूर्धन्यो मुख्यः। परिभवो निकारः। हिडिम्बा राक्षसी। भीमसेनेन पवनात्मजेन। क्षतजह्रदेषु रक्ततडाकेषु। इतरथापीत्यन्यथा यदीदृशं दुर्जातं जातं नाभूत्तदादावेवमद्भुतं भुजस्य भोगिनाथेपि दायादहृष्टिः।

---

१. शुचि B. २. देवे A. ३. चण्डचापाटनिटंकारनादनिर्मदं A. B. ४. क्षत्रवंश° A. B. D. ५. °च्यमानदेहस्य देवस्य Jambû ed. ६. देवस्य K. ७. हिडम्बा.° A B. ८. जामदग्नेन A. B.

स्योपरि गच्छतीच्छति निग्रहाय ग्रहगणेपि भ्रूलता चरितुम् । अनमत्सु शैलेष्वपि कचग्रहमभिलषति दातुं करस्तेजोदुर्विदग्धानर्ककरानपि चामराणि ग्राहयितुमीहते हृदयं । राजशब्दरुषा मृगराजानामपि शिरांसि वाञ्छति पादः पादपीठीकर्त्तुं[1] स्वच्छन्दलोकपालस्वेच्छागृहीतानामाक्षेपादेशाय दिशामपि स्फुरत्यधरः । किं पुनरीदृशे दुर्जाते जाते जातामर्षनिर्भरे च मनसि नास्त्येवावकाशः शोकक्रियाकरणस्य । अपि च हृदयविषमशल्ये मुसल्ये[2] जीवति जाल्मे जगद्विगर्हिते[3] गौडाधिपाधमचण्डाले जिह्रेमि शुष्काधरपुटः पोटेव प्रतिकार[4]शून्यं शुचा शूत्कर्त्तुं[5] । अकृतरिपुबलाबलाविलोलविलोचनोदकदुर्दिनस्य मे कुतः करयुगलस्य जलाञ्जलिदानमदृष्टगौडाधमचिताधूममण्डलस्य वा चक्षुषः स्वल्पमप्यस्रुसलिलम् । श्रूयतां च मे प्रतिज्ञा शपाम्यार्यस्यैव पादपांसुस्पर्शेन यदि परिगणितैरेव वासरैः सकलचापचापलदुर्ललितनरपतिचरणरणरणायमाननिगडां निर्गौडाङ्गां[6] न करोमि । ततस्तनूनपाति पीतसर्पिषि पतङ्ग इव पातकी पातयाम्यात्मानमित्युक्त्वा च महासन्धिविग्रहाधिकृतमवन्तिकमन्तिकस्थमादिदेश । आर्य लिख्यन्तां[7] लेखाः । आ रविरथचक्रचीत्कारचकितचारणमिथुनमुक्तसानोरुदयाचलाद् आ त्रिकूटकटककुट्टाकटङ्कलिखितकाकुत्स्थलङ्कालुण्ठनव्यतिकरात्सुवेलाद् आ वारुणीमदस्खलितवरुणवरनारीनूपुररवमुखरकुहरकुक्षेरस्तगिरेर्[8] आ गुह्यकगेहिनीपरिमलसुग-

किं पुनरीदृशे । दुर्जाते व्यसने जाते सम्पन्ने शत्रुवृद्धिर्भवेदिति योजना । एवमुपरिगच्छतीत्यादौ बोद्धव्यं । आक्षेपोपहरणं । मुसलेन वध्यो मुसल्यः । तस्मिन् जाल्मे पापिष्ठे । पोटा नपुंसकं । निगडो बन्धनशृङ्खला । तनूनपाद्वह्निः । चारणा गन्धर्वाः । काकुस्थो रामः । वारुणी सुरा । कुक्षिर्वेदिः । गुह्यका यक्षाः ।

---

१. कर्त्तुं A. B. २. मुशल्ये A. B. ३. जगद्द्रुहिते गौडचाण्डाले A. B. D. ४. प्रतीकार° A. B. ५. फूत्कर्त्तुं A. B. T. ६. निर्गौडां न करोमि मही K2. ७. लिख्यतां K. Jambû ed. ८. °वरुणवासिनीनुपूर° A. B. D.

न्धिगन्धपाषाणवासितगुहागृहाच्च गन्धमादनात् सर्वेषां राज्ञां सज्जीक्रियन्तां कराः करदानाय शस्त्रग्रहणाय वा गृह्यन्तां दिशश्चामराणि वा नमन्तु शिरांसि धनूंषि वा कर्णपूरीक्रियन्तामाज्ञा [1]मौर्व्यो वा शेखरीभवन्तु पादरजांसि शिरस्त्राणि वा [2]घटन्तामञ्जलयः करिघटाबन्धा वा मुच्यन्तां भूमय इषवो वा समालम्ब्यन्तां वेत्रयष्टयः कुन्तलयष्टयो वा सुदृष्टः क्रियतामात्मा मच्चरणनखेषु [3]मणिदर्पणेषु वा [4]परागतोऽहमिति पङ्गोरिव मे कुतो निवृत्तिस्तावद् यावन्न कृतः सर्वद्वीपान्तरसञ्चारी सकलनरपतिमुकुटमणिशिलालोकमयः पादलेप इति कृतनिश्चयश्च मुक्तास्थानो विसर्जितराजलोकः स्नानारम्भाकाङ्क्षी [5]सभामत्याक्षीत्। उत्थाय च [6]स्वस्थवन्निःशेषमाह्निकमकार्षीत्। अगलच्च दर्पप्रसर इव श्रुतप्रतिज्ञस्य शाम्यदूष्मा दिवसस्त्रिभुवनस्य। ततश्च निजाधिकारापहारभीत इव भगवत्यपि क्वापि गते [7]गततेजस्यहिमभासि तामरसवनेष्वपि निगूढशिलीमुखालापेषु त्रासादिव संकुचत्सु विहगगणेष्वपि समुपसंहृतनिजपक्षविक्षेपनिश्चलेषु भियेव प्रकटीभवत्सु भुवनव्यापिनीं सन्ध्यां प्रतिज्ञामिव मानयति [9]नतशिरसि घटिताञ्जलिवने जने सकले स्वपदच्युतिचकितदिक्पालदीयमानाभ्रंलिहलोहप्राकार[10]वलयकलितास्विव बहलतिमिरमालातिरोधीयमानासु दिक्षु प्रदोषास्थाने नातिचिरं तस्थौ। [11]नमन्नृपलोकलोलांशुकपवनकम्पितशिखैर्दीपिकाचक्रवालैरपि प्रणम्यमान इव च प्राहिणोल्लोकं प्रतिषिद्धपरिजनप्रवेशं च शयनगृहं प्राविशत्। उत्तानश्च मुमोचाङ्गानि शयनतले दीपद्वितीयं च तमभिसर इव [12]लब्धावसरस्तरसा भ्रातृशोको जग्राह जीवन्तमिव हृदये निमीलितलोचनो ददर्शाग्रजम्। उपर्युपरि भ्रातृजीविता[13]न्वेषणे इव प्रसस्रुः श्वासाः।

पङ्गोर्गतिविकलस्य। ऊष्मा औष्ण्यं। ततश्चेत्यादौ प्रदोषास्थाने नातिचिरं तस्थाविति सम्बन्धः। शरा अपि शिलीमुखाः। सहाया अपि पक्षाः। अभिसराश्चौराः।

---

१. मौर्वी K. K2. Jambû ed. २. घटयन्तां A. B. ३. कृपाणदर्पणेषु A. B. ४. परगतोरिव कुतो मे निवृत्तिः A. B. D. T. ५. सभामभाङ्क्षीत् A. B. D. ६. स्वस्थ इव निःशेष° K. K1. ७. गततेजसि हिरण्यरेतसि A B. D. T. ८. मूकीभवत्सु A. B. ९. गतशिरसि A. B. T. १०. °वलयास्विव K. K. K1. Jambû ed. ११. नमन्निविष्टपलोकलोलांशकपवननमितशिखैः A. B. D. १२. लब्धान्तरस्तरसा A. B. १३. °वेषणायेव A. B. T.

धवलांशुकपटान्तेनेव चाश्रुजलप्लवेन मुखमाच्छाद्य निःशब्दमतिचिरं रुरोद चकार च चेतसि कथं नामाकृतेस्तादृश्या युक्तः परिणामोयमीदृशः पृथुशिलासङ्घातकर्कशकायबन्धात्तातादचलादिव लोहधातुः कठिनतर आसीदार्यः । कथं चास्य मे हतहृदयस्यार्यविरहे सकृदपि युक्तं समुच्छ्वसितुम् । इयं सा प्रीतिर्भक्तिरनुवृत्तिर्वा बालिशोपि कः सम्भावयेदार्यमरणे मज्जीवितं । तत्तादृशमैक्यमेकपद एव क्वापि गतं । अयत्नेनैव हतविधिना पृथक्कृतोस्मि दग्धरोषान्तरितशुचा सुचिरं रुदितमपि न मुक्तकण्ठं गतघृणेन मया । सर्वथा लूतातन्तुच्छटाभिदुरास्तुच्छाः प्रीतयः प्राणिनां लोकयात्रामात्रनिबन्धना बान्धवता यत्राहमपि नाम पर इवार्ये स्वर्गस्थे स्वस्थ इवासे । किञ्च दैवहतकेन फलमासादितमीदृशि परस्परप्रीतिप्रबन्धनिर्वृतहृदये सुखभाजि भ्रातृमिथु ने विघटिते । तथा च चन्द्रमया इव जगदाह्लादिनो लोकान्तरीभूतस्य लग्नचिताग्नय इवार्यस्य त एव दहन्ति गुणा इत्येतानि चान्यानि च हृदयेन पर्यदेवत । प्रभातायां च शर्वर्यां प्रातरेव प्रतीहारमादिदेशाशेषगजसाधनाधिकृतं स्कन्दगुप्तं द्रष्टुमिच्छामीति । अथ युगपत्प्रधावितबहुपुरुषपरम्पराहूयमानः स्वमन्दिरादप्रतिपालितकरेणुश्चरणाभ्यामेव संभ्रान्तः ससंभ्रमैर्दण्डिभिरुत्सार्यमाणजनपदः पदे पदे प्रणमतः प्रतिदिशमिभभिषग्वरान्वरवारणानां विभावरीवार्त्ताः पृच्छन्नुच्छ्रितशिखिपिच्छलाञ्छितवंशलता वनगहनगृहीतदिगाभार्मैर्विन्ध्यवनैरिव वारणबन्धविमर्दोद्योगागतैः पुरः प्रधावद्भिरनायत्तमण्डलैराधोरणगणैश्च मरकतहरितघासमुष्टीश्च दर्शयद्भिर्नवग्रहगजपतींश्च प्रार्थयमानैश्च लब्धाभिमतमत्तमातङ्गमुदितमानसैश्च सुदूरमुपसृत्य नमस्यद्भिरात्मीयमातङ्गमदागमांश्च निवेदयद्भिर्डिडिमाधिरोहणाय च विज्ञापयद्भिरपरैः प्रमादापतितापराधापहृतद्भिरद-

लूता तन्तुच्छटा जालकारसूत्रजालं । लोकयात्रा लोकाचारः । किं फलमासादितं न किञ्चिदित्यर्थः । पर्यदेवत शुशोच । अथेत्यादौ स्कन्दगुप्त

१. सासु° A. B. २. कठिनहृदयस्य A. B. D. ३. यत्नेनैव A. B. T. ४. धूतभेन A. B. ५. °च्छटाच्छिदुराः A. B. D. T. ६. स्वस्थवदासे A. B. ७. पर्यदेवयत् *secunda manu* corrected in A., also Jambû ed. ८. क्षिपायां A. B. D. ९. ससंभ्रमः A. B. T. १०. उद्वेगागतैः A. B. D. ११. °हरितां घासमुष्टिं दर्शयद्भिः A. B. १२. नमस्यद्भिराश्री यमातङ्गं A. B. D.

भिधानाः कृपणाः क्रिमयोपि[1] न मृष्यन्ति निकारं[2]। किमुत भवादृशास्तेजसां राशयः केवलं देवराज्यवर्धनोदन्तेन कियदपि दृष्टमेव देवेन दुर्जनानां दौरात्म्यं । ईदृशाः खलु लोकस्य स्वभावाः प्रतिग्रामं प्रतिनगरं प्रतिविषयं प्रतिदेवं प्रतिद्वीपं प्रतिदिशं च भिन्ना वेशाश्चा[3]काराश्चाचाराश्चा व्याहाराश्च व्यवहाराश्च जनपदानां तदियमात्मदेशाचारोचिता स्वभावसरलहृदयजा त्यज्यतां सर्वविश्वासिता प्रमाददोषाभिषक्तेषु [4]बहुश्रुतवार्त्त एव प्रतिदिनं देवः। यथा नागकुलजन्मनः [5]प्लावितमन्त्रस्यासीन्नाशो नागसेनस्य पद्मावत्यां शुकश्रुतरहस्यस्य च श्रीरशीर्यत श्रुतवमर्णः श्रावस्त्यां स्वप्नायमानस्य च मन्त्रभेदोभून्मृत्यवे [6]मृत्तिकावत्यां सुवर्णचूडस्य चूडामणिलग्नलेखप्रतिबिम्बवाचिताक्षरा च चारुचामीकरचामरग्राहिणी यमतां ययौ यवनेश्वरस्य लोभबहुलं च बहुलनिशि निधानमुत्खनन्तमुत्खातखड्गप्रमाथिनी ममन्थ माथुरं बृहद्रथं [7]विदूरथवरूथिनी नागवनविहारशीलं च माया[8]मातङ्गाङ्गान्निर्गता महासेनसैनिका

अनेन च गूढमन्त्रेण यत्नाद्भाव्यमित्युक्तं मृत्तिकावत्यां सुवर्णचूडो नाम राजा कंचिद्विस्रम्भपूर्वकं जिघृक्षन्मान्त्रितवांस्तदेव तस्मै विललास ततस्तत्पूर्वं तत्प्रयुक्तेन विश्वासिना शिरोरक्षकेन स्वस्वामिप्रयुक्तेन व्यापादित इत्यनेन च कुलस्वभावाद्यपरीक्ष्य न कार्यो भृत्य इत्युक्तं । यवनेश्वरः केनाचिच्छत्रुणासाद्य व्यापादितुमिष्टः स्वसुहृदा शत्रुद्रोहं लेखेन बोधितो लेखपृष्ठे च तेन लिखितं स्वयं वाचयितव्यो लेख इति । ततो यवनेश्वरस्य स्वयं वाचयतचूडामणिप्रतिबिम्बितान्यक्षराणि वाचयित्वा तत्प्रहिता चामरग्राहिणी प्रभवे निवेद्य तदाज्ञया तं जघानेति । अनेन सूक्ष्मोपि रहस्यभेदहेतू रक्षणीय इत्युक्तम् । विदूरथप्रयुक्तेन नरेन्द्रवृन्दप्रतारितो बृहद्रथो नाम राजा लोभवशात्खन्यवादे कृष्णानिशिप्रवृत्तस्तत्सेनया प्रहृत इति। अतः प्रवर्त्तितव्यमित्युक्तं । महासेनो नामोज्जयिनीपतिः स्वदुहितरं वासवदत्ताख्यामुदयनाय दित्सुः कपटजं नागं वीथ्यां प्रसज्य छद्मप्रहितैः

---

१. कृमयोपि K. K. Jambû ed. २. निकारणं B. विकारं K. ३. वेषाः A. B. ४. श्रुतबहुवार्तः A. B. D. ५. शारिकाश्रावितमन्त्रस्य A. B. D. T. ६. तार्तिकावर्तस्य A. B. ७. विरूरथ° B. ८. मातङ्गाङ्गनिर्गता A. B.

वत्सपतिं न्यर्यंसिषुः। अतिदयितलास्यस्य च शैलूषमध्यमध्यास्य मूर्धानमसिलतया मृणालमिवालुनादग्निमित्रात्मजस्य सुमित्रस्य मित्रदेवः। प्रियतन्त्रीवाद्यस्य वालाबुवीणश्यन्तरसुषिरनिहितनिशिततरवारयो गान्धर्वच्छात्रच्छद्मानश्चिच्छिदुरश्मकेश्वरस्य शरभस्य शिरो रिपुपुरुषाः प्रज्ञादुर्बलं च बलदर्शनव्यपदेशदर्शिताशेशसैन्यः सेनानीरनार्यो मौर्यं बृहद्रथं पिपेष पुष्यमित्रः स्वामिनं च कार्यकुतूहली च दण्डोपनतयवननिर्मित्तेन नभस्तलयायिना यन्त्रयानेनानीयत क्वापि काकवर्णं शैशुनागिर्नगरोपकण्ठे कण्ठश्चास्य निचकृते । अतिस्त्रीसङ्गं वारतमनङ्गपरवशं शुङ्गममात्यो वसुदेवो देवभूतिदासीदुहित्रा देवीव्यञ्जनया वीतजीवितमकारयत् । असुरविवरव्यसनिनं चापजह्रुरपरिमितरमणीमणिनूपुरझणझणाह्लादरम्यया मागधं गोधनगिरिसुरुङ्गया स्ववि-

शरैर्नामगुणान्प्रख्याप्योदयनं लोभितवान् । सोप्यविचार्यैव गजग्रहग्राहिकया कतिपयाप्तः परिवारो घोषवतीं वीणामादाय तत्र गतः । कपटकुञ्जरान्तर्गतैर्महासेनसैनिकैः संयुत इति । अतो नाल्पपरिवारैः संवीक्ष्य च विस्रब्धैर्भाव्यमित्युक्तं सुमित्रो राजा मित्रव्यसनी स्त्रीजनपरिवार इव नटजनविस्रब्धे मित्रदेवेन[12] नटत्वमाश्रित्य हतः । स च योगचूर्णविचूर्णितस्तिरोहितो बभूवेति । अतो व्यसनिभिः प्रकृतलोकाविश्वासिभिश्च न भाव्यमित्युक्तं । शरभोतिशयितान्वाद्यवतः प्रवेशमदादिति । गूढायुधे रिपुपुरुषैर्हत इत्यतो मतागपि व्यसनं वर्जनीयमित्युक्तं । अकार्यमत्र परदारगमनादि । तरवारिरेकधारः खड्गः । प्रज्ञेत्यादि मृष्टा कथा । अनेन च भृत्यबलदर्शनमसन्नद्धैर्न कार्यमित्युक्तं । मौर्यमिति गोत्रनाम । काकवर्णो यवनान्विजित्वा[13] तैश्च स्वपुरुषानुपायनीकृत्य यन्त्रयानैस्तद्वृत्तैः परदारादीन्गच्छन्यवनैरात्मदेशं प्राप्य निहत इति । अतः शत्रुप्राभृतेषु भृत्येषु न विश्वसनीयमित्युक्तं । देवीव्यञ्जनया महिषीव्याजया । मेकलाधिपमन्त्रिभिर्वातिकच्छद्मभिरहिविवरं साधितं । तपसास्माभिरित्युक्त्वा मागधो गुहाद्वारप्रतिद्वारैर्बद्धोभूत् । गोधनगिरिः सूर्याख्यः पर्वतः ।

---

१. सामयंशिपुः A. B. D. २. अग्निमित्राग्रजस्य A. B. ३. मूलदेवः A. B. T. ४. °शुषिर° A. B. ५. भरतस्य A. B. T. ६. पुष्पमित्रस्वामिनं A. B. ७. दण्डोपनततनय° A. ८. शिशुनागिर्जगरोपकण्ठे A. B. D. ९. सङ्गमनङ्गपरवशं K. K. °सङ्गरतमनङ्ग° Jambû ed. १०. देवभूमि° B. ११. गोवर्धनगिरिसुरुङ्ग्या स्वविषयात् A. B. T. १२. मूलदेवेन $C_2$. १३. विकृत्य $C_2$.

षयं मेकलाधिपतिमन्त्रिणः। महाकालमहे च महामांसविक्रयवादवातू-
लं वेतालस्तालजङ्घो [1]जघान जघन्यजं [2]प्रद्योतस्य [3]पौर्णिकिं कुमारं कुमार-
सेनं रसायन[4]रसाभिनिवेशिनश्च वैद्यव्यञ्जनाः सुबहुपुरुषान्तरप्रका-
शितौषधिगुणा गणपतेर्विदेह[5]राजसुतस्य राजयक्ष्माणमजनयन्।
स्त्रीविश्वासिनश्च महादेवीगृहगूढभित्तिभाग्भूत्वा भ्राता भद्रसेनस्याभ-
वन्मृत्यवे कालिङ्गस्य। वीरसेनो मृत्यवे मातृशयनीय[6]तूलिकातलनि-
षण्णश्च तनयोन्यं तनयमभिषेक्तुकामस्य [7]दध्रस्य करूषाधिपतेरमवह्नि-
नाशाया। उत्सारकरुचिं च रहसि ससचिवमेव शूद्रकदूतं दूरीचकार
चकोरनाथं चन्द्रकेतुं जीवितात्। मृगयासक्तस्य च मथ्नतो [8]गण्डका-
मुद्दण्डनड्वलनलवनानिलीनाश्च चम्पाधिपचमूचारभटाश्चामुण्डीपते-
राचेमुः प्राणान्पुष्करस्य [9]बन्दिरागपरं च परप्रयुक्ता जयशब्दमुखरमुखा
[10]मंङ्क्षा मौखरिं मूर्खं क्षत्रवर्माणमुदखनन्। [11]अरिपुरे च परकलत्रकामुकं
कामिनी[12]वेशगुप्तश्च चन्द्रगुप्तः शकपतिं प्रशशासेति प्रमत्तानां च प्रमदा-
कृता अपि प्रमादाः श्रुतिविषयमागता एव देवस्य। यथा [13]मधुमोचित-

सुरुं गाविवरं। मेकलो विंध्याद्रिः। मह उत्सवः। वातूलं व्यसनोन्मत्तप्रायं। जघन्यजं कनीयांसं। पुणको गोत्रविशेषः। तदुद्भवः पैाणकिः। वैद्यकं व्यञ्जयन्ति प्रकाशयन्तीति वैद्यव्यञ्जनाः। राजयक्ष्माणं [14]क्षयरोगम्। दध्राख्यस्य [15]करूषाधिपतेः। पितुस्तनयो मृत्यवेभवादिति। प्राक्तनक्रियया सङ्गतिः। गण्डकाःखड्गाद्याः प्राणिनः। [16]चामुण्डीति नगरी नाम। आचेमुरभक्षयन्। शकानामाचार्यः शकाधिपतिः। चन्द्रगुप्तभ्रातृजायां ध्रुवदेवीं [17]प्रार्थयमानश्चन्द्रगुप्तेन ध्रुवदेवीवेशधारिणा स्त्रीवेशजनपरिवृत्तेन रहसि व्यापादित इति। मधुरकं विषं। परन्तपं

---

१. जघास A. B. D. २. प्रतोद्यस्य K. Jambû ed. ३. पौणिकं A. B. ४. °रसावेशिनश्च A. B. ५. °राजस्य A. B. D. ६. °तूलीतल° A. B. ७. वज्रप्रभावस्य A. B. D. ८. दण्डकान् A. B. T. ९. वत्सिराध्यपरं K. १०. सज्ञा K. $K_1$. ११. अलिपुरे A. B. D. १२. °वेषगुप्तो गुप्तश्चन्द्रगुप्तः A. B. T. १३. °मोदितमधुररसलिप्तैः A. B. D. T., °मधुकर° K. १४ क्षयव्याधि $C_2$. १५. कार्तपाधिपतेः $C_2$. १६. चामुण्डेति $C_1$. $C_2$ १७. दण्डार्थं प्रार्थयमानः $C_2$. $C_2$.

मधुरकसंलिप्तैर्लाजैः सुप्रभा पुत्रराज्यार्थं महासेनं काशिराजानं जघान। व्याजजनितकन्दर्पदर्पा च दर्पणेन क्षुरक्षारधारापर्यन्तेनायोध्याधिपतिं परन्तपं रत्नवती जारूथ्यं[2] विषमचूर्णचुम्बितमकरन्देन च कर्णेन्दीवरेण देवकी देवरानुरक्ता देवसेनं सौह्मम्। योगपरागविसरवर्षिणा च मणिनूपुरेण[3] वल्लभा सपत्नीरुषा वैरन्त्या रन्तिदेवं वेणीविनिगूढेन च शस्त्रेण बिन्दुमती वृष्णि[4] विदूरथं रसादिग्धमध्येन च मेखलामणिना हंसवती सौवीरं वीरसेनं। अदृश्यागद[5]विलिप्तवदना च विषवारुणीगन्डूषपायनेन पौरवी पौरवेश्वरं सोमकमित्येतावदुक्त्वा विरराम स्वाम्यादेशसंपादनाय च निर्जगाम॥

देवोपि हर्षः सकलराज्यस्थितीश्चकार ततश्च तथा कृतप्रतिज्ञे प्रयाणं विजयाय दिशां दित्साति देवे हर्षे हतायुषां प्रतिसामन्तानामुदवासितेषु बहुरूपाण्युपलिङ्गानि वितेनिरे। तथा हि प्रविष्टकालदूतदृष्टय[6] इवेतस्ततश्चेरुश्चटुलाः कृष्णशारश्रेणयः[7] प्रचलितलक्ष्मीनूपुरप्रणादप्रतिमा मधुसरघासंघातझाङ्कारा जह्रादिरे। चिरं विवृतविकृतवदनाविवरविनिःसृतवृंहिविसरा वासरेपि विरसं विरेसुरुपशिविरं शवार्थमशिवाः शिवाः शवपिशित[8]प्ररूढप्रसरा इव कपिपोतकपोलकपिलपक्षतयः काननकपोताः पेतुः। आमन्त्रयमाणा इव दधुर[9]कालकुसुमानि समभुपवनतरवस्तरल[10]करतलप्रहारप्रहतपयोधरा रुरुदुः प्रसभं समास्तस्यसालभञ्जिका ददृशुरासन्नकठिनकचग्रहभयोद्भ्रान्तोत्तमाङ्गमिवात्मानं कबन्धमादर्शोदरेषु योधाश्चूडामणिषु चक्रशंखकमललक्ष्माणः प्रादुरभवन्पादन्यासा राजमहिषीणां च चेटीचामराण्य-

प्रतापवन्तं। जा[11]रूथ्यमिति जघानेति। प्राक्तन्येव क्रियोत्तरत्र च। चूर्णो विषक्षोदः। मकरन्दः पुष्परसः। देवरः कनीयान्भ्राता भर्त्तुः। योगपरागोभिवारचूर्णं। वैरन्ती नाम नगरी। रसदिग्धं विषोपलिप्तं। अगदो विषहरद्रव्यसमूहः। वारुणी सुरा। उदवासितेषु गृहेषु। उपलिङ्गान्यनिमित्तानि। सरघा मधुमक्षिकाः। काननकपोता गृध्राः। व्यघटन्त आसन्। स्तम्बकरिं वद्ध-

१. पुत्रराज्यार्थिनी मदासेनं काशिराजं A. B. D., काशिराजं K. Jambûch. २. जाहृध्यां A. B. ३. नूपुरेण वल्लभसपत्नीरुषा वैरन्ती A. B. D. ४. वृष्णं A. B. ५. अदृष्यागद° A. B. ६. ह्यविप्रकृष्टकालदूत° A. B. ७. कृष्णसारपङ्क्तयः A. B. ८. शिविपिशित° B. ९. ददुर° A. B. D. १०. तरलकरतरतल° B. ११. जारुध्यामिति C.

कस्माद्धावन्त पाणिंपल्लवात्प्रणयकलहेपि दत्तपृष्ठाश्चिरमभवन्भटाः पराङ्मुखा मानिनीनां करिणीकपोलेषु व्यघटन्त मधुलिहां मदमदिरापानगोष्ठ्यः समाघ्रातयममहिषगन्धा इव तप्यन्तः स्तम्बकारिमपि हरयो हरितं नैवयवसं न चेरुः। चलवलयावलीवाचालबालिकातालिकातोद्यलालिता अपि न ननृतुर्मन्दा मन्दिरमयूराः। निशि निशि रजनिकरहरिणानिहितनयन इवोन्मुखस्तारमुपतोरणमकारणमकाणीत्कौलेयकगणो गणयन्तीव गतायुषस्तर्जनतरलया तर्जन्या दिवसमार। वाटकेषु कोटवी कुट्टिमेषु कुटिलहरिणखुरवेणीतरङ्गिण्यश्च शष्पराजयोजायन्त जनितवेणीबन्धानि निरञ्जनरोचनारोचींषि चषकमधुनि मुखकमलप्रतिबिम्बान्यदृश्यन्त भटीनां समासन्नात्मापहारचकिता इव चकम्पिरे भूमयः। वध्यालङ्काररक्तचन्दनरसच्छटा इवालक्ष्यन्त शूराणां पतिताः शरीरेषु विकसितबन्धूककुसुमशोणितशोचिषः शोणितवृष्टयः। पर्यग्नीकुर्वाणा इव विनश्वरीं श्रियमविरलस्फुरत्स्फुलिङ्गाङ्गारोद्गारदग्धतारागणा गणशः पतन्तः प्रज्वलन्तो न व्यरंसिषुरुल्कादण्डाः प्रथममेव प्रतीहारीवापहारयन्ती प्रतिभवनं चामरातपत्रव्यजनानि परुषा बभ्राम वात्येति॥

इति श्रीमहाकविचक्रचूडामणिश्रीबाणभट्टविरचिते हर्षचरिते महाकाव्ये राजप्रतिज्ञा नाम षष्ठ उच्छ्वासः सम्पूर्णः॥ ६॥

स्तम्बं पक्कं वा। हरयो हयाः। अकाणीद्ध्वान। कौलेयकाः श्वानः। आर बभ्राम। कोटवी नग्ना स्त्री। शष्पं बालतृणं। बन्धूकं बन्धुजीवः। अपरिगताग्निं परिगताग्निं कुर्वाणाः। अग्नौ समन्तात्क्षिपन्तः। व्यरंसिषुर्निववृतिरे। इति श्रीशङ्करकविविरचिते हर्षचरितसंकेते राजप्रतिज्ञा नाम षष्ठ उच्छ्वासः समाप्तः॥ ६॥

---

१. °पल्लवाः B. K. D. Jambû ed. २. ताम्यन्तः A. B. D. ३. नवयवसं तत्र चेरुः B. नवयवयवसंतत्र चेरुः A. ४. ननृतुर्न मन्दं मन्दं मन्दिर° A. B. ५. निशि शिरजनीकर° B. ६. °तरलतर्जन्या दिवसमाटत् A. B. D. T. ७. कटकेषु कौटवी A. B. ८. °लोचनरुचिं A. B. ९. चेटीनां A. B. १०. °शोण° A. B. ११. प्रजलिताः A. B. D. १२. राजप्रतिज्ञा नाम षष्ठ उल्हासः A. B. D. T.

## ॥ सप्तम उच्छ्वासः प्रारभ्यते ॥

अङ्गनवेदी वसुधा कुल्या जलधिः स्थली च पातालम्।
वल्मीकश्च सुमेरुः कृतप्रतिज्ञस्य वीरस्य ॥ १ ॥

धृतधनुषि बाहुशालिनि शैला न नमन्ति यत्तदाश्चर्यं।
रिपुसंज्ञकेषु गणना कैव वराकेषु काकेषु ॥ २ ॥

अथ व्यतीतेषु च कषुचिद्दिवसेषु मौहूर्तिकमण्डलेन शतशः सुगणिते सुप्रशस्तेहानि दत्ते च चतसृणामपि दिशां विजययोग्ये दण्डयात्रालग्ने सलिलमोक्षविशारदैः शारदैरिवाम्भोधरैः कालधौतैः शातकौम्भैश्च कुम्भैः स्नात्वा विरचय्य परमया भक्त्या भगवतो नीललोहितस्यार्चामदर्चिषं हुत्वा प्रदक्षिणावर्त्तशिखाकलापमाशुशुक्षणिं दत्त्वा द्विजेभ्यो रत्नवन्ति राजतानि जातरूपमयानि च सहस्रशस्तिलपात्राणि कनकपत्रलतालङ्कृतशफशृंगाशिखरा गाश्चार्बुदशः समुपविश्य विततव्याघ्र-

अङ्गनेत्यादिनोद्योगितां सूचयति । शूरा हि स्वशौर्यमात्रेणावर्जितत्रिभुवनाधिपत्या नतु तेषां सामग्र्याप्रयोजनं । तथा चाह । कृतप्रयत्नस्य वीरस्य सर्वापि भूरङ्गनवेदीत्यनायासेनाक्रमणात् । अनेनेदमपि प्रतिक्षिप्तं कदाचित्कश्चिद्ब्रूयादभिमानान्मोहाद्वेत्थं हर्षेण प्रतिज्ञातमन्यथा गिरिगुहादौ पलायितं हर्षः कथं परिभवेत्कथं च बहुपालितामुर्वीमेको जयेदिति तन्न । यतोऽङ्गनवेदीत्यादि ॥ १ ॥ नन्वेवमपि तत्तुल्यो वीरो न भवेदित्याह धृतेत्यादि ॥ २ ॥

अथेत्यादौ भवनान्निर्जगामेति सम्बन्धः। मौहूर्तिका गणकाः। दण्डश्चतुरङ्गबलं। तस्य यात्रा गमनं तत्र। लग्नो मेषादिस्तस्मिन्। विशारदैः प्रवीणैः शुक्लैश्च। कालधौतैः कालवशेन धौतैश्च। शातकौम्भैः सौवर्णैः। नीललोहितोसितरक्तः। आशुशुक्षणिमग्निं। राजतानि रौप्यानि। जातरूपं सुवर्णं। पत्रलता पत्रभङ्गः। शफाः खुराः। अर्बुदं दशकोटयः। नृपासनं भद्रासनं। उक्तं च। नृपासनं च

---

१. A. B. K. Jambû ed. prefix ओं., अङ्गणवेदी A. B. २. जलधिस्थली A. B. D. ३. पुरुषस्य A. B. ४. शौर्यशालिनि A. B. ५. व्यतीतेषु कतिपयेषु दिवसेषु A. B. ६. शारदैरिवाम्बुदैश्चित्रैः A. B. D. T. ७. परमभक्त्या A. B. ८. प्रदक्षिणावर्तमानशिखाकलापमासितवर्त्तिं दत्त्वा A. B. ९. तदेव $C_2$. १०. कृष्णवत्पानमग्निं $C_1$. $C_2$.

चर्मणि भद्रासने विलिप्य प्रयमाविलिप्तायुधो निजयशोधवलेनाचरणतश्चन्दनेन शरीरं परिधाय राजहंसमिथुनलक्ष्मणी सदृशे दुगूले परमेश्वरचिह्नभूतां शशिकलामिव कल्पयित्वा सितकुसुममुण्डमालिकां शिरसि नीत्वा कर्णाभरणमरकतमयूखमिव कर्णपूरगोचरतां गोरोचनाच्छुरितमभिनवं दूर्वापल्लवं विन्यस्य सह शासनवलयेन गमनमङ्गलप्रतिसरं प्रकोष्ठे परिपूजितप्रहृष्टपुरोहितकरप्रकीर्यमाणशान्तिसलिलशीकराभ्युक्षितशिराः संप्रेष्य महार्हाणि वाहनानि बहलरत्नालोकलिप्तककुम्भि च भूषणानि भूभुजां संविभज्य क्लिष्टकार्पटिककुलपुत्रकलोकमोचितैः प्रसाददानैश्च विमुच्य बन्धनानि सकलानि नियुज्य तत्कालस्मरणस्फुरणेन कथितात्मानमिव चाष्टादशद्वीपजेतव्याधिकारे दक्षिणं भुजस्तम्भमहमहमिकया सेवकैरिव सुनिमित्तैरपि समग्रैरग्रतो भवद्भिः । प्रमुदितप्रजाजन्यमानजयशब्दकोलाहलो हिरण्यगर्भ इव ब्रह्माण्डात्कृतयुगकरणाय भवनान्निर्जगाम । नातिदूरे च नगरादुपसरस्वति निर्मिते महति तृणमये समुत्तम्भिततुङ्गतोरणे वेदीविनिहितपल्लवललामहेमकलशे बद्धवनमालाधाम्नि धवलध्वजमालिनि भ्रमच्छुक्लवाससि पठद्द्विजन्मनि मन्दिरे प्रस्थानमकरोत् । तत्रस्थस्य चास्य ग्रामाक्षपटलिकः सकलकरणिपरिकरः करोतु देवो दिवसग्रहणमद्यैवावन्ध्यशासनः शासनानामित्यभिधाय वृषाङ्कामभिनवघटितां हाटकमयीं मुद्रां समुपनिन्ये जग्राह च तां राजा । समुपस्थापिते च प्रथमत एव मृत्पिण्डे परिभ्रश्य करकमलादधोमुखी महीतले पपात मुद्रा मन्दाश्यानपङ्कपटले मृदुमृदि सरस्वतीतीरे परिस्फुटमव्यज्यन्त राजयो वर्णानां ।

तद्भद्रासनं सिंहासनं तु तद्धैममिति । परमेश्वरो राजा हरश्च । शासनवलयेन मुद्राकटकेन । प्रतिसरं कण्कणं । ललामं चिह्नं । ललामं पुच्छपुण्ड्राश्वभूषा प्राधान्यकेतुषु । वनमाला पुष्पपत्रप्रतियोजिता स्रक् । अक्षाणां भूतानां । पटले समूहे । नियुक्तोक्षपटालिकः । ग्रामाणामक्षपटलिकः ग्रामासपटालिकः । करणिर्लेख्यं कायस्थ इत्यन्ये । मुद्रा वालिका । मन्दाश्यानमीषच्छुष्कं । एकशासनमु-

१. चर्मनेन. K. २. धवलेनाचरणाचन्दनेन A. B. ३. A. B. T. omit शरीरं. ४. सदृशे दुकूले B. K. Jambû ed. ५. मुचितैः A. B. ६. तार्णे A. B. T. ७. तोरणवेदी A. B. ८. °वन्दनमालदाम्नि. A. B. ९. °करणपरिवारः A. B. D. १०. °वन्ध्ये A. B. ११. °पटलेन A. B. १२. अभज्यन्त A. B. D. १३. $C_1$. $C_2$. omit पटले. १४. मन्दाश्यानपच्छुष्कं $C_2$.

अमङ्गलाशङ्किनि च विषीदति परिजने नरपतिरकरोन्मनस्येतत् । अतत्त्वदर्शिन्यो हि भवन्त्यविदग्धानां धियस्तथाह्येकशासमुद्राङ्का भूर्भवतो भविष्यतीति निवेदितमपि निमित्तेनान्यथा गृह्णन्ति ग्राम्या इत्यभिनन्द्य च मनसा महानिमित्तं तत्सीरसहस्रसम्मितसीम्नां ग्रामाणां शतमदाद्द्विजेभ्यो निनाय च तत्र तं दिवसं प्रतिपन्नायां च शर्वर्यां संमानितसर्वराजलोकः सुष्वाप । अथ गलति तृतीये यामे सुप्तसमस्तसत्त्वनिःशब्दे दिक्कुञ्जरजृम्भमाणगम्भीरध्वनिरताड्यत प्रयाणपटहः । अग्रतः स्थित्वा च मुहूर्त्तमिव पुनः प्रयाणक्रोशसंख्यापकाः स्पष्टमष्टावदीयन्त प्रहाराः पटहे पटीयांसः । ततो रटत्पटहे नन्दन्नान्दीके गुञ्जत्कुञ्जे कूजत्काहले शब्दायमानशङ्खे क्रमोपचीयमानकटककलकले परिजनोत्थापनव्यापृतव्यवहारिणि द्रुतद्रुघनघातघट्यमानकोणिकाकीलकोलाहलकलितककुभि बलाधिकृतबाध्यमानपाटीपतिपेटके जनज्वलितोल्कासहस्रालोकलुप्यमानत्रियामातमसि यामचेटीचरणचलनोत्थाप्यमानकामिमिथुने कटुकटुकानिर्देशनश्यन्निद्रोन्मिषन्निषादिनि प्रबुद्धहास्तिकशून्यीक्रियमाणशय्यागृहे सुप्तोत्थिताश्वीयविधूयमानसटे रट-

द्रैवाङ्कं यस्याः सा । सीरं हलं । सम्मितं परिच्छिन्नं । अष्टक्रोशा अद्य ग न्तव्यमिति प्रायेण क्रोशसंख्यापकाः । तत इत्यादावेवंविधे प्रयाणसमये राजभिरापुपूरे राजद्वारमिति संबन्धः। नान्दी मङ्गलपटहः । गुञ्जासंज्ञः शंखभेदो यत्पृष्ठे जतुपरिकलितं भवति । सन्ना इति यस्य प्रसिद्धिः । शंखश्च मुण्डशंख इति प्रसिद्धः । द्रुघनोयस्ताडनभाण्डं । कोणिकाः पटकुट्यादिकेषु याः कीलिकाः । पाटी बहुपरिवारपुरुषगृहीतो निवासभूभागः कुलपुत्रकसमूह इत्यन्ये । पेटकं तत्समूहः । पाठीपतीति पाठे पाठीपतयः । प्रतिनियतस्वस्थानपरिरक्षिणः । उल्का दीपिका । यामचेटी प्रहरणजागरणनियुक्ता । तत्क्षणं चरणचलणं पादेषु स्पर्शः । कटुकानां हस्तिपकयोक्रोणां यः कटुकः रूक्षः । निर्देश आज्ञा । निषादिनां हस्त्यारोहाणाम् । हास्तिकं हस्तिसमूहः । अश्वीयमश्ववृंदं । क्षोणी-

१. °समतीतसीम्नां B. २. °सकल° A. B. ३. A. B. D. T omit this passage down to ततः ४. गुञ्जद्गुञ्जे क्वणत् A. B. D. ५. °कुकुभि A. M. B. ६. °मलनो° B. °तलो° A. ७. कटुककठ्ठानिर्देशनश्यति A. B. D. ८. पटह° $C_2$ Jambû ed. ९. °क्रूणां $C_2$.

[1]कटकमुखरखनित्रखन्यमानक्षोणीपाशे समुत्कील्यमानकीलशिञ्जानहिञ्जीरे [2]पनीयमाननिगडतालककलरवोत्तालतुरङ्गतरंग्यमाणखुरपटे लेशिकमुच्यमानमदस्यन्दिदन्तिसन्दानशृंखलाखनखननिनादनिर्भरभरितदशदिशि घासपूलिकप्रहारप्रमृष्टपांसुलकरिपृष्ठप्रसार्यमाणप्रस्फोटितप्रमृष्टचर्मणि गृहचिन्तकचेटकसंचेष्टयमानपटकुटीकाण्डपटमण्डपपरिवस्त्रावितानके कीलककलापापूर्यमाणचिपिटचर्मपुटे संभाण्डायमानभाण्डागारिणि भाण्डागारवहनवाह्यमानबहुनालीवाहिके निषादिनिश्चलानेकानीकपारोप्यमाणकोशकलशपीडापीडसंकटायमानसामन्तौकसि दूरगतदक्षदासेरकक्षिप्रप्रक्षिप्यमाणोपकरणसंभारभ्रियमाणदुष्टदन्तिनि तिर्यगानमज्जाघानिककरकृच्छ्राकृष्टलम्बमानपरतन्त्रतुन्दिलचुन्दीजनजनितजनहासे पीड्यमानशारशारिवरत्रागुणग्राहितगात्रविहारेण बृंहद्बहुबृहदुन्मदकरिणि करिघटाघटमानघण्टाटाङ्कारक्रियमाणकर्णज्वरे पृष्ठप्रतिष्ठाप्यमानकण्ठालककदर्थितकूजत्करभेभिजातराजपुत्रप्रेष्यमाणकुप्र-

पाशो भूम्या निबन्धनं । [11]समुत्कील्यमानान्युत्खन्यमानानि । हिञ्जीरं लौही शृंखला । निगडार्थं तालकं तालपत्रं निगडतालकं । लौह एवाश्वबन्धनविशेष इत्यन्ये । तरंग्यमाणाः कुटिलीक्रियमाणाः । लेशिका घासिकाः । सन्दानशृंखला बन्धनाद्याः । प्रस्फोटितं विपूरितं । प्रमृष्टं शोधितं । पटकुट्यादयः स्कन्धावारसरिणिकाभेदाः । तथा च पटैः कुटी सूक्ष्मगृहं । काण्डपटकं काण्डैः पटैश्च गृहं । परिवस्त्रा तिरस्करिणी । वितानको रक्तकः । चिपिटो ह्रस्वः । चर्मपुटश्चर्मप्रसेवकः। संभाण्डायमानो भाण्डानि समाचिन्वन् । भाण्डात्समाचयन इति णिच् । संवाह्यमानाः प्राप्यमानाः । नाली वाहिकः। करिणां घासग्रहणानियुक्तो हस्तिपको मेण्ठाख्यः । चुन्दी कुट्टिनी । शारिर्मञ्जरी हस्तिपर्याणमित्यर्थः । तत्स्थैः पीडयमानदामभिर्ग्राहितेन गात्रविहारेण देहकम्पेन बृंहन्तः शब्दायमानाः करिणो यत्र तस्मिन् । प्रसादेन वित्ताः प्रख्याताः पत्तयः पदातयः । वारो-

१. क्वणन् A. B. D. २. उपनीयमान° K. Jambû ed. ३. निगलतालकरणोत्तालतुरङ्गतरङ्ग्यमाणाग्रखुरे A. B. D. ४. °लाखलखलानिनाद° A. B. ५. बलीवाहिके A. B. D. K. ६. अनेकानेक° A. ७. °पेटापीड° A. B. ८. कुन्दीजनित°A. B. ९. °ग्राहितं गात्रविहार° K., °गात्रं विहार° A. B. १०. °कण्ठालाकदर्थित° A. B. ११. समुत्कीर्ण्यमाणान् $C_2$. समुत्कीर्यमाणान् $C_1$.

**युक्ताकुलकुलीनकुलपुत्रकलत्रवाहने गमनवेलाविप्रलब्धवारणाधोरणा-न्विष्यमाणनवसेवके प्रसादवित्तपत्तिनीयमाननरपतिवल्लभवारवाजिनि चारुचारभटसैन्यन्यस्यमाननासीरमण्डलाडम्बरस्थूलस्थासके स्थानपा-लपर्याणलम्बमानलवणकलायीकिंकिणीनालीसनाथसंकलिततलसारिके कुण्डलीकृतावरक्षणीजालजटिलवल्लभपालाश्वघटानिवेश्यमानशाखा-मृगे परिवर्धकाकृष्यमाणार्धजग्धप्राभातिकयोग्याशनप्रारोहके व्याक्रो-शीविजृम्भमाणघासिकाघोषे गमनसंभ्रमभ्रष्टभ्रमदुत्तुण्डतरुणतुरङ्गमत-न्यमानानेकमन्दुराविमर्दे सज्जीकृतकरेणुकारोहाह्वानसत्वरसुन्दरीदी-यमानमुखालेपने चलितमातङ्गतुरङ्गप्रधावितप्राकृतप्रातिवेशिकलोकलुं-**

वसरः । निवहावसरौ वार इत्यमरसिंहः । तत्र वाजिनो ये सेवकानां प्रत्य-वसरं विसृज्यन्ते । वेरेति पाठः । चारुचारभटसैन्येन त्रस्यमाना आत्मान एव क्रियमाणाः । नासीरेण कर्पूरेण । मण्डलाडम्बरार्घ्यः स्थूलाः स्थासकाश्चन्द्रका यत्र। अन्ये नासीरमग्रेसरमाहुः । स्थानपालानां पर्याणेषु लम्बमाना लवणक-लायी किङ्किणी । नालीसनाथा संकलिता तलसारिका यत्र । स्थानपाला अश्वपालाः । अश्वभाण्डागारिका इत्यन्ये । लवणकालायी मृगाकृतिरश्वानां दारुमयी क्रियते । किंकिण्यः सूक्ष्मघण्टाः । नाली प्रधानार्थं वैणवी नाडिरु-च्यते । तलसारिकोऽश्वमुखपट्टिकोर्णादिसूत्रमयी । उरः पट्टिकेत्यन्ये । कुण्डली-कृतैरवरक्षणीजालैर्जटिला वल्लभपाला यासु तास्वश्वघटासु निवेश्यमानाः शाखा-मृगा यासु । अवरक्षण्यश्वबन्धनरज्जुः । वल्लभपालोऽश्वपालः । अन्ये तु यो बल-वान् । महाकारो हयोपकरणं । यवसतण्डुलादि वहति स वल्लभपालोऽश्वपाल इत्याहुः । शाखामृगो वानरो रक्षार्थमश्वानां । परिवर्धकोऽश्वपाकः । प्रौढिको योग्याशनार्थं प्रसेवको यो बुक्कण इति प्रसिद्धः । व्याक्रोशी परस्पराह्वानं । उत्तुण्डा उत्प्रोथाः । मुखालेपनं सिन्दूरादिकरेणुकार्यमेव । प्रातिवेशिक-लोकाः प्रत्यासन्ननिवासा जनाः । निघासो भुक्तिशेषो घासः । चेलं वस्त्रं

---

१. मण्डना° A. B. २. °लवणकलाकिङ्किणी A. B. ३. °सकटिततलसारके A. B. D. ४. °वल्लव° A. B. ५. अर्धोपभुक्त [ °युक्त° B. ] प्राभातिकयुग्माशन° A. B. D. T. ६. °तुरगतन्यमाना° A. B. ७. प्रातिवेश्यलोक° A. B. ८. तरसारिका $C_1$. $C_2$.

ह्यमाननिर्घाससञ्चये [2]संचरच्चेलचक्राक्रान्तचक्रीवति चक्रचीत्कारिगं-
त्रीगणगृह्यमाणप्रहतवर्त्मन्य[3]काण्डोड्डीयमानभाण्डभरितानडुहि निकट-
घासलाभलुभ्यै[4]ल्लुम्बमानप्रथमप्रसार्यमाणसारसौरभेये प्रमुखप्रवर्त्यमा-
नमहासामन्तमहानसे पुरःप्रधावद्ध्वजवाहिनि प्रिय[5]शतोपलभ्यमानसं-
कटकुटीरकान्तरालनिःसरणे करिचरणचलितमठिकोत्थितलोकलोष्टह-
न्यमान[6]मेण्डाक्रियमाणासन्नसाक्षिणि संघट्टाविघट्टमानव्याघ्रपल्लीपलाय-
मानक्षुद्रकुटुम्बके [7]कलकलोपद्रवद्द्रवद्द्राविणबलीवर्दविद्राणवाणिजि पु-
रःसरदीपिकालोकाविरलायमानलोको[8]त्पीडाप्रास्थितान्तःपुरकारिणीक-
दम्बके हयारोहाहूयमानलम्बितशुनि सरभसचरणनिपतनानिश्चलगमन-
सुखायमान[9]खक्खटक्षत्रियस्तूयमानतुङ्गतङ्गणगुणे [10]स्रंस्तवेसराविसंवादि-
सीदद्दाक्षिणात्यसादिनि रजोजग्धजगति प्रयाणसमये प्रतिदिशमाग-
च्छद्भिर्गजवधूसमारूढैराधोरणैरूर्ध्वाध्रियमाणहेमपत्त्रभङ्गशारशार्ङ्गैर-
न्तरासनासीनान्तरङ्गगृहीतासिभिस्ताम्बूलिकाविधूयमानचामरपल्लवैः
पश्चिमासनिकार्पितभस्त्राभरणभिन्दि[11]पालपूलिकैः पत्त्रलताकुटिलकल-
धौत[12]नैलकपल्लवितपर्याणैः पर्याणपक्षकपरिक्षेपपाट्टिकाबन्धनि[13]श्चलपट्टोप-

बालको वा चेलं। चक्रीवान् गर्दभः, उष्ट्रो वा। गंत्री शकटिका। गृह्यमा-
णमधिष्ठीयमानं। प्रहतं क्षुण्णं। सर्वसेवितमित्यर्थः। लम्बमानो गर्दभदासो
वणिजां कर्मकरो वा। सारसौरभेयो बलवाननड्वान्। प्रमुखेऽग्रे। महानसं
सूपकारशाला। कुटीरं मठिका स्वल्पगृहं। मेण्ठो जागरिकः। व्याघ्रपल्ली
तृणकुटीभेदः। क्षुद्रमल्पं। कुटुम्बकं परिवारः। विद्राणाः सशोकाः। लं-
बितः पश्चात्खचितः। खक्खटा वृद्धाः। तुङ्गा उच्चाः। तङ्गणोदेशस्तद्देशजोऽप्यश्व-
स्तंगणः। विसंवादो परिशीलनं। दाक्षिणापथे वेसरा न सन्तीत्यदृष्टदेशाः।
सादिनोऽश्वारोहाः। भस्त्राभरणं तूणभेदः। भिन्दिपालः शरभेदस्तोमर इत्यन्ये।
पक्षकः प्रान्तः पार्श्वं वा। परिक्षेपो वेष्टनं। पादफलिका उभयपार्श्वयोः पर्याणे

---

१. निर्वाससंचये A. B. D. २. संचलच्चेल° A. B. ३. अकाण्डदीयमान° K. Jambû ed. ४. °लुभ्यल्लवन° A. B. ५. शतालापलभ्यमान° A. B. ६. °पण्ठ° A. B. T. ७. कलकपोलद्रुतद्रवत् A. B. ८. उत्पीडन° A. B. ९. °खरखट° A. B. १०. त्रस्तवेसराविसंवादसीदद् A. B. T. ११. °माल° A. B. १२. °निलकपल्लवितपर्याणपक्षकपरिशोपि पट्टिका° A. B. १३. °निश्चत° A. T.

धानस्थि[1]रावधानैः प्रचलपा[2]दफलिकास्फालनस्फायमानपदबन्धमणिशि-लाश[3]ब्दैरुच्चित्रनेत्र[4]सुकुमारस्व[5]स्थानस्थगितजङ्घाकाण्डैश्च कार्दमिकपट-कल्मापितपि[6]शङ्गपिङ्गैरलि[7]नीलमसृणसतुलासमुत्पादितसितसमायोग-परभागैश्चावदातदेहवर्णविराजमानरा[8]जावर्त्तमेचकैः कञ्चुकैश्चापचित-चीनचोलकैश्च ता[9]रमुक्तस्तबकितस्तवरकवारवाणैश्च नानाकषायकर्बुर-कूर्[10]पासकैश्च शुकपिच्छच्छायाच्छादनकैश्च व्या[11]यामोल्लसपार्श्वप्रदेशप्र[12]वि-ष्टचारुशस्तैश्च गतिवशवेल्लितहारलताग[13]लल्लोलकुण्डलोन्मोचनप्रधावि-तपरिजनैश्च चामीकरपत्राङ्कुरकर्णपूरकवि[14]घट्टमानवाचाल[15]वालपाशैश्चो-

या क्रियते । आगुल्फं पादत्राणमित्यन्ये । आस्फालनं चालनं । स्फायमानो वर्धमानः । पादबन्धः पादकटकः । नेत्रं पटविशेषः । स्वस्थानं स्वस्थानेति यस्याः प्रसिद्धिः । कार्दमिकं कर्दमेन रक्तं । कल्माषिताः शबलिताः । पिशङ्गा लोहिताः । पिङ्गा जन्धिका । अन्ये जंघालेत्याहुः । सतुला अर्धजन्धिका इत्यन्ये । अर्धजङ्घालेत्याहुः । समायोगो व्यापृतकेषु प्रसिद्धः । परभागो वर्णस्य वर्णा-तरेण शोभातिशयः । राजावर्त्तः कृष्णपाषाणः । मेचको बर्हिकण्ठवर्णः । कञ्चुको वारबाणोस्त्री । अपचितं परिहितं पूजितं वा । चायृ पूजानिशासनयो-रित्यस्यापचितश्चेति निपानाद्रूपं । ताराः शुद्धाः । स्तवकिताः संजातपुष्पनिकुरुं-बाकाराः । स्तवरको वस्त्रभेदः । वारबाणः कंचुकः । कर्बुरः कपोतकण्ठवर्णः । कुर्पसकाश्चोलकाः । पिच्छानि पक्षाः । आच्छादनमुत्तरीयं । उल्लसस्तनूकृतः । शस्तं पट्टिका डोरः कटीसूत्रमित्यर्थः । वेल्लिताश्चाकिताः । कर्णाभरणभेदो बालपाशः । कोमलं संच्छायं । अन्तरितमाच्छादितं । खोलः शिरस्त्रं । मायू-

---

१. अवस्थानैः A. B. २. °पाटफालिकास्फलन° A. B. D. ३. °शष्टैः A. B. T. ४. सुकुमारसुस्थगित° A. B. ५. स्वथगणस्थगित° K. K. $K_1$. ६. °पिशङ्गपिङ्गैश्च A. B., °पिशाङ्गलिताङ्गैः $K_2$ Jambû ed. ७. अलिनीमसृणसठला [ कुतला B. ] A. ८. राजपट्टकमेचककञ्चुकैश्च A. B. ९. तारमुक्तास्तबकितसुंदरसलकवार° A, तारमुक्ता-स्तबकिततररस्तकवार° B. १०. °कूर्पासिकैश्च A. B.; after this stands the marginal gloss in A. मणिविशेषः ११. व्यायामोशिम° K. $K_1$ १२. प्रविशचारुवस्तबन्धप्र-विभक्तत्रिवौश्च A. D. १३. °लगल्° A. B. १४. °विघट्टन° A. B. १५. °चाल° A. B.

ष्णीषपट्टविघट्टघकर्णोत्पलनालैश्च कुंकुमरागकोमलोत्तरीयान्तरितोत्त-माङ्गैश्च चूडामणिखण्डखचितक्षौमखोलैश्च मायूरातपत्रायमाणशेखरष-ट्पदपटलैश्च[2] मार्गागतशारीरिकशारिवाहवेगदण्डैः पुरश्चश्चचामरकि-र्मीरकार्दरङ्गचर्ममण्डलमण्डनोड्डीयमानचट्टुलडामरचारभटभरितभुव-नान्तरालैरास्कन्दत्काम्बोजवाजिशतशिंजानजातरूपायानरवमुखरि-तदिङ्मुखैश्च निर्दयप्रहतलम्बापटहशतपटुरवबाधिरीकृतश्रवणविवरैरु-द्घोष्यमाणनामभिरुन्मुखपादातप्रतिपाल्यमानाज्ञापातै राजभिरापुपूरे राजद्वारम् ॥

उदिते च भगवति दिनकृति राज्ञः समायोगग्रहणसमयशंसी सस्वान संज्ञाशंखो मुहुर्मुहुः । अथ च न चिरादिव प्रथमप्रयाण एव दिग्विजयाय दिग्गजसमागममिव गमनविलोलकर्णतालदोलाविलासैः कुर्वाणया करेणुकया सिद्धयात्रयोह्यमानो वैदूर्यदण्डविकटेनोपरि प्र-त्युप्तपद्मरागखण्डमयूखखचिततया सूर्योदयदर्शनकोपादिव लोहिताय-तया भ्रियमाणेन मङ्गलातपत्रेण कदलीगर्भाभ्यधिकम्रदिम्ना नवनेत्रनि-र्मितेन द्वितीय इव भोगिनामधिपतिरङ्गलग्नेन कञ्चुकेनामृतमथनादिवस इव क्षीरोदफेनपटलधवलाम्बरवाही बाल एव पारिजातपादप इवाखं-डलभूमिमारूढो विधूयमानधवलचामरमरुद्भिधूतनकर्णपूरकुसुममञ्जरी-रजसा सकलभुवनवशीकरणचूर्णेनेव दिशश्छुरयन् । अभिमुखचूडा-

रातपत्रायमानं । वेगदण्डस्तरुणो हस्ती । किर्मीराणि शबलानि । कार्दरङ्ग-काणि कार्दरङ्गदेशोद्भवानि । बहुसुवर्णसूत्ररचितानि चर्माणि स्फोटकाः । स्निग्धवर्णमांसस्फाराणि कार्दरङ्गचर्माणि । डामरा उद्भटाः । चारभटाः शूराः । आस्कन्दन्तश्चलन्तः । काम्बोजा वाह्लीकदेशजाः । आयानमश्वभूषणं । लम्बा-पटहाः पटहभेदास्तायिका इति प्रसिद्धाः । संज्ञा सङ्केतः । अथेत्यादौ दिग्वि-जयाय निर्जगाम नरपतिरिति सम्बन्धः । सिद्धयात्रेति हस्तिनीनां प्रत्यस्तो निखातः । मंगलातपत्रेण कंचुकेन । ननूत्प्रेक्ष्यते द्वितोय इव भोगिनामीश इति योजना । यद्वा मंगलातपत्रेणेतीत्थंभूतलक्षणे तृतीया । अम्बरं वस्त्रं न-

१. मयूरपत्रायमाण° K, K$_1$. Jambû ed. २. °पट्टलैः B. ३. कार्मरङ्ग° A. B. ४. अन्तरैः K. K$_1$. Jambu ed. ५. प्रहतलंपापटह° A. B. ६. अथ न चिरादिव A. B. ७. दिग्गद° B. ८. °प्रादिम्ना A, मृदिम्ना B.

मणिघटमानपाटलप्रतिबिम्बमुदयमानं सवितारमपि पिबन्निव तेजसा बहलताम्बूलसिन्दूरच्छुरितया विलभमान इव द्वीपान्तराण्योष्ठमुद्रयानुरागस्य स्फुरन्महाहारमरीचिचक्रवालानि चामराणीव दिशोपि ग्राहयन् राजकेक्षणोत्क्षिप्तत्रिभागया त्रीनपि लोकान्करदानायाज्ञापयन्निव सविभ्रमं भ्रूलतया द्राघीयसा बाहुप्राकारेण परिक्षिपन्निव रिरक्षया सप्तापि सागरमहाखातानाखिलमिव च क्षीरोदमाधुर्यमादायोद्गतया लक्ष्म्या समुपगूढो गाढममृतमय इव पीयमानः कुतूहलोत्तालकटकलोकलोचनसहस्रैः स्नेहार्द्रेषु राज्ञां हृदयेषु गुणगौरवेण मज्जन्निव मज्जामपि लिम्पन्निव सौभाग्यद्रवेण द्रष्टृणाममरपतिरिवाग्रजवधकल्कप्रक्षालनाकुलः पृथुरिव पृथिवीपरिशोधनावधानसंकलितसकलमहीभृत्समुत्सारणः पुरःसरैरालोककारकैः सहस्रसंख्यैरर्क इव किरणैरधिकारचातुर्यचञ्चलचरणैर्व्यवस्थास्थापननिष्ठुरैर्भयपलायमानलोकोत्पीडान्तरिता दृशापि दिशो ग्राहयद्भिरिव चलितकदलिकासंपातपीतप्रचारं पवनमपि विनये स्थापयद्भिरिव द्रुततरचरणोद्धूतधूलिपटलावधूतान्दिनकरकिरणानप्युत्सारयद्भिरिव कनकवेत्रलतालोकाविक्षिप्यमाणं दिनमपि दूरीकुर्वद्भिरिव दण्डिभिरितस्ततः समुत्सार्यमाणजनसमूहो निर्जगाम नरपतिः। अवनमति च विनयनमितवपुषि भयचकितमनसि चलनशिथिलमणिकनकमुकुटकिरणनिकरपरिकररुचिरशिरसि विलुलितकुसुमशेखररजसि राजचक्रे प्रभामुचा चूडामणीना-

भश्च। विलभमानोर्थिसात्कुर्वन्। मुद्रया हि ससिंदूरया विलभ्यते। परिक्षिपन्वेष्टयन्। अग्रजो ज्येष्ठो राज्यवर्धनो द्विजश्च। पुरा ब्रह्मणः किल सुतोमुरपक्षपाती त्रिशिरास्तद्भ्राता च वृत्रस्तौ तपस्यन्तौ शक्रेण हताविति। महीभृतो राजानः पर्वताश्च। पृथुना ह्यद्रयो भूमिमास्तीर्य स्थिताश्चापकोट्या समुत्सार्यन्ते। प्रक्षिप्ता लोका इत्येवं ये वदन्ति ते आलोककारकास्तैरन्यत्रालोकः। प्रकाशः पुरःसरैः सहस्रसंख्यैरिति च साधारणं दिशो ग्राहयद्भिः

१. पिबन्निव *Secunda manu* corrected in A. २. °बालश्चामराणीव A. B. D.
३. परिक्षिपयन्निव रिरक्षिपया A. B. T. ४. कुतूहलोत्पान° K. ५. ज्ञानमपि K.
६. °संकल्पित° A. B. ७. अर्ककिरणैरिव A. B. ८. दृशापि दृशो दिशः A. B. T.
९. °संपाद° B. १०. चूडामणीनामवाञ्चोदञ्चस्तिर्यञ्चश्च A. B.

मवाञ्चास्तिर्यञ्चोदञ्चश्च चञ्चतो मरीचयश्चा[१]पराशय इव सुशकुनसं-
पादनाय चेलुर्मेघायमानरेणुमेदुरं मन्दिराशिखण्डिन इव ख[२]मुड्डीयन्तः
कोमलकल्पपादपपल्लवै[३]र्वन्दनमालाकलापा इवाबध्यन्त दिग्द्वारेषु दि-
क्पालैः प्रणम्यमानश्च नेत्रत्रिभागैश्च कटाक्षैश्च समग्रेक्षितैर्भ्रूवञ्चितै-
श्चार्धस्मितैश्च परिहासैश्च छेकालापैश्च कुशलप्रश्नैश्च प्रतिप्रणामैश्चो-
न्मत्तभ्रूवीक्षितैश्चाज्ञादानैश्चा[४]क्रीणन्निव मानमयान्प्राणान्प्रणयदानैः प्र-
वीराणां वीरो यथानुरूपं सान्त्वबभाज राजकम् । अथ प्रस्थिते राजनि
बहलकलकलत्रस्तदिङ्नागशू[५]त्काररव इवेतस्ततस्तस्तार तारतरस्तू-
र्याणां प्रतिध्वनिराशातटेषु । दि[६]ग्गजेभ्यः प्रकुपितानां त्रिप्रस्नुतानां
करिणां मदप्रस्रवणवीथीभिरलिकुलका[७]लीभिः कालिन्दीवेणिकासह-
स्राणीव सस्यन्दिरे। सिन्दूररेणुराशिभिररुणायमानबिम्बे रवावर्[८]स्तमय-
समयं शशाङ्किरे शकुनयः करिणां षट्पदकुलकोलाहलमांसलैः कर्णता-
लनिःस्वनैस्तिरोदधिरे दुन्दुभिध्वनयः। दोधूयमानश्च सचराचरमाच-
चाम चामरसङ्घातो विश्वमश्वीयश्वासनि[९]क्षिप्तैः शिश्विन्दे सितासिन्[१०]दुवा-
रदामशुचिभिर्निरन्तरमन्तरिक्षं फेनपिण्डैः पिण्डी[११]भूततगरस्तबकपाण्डु-
राणि पपुरिव परस्परसंघट्टनष्टा[१२]र्धदिशि दिवसमुच्चचामीकरदण्डान्या-
तपत्रवनानि रजोरजनीनिमीलितोपि मुकुटमणिशिलावलीबालातपेन
विचकास वासरः। राजतैर्हिरण्मयैश्च मण्डनकभाण्डमण्डलैर्ह्लादमानैर्ह-
रितीकृतापरा[१३]ह्लादा हरितो बधिरतां दधुररिप्रतापानलनिर्मूलनायेव
मदोष्मशीकरैः शिशीकिरे करिणः ककुभां चक्रं। चक्षुषामुन्मेषं मुमुषु-
[१४]स्तडिच्चञ्चलानि चूडामणीनामर्चींषि स्वयमपि विसि[१५]स्मये बलानां

पर्यंतेषु च विसर्जयद्भिः। उदंच ऊर्ध्वप्रसरिणः। चापराशय इवेत्याद्युत्प्रेक्षा-
त्रयं समीचीनं। [१६]उड्डीयंतः प्रसृताः। कटाक्षैरपांगदृष्टैः। भ्रूवञ्चितैर्भ्रूचालितैः।
भ्रूवाञ्चितैरिति पाठे उन्नतैकभ्रूक्षिप्तैरित्यर्थः। छेकालापैर्वक्रोक्तिभिः। छेका-
न्तरान्तरा वा। तस्तारेति विस्तृतोभवत्। त्रिप्रश्नुतानां त्रिषु गण्डादिषु मदमुचां।

---

१. चापराशयः A. B. २. खमुद्डीयन्तः B. K. ३. चन्दन A. ४. क्रीडाणन्निव B. ५. चीत्काररवः A. B. D. ६. आशागजेभ्यः परिकुपितानां A. B. T. ७. *Secunda manu* corrected to पालीभिः in A. ८. अस्तसमयमाशशङ्किरे A. B. D; रवि-स्तमयशमयं K. ९. °विक्षिप्तैः A. B. १०. सिन्धुवार° $K_1$, Jambûed. ११. पिण्डी-तगर° A. B. T. १२. °दिशं A. B. १३. हरीणां हृतापरह्लादाः A. B. D. १४. तडि-त्तान्द्रिराणि A. B. D. १५. विसिस्मिरे $K_1$, Jambû ed. १६. उद्डीयन्तः $C_1$. $C_2$.

भूपालः सर्वतो विक्षिप्तचक्षुश्चाद्राक्षीत् । आवासस्थानसकाशात्प्रतिष्ठमानं स्कन्धावारमधोक्षजकुक्षेरिव युगादौ निष्पतन्तं जीवलोकमम्भोनिधिमिव कुम्भभुवो वदनात्प्लावितभुवनमु[1]द्वमन्तमर्जुनबाहुदण्डसहस्रसंपिण्डितोन्मुक्तमिव सहस्रधा प्रवर्त्तमानं प्रवाहं नर्मदायाः प्र[2]सरत तात भाव किं विलम्बसे [3]लङ्गति तुरङ्गमः भद्र भग्नचरण इव सञ्चरसि यावदमी पु[4]रःसराः सरभसमुपरि पतन्ति किं वाहयसि किमुष्ट्रं न पश्यसि निर्दय निःशूकशिशुकं शयानं [5]वत्स रामिल रजसि यथा न नश्यसि तथा समीपे भव किं न पश्यसि [6]गलति सक्तुप्रसेवकः किमेवमि[7]त्वर त्वरसे सौरभेय [8]सरणिमपहाय हयमध्यं धावसि धीवरि विशसि [9]गन्तुकामा मातङ्गि मातङ्गमार्गमङ्ग गलति तिरश्चीना चणकगोणी गणयसि न मामारटन्त[10]मवटमवटेनावतरसि सुखमास्स्व [11]स्वैरिणि सौवीरक कुम्भो भग्नो मन्थरक खादिष्यसि गतः [12]संनिक्षुमुक्षाणं [13]प्रसारय कियच्चिरमुच्चिनोषि चेट बदराणि दूरं गंतव्यं किमद्यैव विद्रासि द्रोणक द्राघीयसी दण्डयात्रा विनैकेन निष्ठुरकेन नि[14]ष्क्रेयमस्माकमग्रतः पन्था[15]ः स्थपुटकः स्थावरक यथा न भनक्षि फाणितस्थालीं गरीयाङ्गण्डकतण्डुलभा-

शकुनयोत्र चक्रवाकाः । मण्डनकमायानं । स्याद्भाण्डमश्वाभरणे । अधोक्षजो हरिः । कुम्भभुवोगस्त्यस्य । प्लावितभुवनं स्कन्धावारं नर्मदाप्रवाहं च । पूर्वं कार्त्तवीर्येणान्तःपुरैः सह रेवातीरे विहरता तत्स्रोतो भुजसहस्रेणोभयतो वृत्वा त्यक्तमभूत् । प्रसरतेत्येवमादिप्रवर्त्तमानानेकसंकापनामिति स्कन्धावारविशेषणं । तातेति भावेति च मान्यामन्त्रणं । कसति गलति । प्रसेवको भस्त्राभरणमित्यन्ये । इत्वरो गमनशीलः । सौरभेयो दान्तः । अङ्गेति इष्टामन्त्रणं । अवटं श्वभ्रं । अवटेनामार्गेण । स्वैरिणि स्वतंत्रे । स्वादीरीरिणोरिति वृद्धिः । सौवीरकं कांजिकं । विद्रासि लंघसि । निष्ठा श्लेषः । स्थपुटो निम्नोन्नतो विषम इत्यन्ये । फाणितमिक्षुविकारः । गुड इति प्रसिद्धः । दम्यो दान्तः । मापाणां भवनं

---

१. उद्भ्रमन्तं K. उद्वसन्तं K, Jambû ed. २. प्रसर A. B. ३. लगति तुरङ्गकः A. B. D. ४. पुरःसराः संचरन्ति सरभवसमुपरि किं वाहं वाहयसि । अक्षि न पश्यसि निःशूकशिशुकं A. B. D. T. ५. यावत्सरामि बहल वल रजसि A. B. D. ६. लसति A. B. T. ७. इत्वरि A. ८. सरणीमपहाय A. B. T. ९. मर्तुकामा A. B. D. T. १०. अवटनतटेना° A. B. D. ११. स्वैरिणि भग्नः सौवीरकुम्भः A. B. D. १२. सन्निक्षूक्षाणं A. B. D. १३. प्रसादय K. १४. निष्ठेयं A. B. D. १५. पत्ताः K.

रको न निर्वहति[1] दम्यो दासक[2] माषीणादमुतो द्राग्दात्रेण मुखघासपूलकं लुनीहि को जानाति यवसगतं[3] गतानां धव वारय बलीवृन्दा[4]न्वाहीकरक्षितं क्षेत्रमिदं लम्बिता शकटी शाकरं धुरन्धरं धुरि धवलं नियुंक्ष्व यक्षपालित प्रमदाः पिनक्ष्यक्षिणी ते किं स्फुटिते हत हस्तिपको नेदीयसि करीकरदण्डे समदः[5] संमर्दे कर्दमे स्खलसि[6] भ्रातर्भाव विधुरे बन्धुरुद्धर पङ्कादनड्वाहमित एहि माणवक[7] घनेभघटासंघट्टसंकटे नास्ति निःसरणसरणिरित्येवमादिप्रवर्त्तमानानेकसंलापं[8] क्वचित्स्वेच्छामृदितोद्दामसस्यघासविघससुखसंपन्नान्नपुष्टैः[9] केलिकलैः किलिकिलायमानैर्मेण्ठवण्ठवठरलम्बनलेशिक[10]लुण्ठक[11]चेटशाटचण्डालम[12]ण्डलैराण्डीरैः स्तूयमानं क्वचिदसहायैः क्लेशार्जितकुग्रामकुटुम्बिसंपा-

क्षेत्रं। धान्यानां भवने क्षेत्रे खन्। किंचिन्मात्रं बुभुक्षानिवृत्तये। घासो मुखघासः। यवसं घासः। उक्तं च। शष्पं बालतृणं घासो यवसमिति। धवः पुरुषः। वाहीकः काष्ठकः परिपालक इत्यन्ये। गोरक्षक इति चान्ये। लम्बिता मार्गमाक्रांतुं न शक्नोति। शाकरं शूरं तरुणं वा। धवकं महोक्षं नेदीयसि करदंडेन्यहस्तसंबन्धिनि सति। करीसमदोर्थात्संपन्नः। स्वेच्छयानायासेन। मृदितानि क्षुण्णानि। उद्दामानि प्रभूतानि सस्यानि। तथा घासो यवसं। तथा विघसो भृत्याद्युपयुक्तशेषमन्नं परस्परलुंठनं वा। तैः सुखेन संपन्नं यदन्नं तेन सुपुष्टैः। केलिकलाः प्रहसना बहुभाषिणो वा। मेण्ठा हस्तिजागरिकाः। वण्ठा अकृतविवाहास्तरुणाः। ये दण्डमादाय हस्तिनां दर्पमाकर्षयन्ति पत्तय इत्यन्ये। वठरा मूर्खाः। लम्बना गर्दभदासाः। लेशिका जनपरिचारकाः। लुण्ठकाश्चौराः। चेटा दासाः। शाटा धूर्त्ताः। चण्डाला अश्वपालाः। आंडीराः प्रगल्भाः। यद्वा राण्डीरा रण्डापुत्राः। संपादितो दत्तः। सीदन्नसमर्थो

---

१. निर्वाहयति A. B. D. T. २. दामक द्राग्दात्रेण तृणघासपूलकं A. B. D. ३. वयस्यगतिं A. B. T. ४. बलीवर्दान्. K. ५. करीकरचण्डसमदः A. B. ६. लससि A. B. T. ७. माणव घनेनघटासंघट्टे A. B. D. ८. निस्तरणामिति K. $K_1$. ९. °संपन्नान्नतुष्टैः A. B. D. १०. °लिशिक° A. B. T. ११. °लुण्ठाकचेटचाट° A. B. T. १२. °मण्डलैस्तण्डीरैस्तूयमानं A. B. D.

दितसीदत्सौरभेयशम्बलसंवाहनायासावेगागतसंयोगैः[1] स्वयं गृहीतगृहो[2]पस्करणैरियमेका कथंचिद्दण्डयात्रा [3]यातु यातु पातालतलं तृष्णाभूतेरभवनिर्भवतु शिवं सेवां करोतु स्वस्ति सर्वदुःखकूटाय कटकायेति दुर्विधवृद्धकुलपुत्रकैर्निन्द्यमानं क्वचिदतितीक्ष्णसलिलस्रोतःपातिनौगतैरिव ग्रथितैरिवच पंक्तिभूतैर्जनैरतिद्रुतं द्रवद्भिः कृष्णकठिनस्कन्धगु[4]रुलगुडैर्गृहीतसौवर्णपादपीठीपर्यङ्ककरङ्ककलशपतद्ग्रहावग्राहैः प्रत्यासन्नपार्थिवोपकरणग्रहणगर्वदुर्वारैः सर्वमेव बहिः कारयद्भिर्भूपतिभृतकभारिकैर्महानसो[5]पकरणवाहिभिश्च बद्धवराहवध्रवाध्रीणसैर्लम्बमानहरिण[6]चटुकचटकजूटजटिलैः शि[7]शुशशकशाकपत्रवेत्राग्रसंग्रहसंग्राहिभिः शुक्लकर्पटप्रावृतमुखैकदेशदत्तार्द्रमुद्रागुप्तगोरसभाण्डैर्[8]स्तलकतापकतापिकाहस्तकताम्रचरुककटाहसंकटपिटकभारिकैः समुत्सार्यमाणपुरोवर्त्तिजनं। क्वचित्क्लेशोस्माकमुपरि फलकालेन्य एव विटाः [9]समुपस्था-

यः सौरभेयस्तेन [10]शम्बलसंवाहनाय य आयासो योगस्तेन गतसंयोगैरुत्पन्नचित्तक्षोभैरिति समासः। अभवनिरित्याक्रोशे नञ्यनिः। दुर्विधा दरिद्राः। वृद्धाः स्थविराः। कुलपुत्राः कुलक्रमागताः सेवकास्तैर्निन्द्यमानमिति स्कन्धावारविशेषणम्। क्वचिच्च भूभृद्भारिकैर्महानसोपकरणवाहिभिश्च समुत्सार्यमाणपुरोवर्त्तिजनमिति स्कन्धावारविशेषणं। अतितीक्ष्णं वेगवत्। ग्रंथिर्विद्यते येषां तैः। करंकस्ताबूलाधारः पतद्ग्रहो निष्ठीव पात्रं। अवग्राहः स्नानद्रोणी। बहिःकारयद्भिर्निरस्यद्भिः। [11]महानसा सूपकारशाला। वराहवध्रं सूकरचर्म सूकरपाठेति प्रसिद्धं। वाध्रीणसा यज्ञियाश्छागाविशेषाः। हरिणानां च चटुकाः पूर्वभागाः। जूटः संघः। वेत्राग्राणि वंशांकुराः। तलकोग्निशकटिका। तापकोपूपादिकरणस्थानं। तापिका काकपालिका यत्र तैलादिना भक्ष्याः पच्यन्ते। हस्तकः शूलं। पि[12]टका भाण्डानि। विटा धूर्त्ताः। समुपस्थास्यन्ति ढौक-

१. संवाहनायासयोगागतसंवेगैः A. B. D. २. उपकरणैः A. B. T. ३. पततु A. B. ४. °गुरुगड्डुलैः A. B. गुरुगण्डुलैः K. ५. उपकरणग्रहण° A. B. ६. °बटुक° A. B. D. ७. शुष्कशशक° A. B. D. ८. तलकतपकतपहस्तकतापिकाताम्र° A. B. D, T. ९. समुत्थास्यन्ते A. B. १०. यश्छम्बलंसवाहनाय य आयासयोगस्तेन C, ११. महानसं C. १२. पिटानि C.

स्यन्त इति मुखरैः पदे पदे पततां दुर्बलबलीवृन्दानां[1] नियुक्तैः स्खलनै[2] खलचेटकैः खेद्यमानासंविभक्तकुलपुत्रकलोकं क्वचिन्नरपतिदर्शनकुतूहलादुभयतः प्रजवितप्रधावितग्रामेयकजनपदं मार्गग्रामनिर्गतैराग्रहारिकजाल्मैश्च पुरःसरजरन्महत्तरोत्तम्भिताम्भःकुम्भैरुपायनीकृतदधिगुडखण्डकुसुमकरण्डकैर्धनघटितपेटकैः संरभसं समुत्सर्पद्भिः प्रकुपितप्रचण्डदण्डिवित्रासनाविद्रुतैर्दूरगतैरपि स्खलद्भिरपि पतद्भिरपि नरेन्द्रनिहितदृष्टिभिरसतोपि पूर्वभोगपतिदोषानुद्भावयद्भिरतिक्रान्तायुक्तकशतानि च शंसद्भिश्चिरन्तनचाटापराधांश्चाभिदधानैरुद्धूयमानधूलिपटलं क्वचिदेकान्तप्रवृत्ताश्ववारचक्रचर्यमाणागामिगौडविमृग्यमाणसस्यसंरक्षणमपरैरादिष्टपरिपालकपुरुषपरितुष्टैर्धर्मः प्रत्यक्षो देव इति स्तुतीरातन्वद्भिरपरैर्लूयमाननिष्पन्नसस्यप्रकटितविषादैः क्षेत्रशुचा सकुटुम्बकैरेव निर्गतैः प्ररूढप्राणच्छेदैः परितापत्याजितभयैः क राजा कुतो राजा कीदृशो वा राजेति प्रारब्धनरनाथनिन्दं शशकैश्च कैश्चित्पदे पदे प्रजविप्रचण्डदण्डपाणिपेटकानुबद्धैर्गिरिगुडकैरिव हन्यमानैरितस्ततः संचरद्भिरपरैर्युगपत्परापतितमहाजनग्रस्तैस्तिलशो विलुप्यमानैरन्यैरनेकजन्तुजङ्घान्तरालनिःसरणकुशलिभिः कुटिलिकाव्यंसितसादिबहु-

यिष्यन्ति। पततां स्खलतां। स्खलने प्रेरणे। नियुक्तैः स्थापितैः। असंविभक्ता अकृतविभागाः। ग्रामे भवा ग्रामेयकाः। ग्रामाद्यन्खञौः। आग्रहारिकजाल्मैर्मृग्यमाणसस्यसंरक्षणामिति संगतिः। जाल्मा मूर्खाः। महत्तरो मुख्यः। उत्तंभिता ऊर्ध्वीकृताः। अंभःकुंभा जलपूर्णकलशाः। खण्ड इक्षुविकारः। समुत्सर्पद्भिर्ढौकमानैः। वित्रासनं भयोत्पादनम्। आयुक्तका व्यापृतकाः। चाटा धूर्ताः। अपरैराग्रहारिकजाल्मैरुपलक्षितं। अपरैः प्रारब्धनरनाथनिन्दमिति योजना। निष्पन्नानि पक्वानि। सकुटुंबैः सदारैः। शशकैः कृतकलकलमित्यन्वयः। अनुबद्धा अनुसृताः। गिरिगुडकैर्लोष्टैः। कुटिलिकयैः वक्रगमनेन।

---

१. वर्दानां A. B. T. २. खेटान A. B. D. खेटने खेटचटकैः K. ३. उत्तम्भितान्नः B. ४. °कुण्ड° A. B. ५. सरभसमुपसर्पद्भिः A. B. D., उत्सर्पिभिः K. Jambû ed. ६. उद्घोषयद्भिः A. B. D. ७. अभिदधानैर्मृग्यमाणसस्यसंरक्षणं A. B. D. ८. देवाः K. $K_1$. ९. °दर्शित° A.B. D. T. १०. 'छेदिपीडापरित्याजित' A. B. D. ११. अनुबन्धैः K. $K_2$. १२. विशसनं $C_1$.

श्वभिः पतल्लोष्टलगुडकोणकुठारकीलकुद्दालखनित्रदात्रयष्टिवृष्टिभिरपि निःसरद्भिरायुधो बलात्कृतकलकलमन्यत्र संघशो घासिकैर्बुसधूलिधूसरितघासजालजालकितजघनैश्च पुराणपर्याणैकदेशदोलायमानदात्रैश्च शीर्णोर्णाशकलशिथिलमलिनमलकुथैश्च प्रभुप्रसादीकृतपाटितपटच्चरचलच्चोलकधारिभिश्च धावमानैरुद्धूयमानधूलिपटलं कचिदेकान्तप्रवृत्ताश्ववारचक्रचर्व्यमाणागामिगौडविग्रहं कचित्पङ्किलप्रदेशपूरणादेशाकुलसकललोकलूयमानतृणपूलकं कचित्तलवर्त्तिवेत्रिवेत्रवित्रास्यमानशाखिशिखरगतविक्रोशद्विवादिब्राह्मणं कचित्कुलुण्ठकपाशविवेष्ट्यमानग्रामीणकग्रामाकृष्टकौलेयकं कचिदन्योन्यविभावस्पर्धोद्धुरराजपुत्रवाह्यमानवाजिसंघट्टमंडितमनेकवृत्तान्ततया कौतुकजननं प्रलयजलधिमिव जगद्ग्रासग्रहणाय प्रवृत्तं पातालमिव महाभोगिनां गुप्तये समुत्पादितं कैलासमिव परमेश्वरवसतये सृष्टं दृश्यमानसकलप्राणिपर्यायं चतुर्युगसर्गकोशमिव प्रजापतीनां क्लेशबहुलमपि तपःकरणमिव क्रमकारणं कल्याणानामेवं च वीक्ष्यमाणः कटकं जगाम ॥

आसन्नवर्त्तिनां च तत्रभवता मान्धात्रा प्रवर्त्तिताः पन्थानो दिग्विजयायाप्रतिहतरथरंहसा रघुणा लघुनैव कालेनाकारि ककुभां प्रसादनं शरासनाद्वितीयः करदीचकार चक्रं क्रमागतभुजबलाभिजने-

व्यंसिता वञ्चिताः । सादिनामश्ववाराणां । बहवः श्वानो यैः । कोणो वादनभाण्डं । अन्यत्र घासिकैरुद्धूयमानधूलिपटलमिति सम्बन्धः । संघशो बहुशः । घासे नियुक्ता घासिकाः । घासजालं घाससंघातः । एकदेशः पश्चिमा दिक् । मलकुथैरिति पाठः । मलकुथा मलपट्टी छविरित्यर्थः । अंसोपरिवास इत्यन्ये । पटच्चरं जीर्णवस्त्रं । कुलुंठकाः शुनां बन्धनलगुडाः । उद्धुरा उद्दामप्रसराः । जगतो ग्रहणं स्वीकरणं प्लावनं च । भोगिनो भोगवन्तः सर्पाः । परमेश्वरो हरोपि । परितः समन्तादायः । आगमनं पर्यायः । आसन्नेत्यादौ पार्थिवसुता-

१. लकुट° A. B. D., °लगुरु° K. २. °वशात् A. B. D. T. ३. धूसर° A. B. D. ४. शीर्णोर्णा° A. B. D. ५. °मलकुटैश्च A. B. ६. पूरणादेशाकूल° A. B. ७. °त्रिक्रोशत्कर्मन्दिब्राह्मणं A. B. T. ८. °कुलण्ड° K. K₁., °कुदण्डक° A. B. D. T. ९ दिग्विजयस्य A. B. १०. प्रसाधनं A. B. D. ११. भुजाभिजनधनबलमदविलिप्तानां पार्थिवानां A. B. D. T.

धनमदावलिप्तानां भूभुजां पाण्डुः पाण्डवः सव्यसाची चीनविषयमतिक्रम्य राजसूयसंपदे क्रुध्यद्गन्धर्वधनुष्कोटिटांकारकूजितकुञ्जं[1] हेमकूटपर्वतं पराजैष्ट संकल्पान्तरितो विजयस्तरस्विनां सहिमहिमवद्व्यवहितोऽप्युवाह बाहुबलव्यतिकरकातरः करं कौरवेश्वरस्य[2] किङ्कर इवाकृती द्रुमो नातिविजिगीषवः खलु पूर्वे येनाल्प एव भूभागे भूयांसो भगदत्तदन्तवक्रक्राथकर्णकौरवशिशुपालसाल्वजरासन्धसिन्धुनाथ[3] प्रभृतयोऽभवन्भूपतयः सन्तुष्टो राजा युधिष्ठिरो यो ह्यसहत समीप एव धनञ्जयजयजनितजगत्कम्पः किंपुरुषाणां राज्यं। अलसश्चण्डकोशो[4] यो न प्राविक्षत्क्ष्मां जित्वापि स्त्रीराज्यं ह्रसीय एवान्तरं तुषारगिरिगन्धमादनयोरुत्साहिनः[5] किष्कुस्तुरुष्कविषयः[6] प्रादेशः पारसीकदेशः शशपदं[7] शकस्थानमदृश्यमानप्रतिप्रहारे पारियात्रे यात्रैव शिथिला शौर्यशुल्कः सुलभो दक्षिणापथः। दक्षिणार्णवकल्लोलानिलचलितचन्दनलतासौरभसुन्दरीकृतदरीमन्दिराद्दुर्दुरादद्रेर्नेदीयसि[8] मलयो मलयलग्न एव च महेन्द्र इत्येवंप्रायानुद्योगद्योतकानामालापान्पार्थिवकुमाराणां[9] बाहुशालिनां शृण्वन्नेवासससादावासम्। मन्दिरद्वारि चोभयतः सबहुमानं भ्रूलताभ्यां[10] विसर्जितराजलोकः प्रविश्य चावततार बाह्यास्थानमण्डपस्थापितमासनमाचक्राम। अपास्तसमायोगश्च क्षणमासिष्ट[11]। अथ तत्र प्रतीहारः पृथ्वीपृष्ठप्रतिष्ठापितपाणिपल्लवो विज्ञापितवान्। देव प्राग्ज्योतिषेश्वरेण कुमारेण प्रहितो हंसवेगनामा[12] दूतोन्तरङ्गस्तोरणमध्यास्त इति। राजा तु तमाशु प्रवेशयेति[13] सादरमादिदेश। अथ दक्षतया क्षितिपालादराच्च प्रतीहारः स्वयमेव निरगात्। अनन्तरं च हंस-

नामित्येवंप्रायानालापाञ्शृण्वन्नेवाससादावासमिति सम्बन्धः। तत्रभवता पूज्येन। सव्यसाची अर्जुनः। पराजैष्ट जिगाय। तरस्विनां पराक्रमवतां। कौरवेश्वरो दुर्योधनः। अकृती अकृतार्थः। द्रुमाख्यः किन्नरराजा। सिंधुनाथो जयद्रथः। ह्रसीयो ह्रस्वतरं। सांगुष्ठया प्रदेशिन्या प्रादेशः। प्रादेशतालगोकर्णतर्जन्यादियुते तते। अंगुष्ठे सकनिष्ठे स्याद्वितस्तिर्द्वादशांगुलमित्यमरसिंहः। शौर्यकृतः शुल्कः पणो यत्र स शौर्यशुल्कः। अतिशयेनान्तिकं नेदीयः। अं-

१. °टङ्कारकूजत्कुञ्जं A. B. २. कौरवस्य A. B. D. T. ३. °सिन्धुराज° K. $K_1$. Jambû ed. ४. °चण्डशोको यः A. B. D. ५. उत्साहनः A, B. ६. किष्कुतुरुष्कविषयाः K. $K_1$. ७. शशदं A. B. ८. मन्दिरादर्दुरादद्रेः K. $K_1$, मन्दिरादुर्दुराद्रेः A. मन्दिरादर्दुराद्रेः B. ९. °प्रायानुद्योगोद्योतकानालापान् पार्थिवसुतानां A. B. D. १०. भ्रूलतानां B. T. ११. क्षणमतिष्ठत् A. B. D. १२. °नामान्तरङ्गो दूतस्तोरणम° A. B. T. १३. प्रवेशयैनमिति सादरमादिशत् A, B, D, T.

वेगः सविनयमाकृत्यैव नयनानन्दसंपादनसुभगाभोगभद्रतया समुल्लि[1]-ख्यमानगुणगरिमा प्रभूतप्राभृतभृतां भृ[2]तकपुरुषाणां समूहेन महता-नुगम्यमानः प्रविवेश राजमन्दिरम् । आरादेव[3] पञ्चाङ्गालिङ्गिताङ्गनः[4] प्रणाममकरोत् । एह्येहीति सबहुमानमाहूतश्च प्रधावितोपसृतः पाद-पीठलुठितललाटलेखो न्यस्तहस्तः पृष्ठे पार्थिवेनोपसृत्य[5] भूयो नम-श्चक्रे[6] स्निग्धनरेन्द्रदृष्ट्या निर्दिष्टमविप्रकृष्टं स[7] प्रदेशमध्यास्त । ततो राजा तिरश्चीं तनुमीषदिव दधानश्चामरग्राहिणीमन्तरालवर्तिनीं समु-त्सार्य संमुखीनस्तं सप्रश्रयं पप्रच्छ । हंसवेग श्रीमान्कश्चित्कुशली कुमार इति स तमन्ववादीत् । अद्य कुशली [8]येनैवं स्नेहस्नपितया सौहार्दद्रवार्द्रया सगौरवं गिरा पृच्छति देव इति स्थित्वा च मुहूर्त-मिव पुनः स चतुरमुवाच । चतुरम्भोधिभोगभूतिभाजनभूतस्य देव-स्य सद्भावगर्भमपहाय हृदयमेकमन्यमनुरूपं प्राभृतमेव दुर्लभं लोके तथाप्यस्मत्स्वामिना सन्देशमशून्यतां नयता पूर्वजोपार्जितं वारु-णमातपत्रमाभोगाख्यमनुरूपस्थानन्यासेन कृतार्थीकृतमेतत् । अस्य च कुतूहलकृन्ति बहून्याश्चर्याणि दृश्यन्ते । तथाहि प्रतिदिवसं प्रविशति शैत्यहेतो[11]श्छायायाः किरणसहस्रादेकैकः सोमस्य रश्मिरस्मिन् । य[12]स्मिन्प्रविष्टे प्रध्यानानन्तरं स्वादवो दन्तवीणोपदेशाचार्याश्च्योतन्ति चन्द्रभासामम्भसां म[13]णिशिलाकाभ्यो यावदिच्छमच्छा धाराः । प्रचेता इव च यश्चतुर्णामर्णवानामधिपतिर्भूतो भावी वा तमिदमनुगृह्णाति च्छायया नेतरं । इदं च न सप्तार्चिर्दहति न पृषदश्वो हरति नोदकमा-र्द्रयति न रजांसि मलिनयन्ति न जरा जर्जरयतीति । एतत्तावदनुगृह्-णातु दृशा देवः सन्देशमपि विस्रब्धं श्रो[14]ष्यतीत्येवमभिधाय [15]विवृत्या-

तिकनिकटयोर्नेदसादाविति । प्राग्ज्योतिषं कामरूपाख्यो देशः । समुल्लिख्यमाना नीयमानः । संमुखीनोभिमुखः । भोगः पाकनं । शीतोद्भवो दन्तानामन्यो-

१ समुल्लिङ्ग्यमान° A. B. D. २. K. $K_1$. $K_2$. Jambû ed. omit भृतक. ३. दूरा-देव A. B. ४. °अङ्गणः A. B; °लिङ्गितां गतः K. $K_1$ Jambû ed. ५. पार्थिवेनाप-सृत्य A. B. D. ६ नमश्चकार A. B. ७. च देशं A. B. D. ८. यदेवं A. B. D. ९. वारुणमातपत्रं A. B. D १०. अत्र हि A. B. D. ११. शैत्यमहोयं छायायाः A. D. T. १२ अस्मात्प्रध्यानान्तर K. $K_1$. स्वदेवः A. B. १३. मणिशलाकाबोधात्वादिच्छनच्छ-धाराः $K_2$ Jambû ed. १४ श्रोष्यसि $K_1$. $K_2$. Jambû ed. १५ विवर्त्य चात्मीयपुरुष-मस्वधान् A. B.

र्मीयं पुरुषमभ्यधादुत्तिष्ठ दर्शय देवस्येति स च वचनानन्तरमुत्थाय पुमानूर्ध्वीचकार तत् । धौतदुकूलकल्पिताच्च निचोलकादकोषीत् । आकृष्यमाण एव च यस्मिन्नतिसितमहसि सरभसमहासीव हरेण रसातलादुदलासीव शेषफणिफणाफलकमण्डलेनास्थायीव चक्रीभूयान्तरिक्षे क्षीरोदेनाघटीव गगनाङ्गने गोष्ठीबन्धः शारदेन बलाहकव्यूहेन विश्रान्तमिव विततपक्षतिना वियति पितामहविमानहंसयूथेनात्रिनेत्रनिर्गतस्य धवलधाममण्डलमनोहरो दृष्ट इव जनेन जन्मदिवसः कुमुदबन्धोः प्रत्यक्षीकृत इवोद्गमनक्षणो नारायणनाभिपुण्डरीकस्याहितेव कौमुदीप्रदोषदर्शनानन्दतृप्तिरक्षणामुदमांक्षीदिव मन्दाकिनीपुलिनमण्डलं महदम्बरोदरे परिवर्त्तित इव दिवसः पौर्णमासीनिशया मन्दं मन्दमिन्दूदयसन्देहदूयमानमानसैर्विघटितं विघटमानचञ्चुच्युतमृणालकोटिभिरासन्नकमलिनीचक्रवाकमिथुनैः शरज्जलधरपटलाशंकासंकोचितकेकारवमूकमुखपटैः पराङ्मुखीभूतं भवनशिखण्डिमण्डलैः प्रबुद्धमाबद्धचन्द्रानन्द्रोद्दामोद्दलद्दलपुटाट्टहासविशदं कुमुदषण्डैः । चित्रीयमाणचेताश्च सराजको राजा दण्डानुसाराधिरोहिण्या दृष्ट्या सादरमैक्षिष्ट तत् तिलकमिव त्रिभुवनस्य शैशवमिव श्वेतद्वीपस्यांशावतारमिव शरदिन्दोर्हृदयमिव धर्मस्य निवेशमिव शशिलोकस्य दन्तमण्डलकद्युतिधवलं मुखमिव चक्रवर्त्तित्वस्य मौक्तिकजालपरिकरसितं सीमन्तचक्रमिव दिवो बहुलज्योत्स्नाशुक्लोदरमैन्द्र-

न्याघातौ दन्तवीणा । सप्तार्चिरग्निः । पृषदश्वो वायुः । विवृत्य स्थिरित्वा । निचोलकादाच्छादनप्रसेवकात् । अकोषीत्निष्कासितवान् । उदलासुल्लसितं । अस्थायि स्थितं । अघाटि घटितं । विश्रान्तं व्यश्रमत । उद्गमनक्षण उत्पत्तिसमयः । उदमांक्षीदुन्मग्नं । परिवर्त्तितः स्वरूपः कृतः । निवेशं स्थानं । दन्तमण्डलकं दशनकृतं चक्रवालं दशनसमूहश्च । मुखमारम्भो वक्त्रं च । परिकरः परिवेष्टनं । परिवेशवलयं परिधिकटकं । स्यादावर्त्तोम्भसां भ्रमः । आवर्त्तनमा-

---

१. उदुल्लसीव A. २. अघाटीव गगनाङ्गणे A. B. D. ३. व्यश्रामीव A. B. D. T. ४. °मन्दिरं $K_3$. Jambû ed. ५. °पटलशङ्का° A. B. ६. °मूर्द्ध° A. B. D. ७. °विषदं K. $K_1$. Jambû ed. ८. कुमुदखण्डैः A. B. D. ९. बहल° K. $K_1$. Jambû ed.

चमिव परिवेशवलयं शौक्ल्यापहसितशङ्खश्रीकं श्रवणमण्डलमिव निश्चलतां गतमैरावनस्य श्वेतगङ्गावर्त्तपाण्डुरं पदमिव त्रिभुवनवन्दनीयं त्रिविक्रमस्य प्रचेतसश्चूडामणिमरीचिशिखाभिरिव स्निग्धाभिर्मानसविसतन्तुमयीभिश्चामरिकावलीभिर्विरचितपरिवेशमुपरि चक्रवर्त्तिलक्ष्मीनूपुरस्वनश्रवणदोहदनिश्चलेनेव लक्ष्मणा विततपत्रेण हंसेन सनाथीकृतशिखरं स्पर्शवता च प्रभावस्तम्भितेन मन्दाकिनीमृणालेन मुकुलितफणेन वासुकिनेव नीतेन दण्डतां द्योतमानं धवलिम्ना क्षालयदिव नक्षत्रपथं प्रभाप्रवाहप्रथिम्ना प्रावृण्वदिव दिवसं समुच्छ्रायेणाधः कुर्वदिव दिवमुपरिस्थितामिव सर्वमङ्गलानां श्वेतमण्डपमिव श्रियः स्तवकमिव ब्रह्मस्तम्भस्य नाभिमण्डलमिव ज्योत्स्नायाः विषदहासमिव कीर्त्तेः फेणराशिमिव खड्गधाराजलानां यशःपटलमिव शौर्यशालितायास्त्रैलोक्याद्भुतभूतं महच्छत्रम् । दृष्टे च तस्मिन्राज्ञा प्रथमं शेषमिव प्राभृतं प्रकाशयाञ्चक्रुः क्रमेण कार्माः । तद्यथा परार्ध्यरत्नांशुश्रोणीकृतदिग्भागान्भगदत्तप्रभृतिख्यातपार्थिवपरागतानाहतलक्षणानलङ्कारान् प्रभालेपिनां च चूडामणीनां समुत्कर्षान् क्षीरोदधेर्धवलताहेतूनिव हारानकरागरुचिरवेत्रकरण्डकुण्डलीकृतानि शरच्चन्द्रमरीचिरुञ्चि शौचक्षमाणि क्षौमाणि कुशलशिल्पिलोकोल्लिखितानां च शुक्तिशङ्खगल्वर्कप्रमुखानां पानभाजनानां निचयान् निचोलकरक्षितरुचां च रुचिरकाञ्चनपत्रभङ्गभङ्गुराणामतिबन्धुरपरिवेशानां कार्दरङ्गचर्मणां सम्भारान् भूर्जत्वक्कोमलाः स्पर्शवतीर्जातीपट्टिकाश्चित्रपटानां च म्रदीयसां समूरुकोपधानादीन्विकारान् प्रियङ्गुप्रसव-

वर्त्तः । प्रावृण्वदाच्छादयत् । कार्मा भृतकाः । आहतलक्षणान्गुणैः प्रसिद्धान् । उक्तं च । गुणैः प्रतीते तु कृतलक्षणा हतलक्षणाविति । समुत्कर्षानतिशयान् । गल्वर्कौ मसाराख्यो मणिभेदश्च चन्द्रकान्त इत्यन्ये । शौचो धावनं । कार्दरङ्गचर्मणां कार्दरङ्गदेशभवानां स्फोटकानां । जातीपट्टिकाः श्रेष्ठानि जवनग्रंथ-

१. परिवेषवलयं A. B. C$_{r}$. २. A. B, D. T. omit this passage down to गुरुपरितापमुज्झ, instead of which A. reads वद्मुषाश्च and B. मुखश्च. ३. विशद° K. ४. समुत्कर्ष K. ५. समूरकोप° K.

पिङ्गलत्विञ्चि चासनानि वेत्रमयान्यागुरुवल्कलकल्पितसंचयानि[1] च सुभाषितभाञ्जि पुस्तकानि परिणतपाटलपटोलत्विषि च तरुणहारीतहरिन्ति क्षीरक्षारीणि च पूगानां पल्लवावलम्बीनि सरसानि फलानि लतासहकाररसानां च कृष्णागुरुतैलस्य च कपोतकापिलकापोतिकापलाशकोशीकवचिताङ्गीः स्थवीयसीर्वैणवीर्नाडीश्च[2] पट्टसूत्रप्रसेवकार्पितांश्च भिन्नाञ्जनवर्णस्य[3] कृष्णागुरुणो गुरुपरितापमुषश्च[4] गोशीर्षचन्दनस्य तुषार[5]शिलाशकलशिशिरस्वच्छासितस्य च कर्पूरस्य कस्तूरिकाकोशकानां[6] च पक्कफलजूटजटिलानां च कक्कोलपल्लवानां लवङ्गपुष्पमञ्जरीणां च जातीफलस्तबकानां च राशीनतिमधुरमधुरसामोदनिर्हारिणीश्चोल्लुककलशीः सितासितस्य च चामरजातस्य च निच[7]यानवलम्बमानतूलिकालाबुकांश्च लिखितानेकलेख्य[8]फलकसंपुटान्कुतूहलक्रान्ति च कनकशृङ्खलानियमितग्रीवाणां किन्नराणां च वनमानुषीणां[9] च जीवञ्जीवकानां च जलमानुषाणां च मिथुनानि परिमलामोदितककुभश्च कस्तूरिकाकुरङ्गान् गेह[10]परिसरणपरिचिताश्च चमरीश्चामीकररसचित्रवेत्रपञ्जरान्तर्गतांश्च[11] बहुसुभाषितजालजल्पाकजिह्वांश्च जातीः[12] कौशिकशुकशारिकाप्रभृतीन्पक्षिणः[13] प्रवाललतापञ्जरगतांश्च चकोरान् जलहस्तिना[14]मुदग्रकुम्भमुक्ताफलदामदन्तुराणि च दन्तकाण्डकुण्डलानि। राजा तु छत्रदर्शनात्[15]प्रहृष्टहृदयः प्रथमप्रयाणे शोभना[16]निमित्तामिति

मानि। संचयाः पत्रसमूहाः। पटोलस्तिक्तक ओषधिभेदः। उक्तं च। अथ कुलकं पटोलस्तिक्तकः पटुरिति। कापोतिका ओषधिभेदः। गोशीर्षचन्दनस्य चन्दनभेदस्य। कोशका नाभयः। अतिमधुरं मधुरसाया इवामोदानि हरन्ति मुञ्चन्ति यास्ता मधुरसा द्राक्षाः। उक्तं च। मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च। इत्यन्ये मधुरसं मकरन्दं द्रवमाहुः। उल्लुकः सुगन्धिफलवि-

१. आगुरुवल्कल° K. $K_1$. २ वैणवीर्नाडीश्च नाडी च K. $K_1$. ३. भिन्नाञ्जनकृष्णस्य $K_1$. Jambû ed. ४. गुरुपतिताप° K. ५. तुखार° B. ६. °कोशिकानां A. B. D. ७. निकरान् A. B. D. T. ८. लिखितानालेख्य° K. Jambu ed. ९. °मानुषाणां $K_2$. १०. गृहपरिचरण° A. B. ११. °पञ्जरजुषः A. B. D. १२. K. $K_1$ $K_2$. Jambû ed. omit जातीः कौशिक°. १३ °प्रभृतीणां पक्षिणां A. B. १४. °हस्तिनां च कुम्भं A. B. १५. प्रदर्शनात् A. B. D. १६. शोभनं A. B. १७. माङ्गी Jambû ed.

मनसा जग्राह । हंसवेगं च प्रीयमाणो बभाषे । भद्र सकलरत्नधाम्नः परमेश्वरशिरोधारणार्हस्यास्य महातपत्रस्य महार्णवादिव कुमुदबान्धवस्य कुमाराल्लाभो न विस्मयाय बालविद्याः खलु महतामुपकृतय इत्यपनीते च तस्मात्प्रदेशात्प्राभृतसम्भारे क्षणमिव स्थित्वा हंसवेग विश्रम्यतामिति प्रतीहारभवनं विसर्जयांबभूव । स्वयमप्युत्थाय स्नात्वा मङ्गलाकांक्षी प्राङ्मुखः प्राविशदाभोगस्य छायां । अथ विशत एवास्य छायाजन्मना जडिम्ना चूडामणितामनीयतेव शिरसि शशिबिम्बमम्बुबिन्दुमुचश्चुचुम्बुरिव चन्द्रकान्तमणयो ललाटतटं कर्पूररेणव इव धवलीयन्त लोचनयुगले गले गलत्तुहिनकणनिकरकृतनीहारा हारा इवाववध्यन्त हरिचन्दनरसासारेणेवापातितसन्ततमुरसि कुमुदमयमिव हृदयमभवदतिशिशिरमतर्हितर्हिमशिलेव विलीयमाना व्यलिम्पदङ्गानि जातविस्मयश्चाकरान्मनस्येकैमजर्यं संगतमपहाय कास्त्यन्या प्रतिकौशलिकंत्याहारकाले च हंसवेगाय धवलकर्पटप्रावृतकलधौतनालिकेरपरिगृहीतं विलिप्तशेषं चन्दनमङ्कस्पृष्टे च वाससी । शरत्तारकाकारतारमुक्तास्तबकितदकं परिवेशं च नाम कटिसूत्रकमनिमहार्हपद्मरागालोकलोहितीकृतदिवसं च तरङ्गकं नाम कर्णाभरणं प्रभूतं च भोज्यजातं प्राहिणोत् । एवंप्रायेण च क्रमेण जगाम दिवसः । ततः कटकस्थबलबहलधूलिधूसरितवपुरंशुमाली मलीमसमङ्गमिव क्षालयितुमपरजलनिधिमवातरत् । आभोगातपत्रप्रदानवार्त्तामिव निवेदयितुं वरुणाय वारुणीं दिशमयासीत् । मुकुलायमानसकलकमलवना

शेषरसः । आसवभेद इत्यन्ये । तूलिका ऊर्जिका यया चित्रं क्रियते । अलाब्यस्तुंब्यः । प्रवालो विद्रुम । उक्तं च । अथ विद्रुमः पुंसि प्रवालः पुनपुंसकमिति । नीहारो मिहिका चाथ । कटकं हस्त्यश्वादीनां सर्वेषां सन्निवेशदेशः । तत्स्थं बलं सैन्यं । तवरं पिण्डीभवनं । नृपव्याघ्रो राजशार्दूलो हर्षः । उपसृष्टां सोपद्रवां । पौरुहूतीमैन्द्रीं । रोहिणीरमणश्चन्द्रो वृषभश्च । रोहिणी

१. A. B. D. omit अथ विशत एवास्य. २. K. $K_1$ $K_2$. Jambu ed. omit शिरसि. ३ K. $K_1$. $K_2$. Jambu ed. omit गले ४ अवबध्यन्ते A. अवबन्धन्त B. ५. अतिशिशिरमतुहिन' A. B. D. ६. एकमजर्यमपहायास्य नास्त्यन्या A. B. D. ७. शरत्तारकातारमुक्ताः A. B. D. T. ८. °जलधिम° K. $K_1$. Jambû ed. ९. चावेदयितुं A. B. D.

प्रमुख एव बद्धसेवाञ्जलिपुटेव सद्वीपा भूरभूद्भूपतेः । [1]भूपालानुरागराशिमय इव निखिलजीवलोकलोकाञ्जलिबद्ध[2]बन्धुर्जगज्जग्राह संध्यारागः । गौडापराधशङ्किनीव श्यामतां प्रपेदे दिक्प्राची । प्रचिनतिमिरनि[3]र्वाहा निर्वाणान्यनृपप्रतापानलकलेव कालिमानमतानीन्मेदिनी । [4]मेदिनीशप्रदोषास्थानपुष्पनिकरमिव विकचत[5]वररुचिरम[6]र्वचकरुडुनिकरमविरलं [7]ककुभः । स्कन्धावारगन्धगजम[8]दामोदधावितस्येव मार्गो वियति विरराज रजःपाण्डुरैरावतस्य । कुपितनृप[9]व्याघ्राघ्रातामुपसृष्टामिव पौरुहूतीं ककुभं विहाय विहायस्तलमारुरोह रोहिणीरमणः [10]प्रयाणवार्त्ता इव [11]मानिनीनां हृदयभेदिन्यो ययुरिन्दुदीधितयो दशदिशः । नवनृपदण्डयात्रात्रासातुरा इव तरलितसत्त्ववृत्तय[12]श्चुक्षुभुः पतयो वाहिनीनां चिन्तेव भूभृतां हृदयानि विवेश गुहाविवराणि विमुक्तसर्वाशातिमिरसन्ततिः प्रतिसामन्तचक्षुषामिव ननाश निद्रा कुमुदवनानां । अस्यां च वेलायां विततवितानतलवर्त्ती नरेन्द्रो यात तावदिति विसर्ज्यानुजीविनो हंसवेगमादिष्टवान् । कथय सन्देशमिति प्रणम्य स कथयितुं प्रास्तावीत् । देव पुरा महावराहसं[13]पर्कसम्भूतगर्भया भगवत्या भुवा [14]नरको नाम [15]सूनुरसाविव रसानले वीरस्य यस्याभवन्बाल्य एव पादप्रणामप्रणयिनश्चूडामणयो लोकपालानां यस्य च त्रिभुवनभुजो भुजशौण्डस्य भवनकमलिनीचक्रवाकीकोपकुटिलकटाक्षेक्षितोपि [16]भयचकितारुणपरिवर्त्तितरथो नाज्ञया विना रविरस्तमव्राजीत् । यश्च वरुणस्य बहिर्वृत्ति हृदयमिदमातपत्रमहार्षीत् ।

गौः । उक्तं च । माहेयी सौरभेयी गौरुस्रा माता च शृंगिणी । अर्जुन्यघ्न्या रोहिणी स्यादुत्तमा गोषु नैचिकीति । वृषभश्च कुपितव्याघ्राघ्रातामत एव सोपद्रवां दिशं विहाय स्थानान्तरमारोहति । मानः प्रियाविषयेन्यत्र धीरविषये । सत्त्वानि प्राणिनं धैर्यं च सत्त्वं । वाहिनीनां सेनानां नदीनां च ।

---

१. नृपानुरागमय इव K. $K_1$. $K_2$. Jambû ed. २. °बन्धबन्धुरं जगत् A. B. ३. °निर्वाहाः $K_2$. Jambû ed. ४ मेदिनीशः प्रदोषास्थानपुष्पप्रकरमिव A. B. D. ५. °तगर° A. B. D. K. ६. विचक° A. B. T ७. ककुभं A. ८. °मदगन्धधावितस्येव A. ९. K. $K_1$. $K_2$. Jambû ed. omit ककुभ°. १०. प्रयाणवार्तामिव $K_2$. Jambû ed. ११. मानिनां A. B. D. १२. चुक्षुभुः A. चुक्षुभिः B. १३ 'संपर्कभूत° A. B. T. १४. नरकनामा A. B. D. १५. सूनुरसावि B. K. Jambû ed. १६. भयचिकितारुण° B.

महात्मनस्तस्यान्वये भगदत्तपुष्पदत्तवज्रदत्तप्रभृतिषु व्यतीतेषु बहुषु मेरूपमेषु महत्सु महीपालेषु प्रपौत्रो महाराजभूतिवर्मणः पौत्रश्चन्द्रमुखवर्मणः पुत्रो देवस्य कैलासस्थिरस्थितेः स्थितिवर्मणः सुस्थिरवर्मा नाम महाराजाधिराजो जज्ञे तेजसां राशिर्मृगाङ्क इति प्रियं जना जगुः। योऽर्थमाग्रजेनेवाजायत सहैवाहङ्कारेण यश्च बाल एव प्रीत्या द्विजातीनप्रीत्या चारातीन्समग्रान्प्रतिग्रहानग्राहयत् । यत्र चातिदुर्लभं लवणालयसम्भूतायाः परं माधुर्यमभूल्लक्ष्म्याः । तथा च यो वाहिनीनाथानां शङ्खान् जहार न रत्नानि पृथिव्याः स्थैर्यं जग्राह न करमर्वानभृतां गौरवमादत्त न नैष्ठुर्यं । तस्य च सुगृहीतनाम्नो देवस्य यदा देव्यां श्यामादेव्यां भास्करद्युतिर्भास्करवर्मापरनामा तनयः शन्तनोर्भागीरथ्यां भीष्म इव कुमारः समभवत् । अयमस्य च शैशवादारभ्य सङ्कल्पः स्थेयान्स्थाणुपादारविन्दद्वयादृते नाहमन्यं नमस्कुर्यामिति । ईदृशश्चायं मनोरथस्त्रिभुवनदुर्लभस्त्रयाणामन्यतमेन संपद्यते सकलभुवनविजयेन वा मृत्युना वा यदि वा प्रचण्डप्रतापज्वलनजनितदिग्दाहेन जगत्येकवीरेण देवोपमेन मित्रेण । [10]मैत्री च प्रायः कार्यव्यपेक्षिणी क्षोणीभृतां कार्यं च कीदृशं नाम तद्भवेद्यदुपन्यस्यमानमुपनयेन्मित्रतां देवं देवस्य हि यशांसि सञ्चिचीषतो बहिरङ्गभूतानि धनानि बाहावेव च केवले निपण्णस्य शेषावयवानामपि साहायकसम्पादनमनोरथो निरवकाशः किमुत बाह्यजनस्य चतुःसागरग्रा[11]मग्रहणघस्मरस्य पृथिव्येकदेशदानोपन्यासेनापि का तुष्टिः । अभिरूपकन्याविश्राणनविलोभनमपि लक्ष्मीमुखारविन्ददर्शनदुर्ललितं[12]दृष्टरकि-

आशा दिश आस्था च । निद्रा संकोचः स्वापश्च । प्रतिग्रहो द्विजदीयमानोर्थः सैन्यपश्चाद्भागश्च । हस्तिनां युद्धशिक्षार्थं चर्ममयो हस्ती । प्रतीहार-

---

१. भगदत्तयज्ञदत्तपुष्पदत्तप्रभृतिषु मरुन्मण्डितेषु महत्सु महीपालेषु वर्तितेषु बहुषु प्रपौत्रो महाराजवर्मणः A. B. D. T. २. स्थिरवर्मणः A. B. ३. K. $K_2$. Jambû ed. read यं instead of प्रियं of all the remaining Mss. ४. योयमजेनेवा° K. $K_1$. Jambû ed. ५. वाहिनीशानां A. B. ६. यस्य A. B. T. ७. अस्य च शैशवादयं सङ्कल्पः A. B. ८. संपद्येत A. B. ९. A. B. D. omit वा. १०. मैत्री च कर्तव्यतापेक्षणी A. B. D.T. ११. °ग्राम° A. B. १२. °दृष्टेव किञ्चित् A. B.

स्मिन्करमेवमघटमानसकलोपायसम्पादितपदार्थेस्मिन्प्रार्थनामात्रक-मेव केवलमनुरुध्यमानः शृणोतु देवः । प्राग्ज्योतिषेश्वरो हि देवेन सहैकपिङ्ग इवानङ्गद्विषा दशरथ इव गोत्रभिदा धनञ्जय इव पुष्कराक्षेण वैकर्त्तन इव दुर्योधनेन मलयानिल इव माधवेनाजर्यं सङ्गतमिच्छति । यदि च देवस्यापि मैत्री यतिहृदयमवगच्छति च पर्यायान्तरितं दास्यमनुतिष्ठन्ति सुहृद इति । ततः किमास्यते समाज्ञाप्यतामनुभवतु विष्णोर्मन्दरगिरिरिव विकटकेयूरकोटिमणिविघट्टनक्वणितकटकमणिशिलाशकलानि गाढोपगूढनानि देवस्य कामरूपाधिपतिः । अस्मिन्नातृप्तेरनवरतविमललावण्यसौभाग्यसुधानिर्झरिणि मुखशशिनि चिराच्चक्षुषी क्षालयतु प्राग्ज्योतिषेश्वरश्रीः । नाभिनन्दति चेद्देवः प्रणयमाज्ञापयतु किं कथनीयं मया स्वामिन इति । विरतवचसि च तस्मिन्भूपालः पूर्वोपलब्धैरेव गुरुभिर्गुणैरारोपितबहुमानः कुमारे सुदूरमाभोगातपत्रव्यतिकरेण तु परां कोटिमारोपिते प्रेम्णि लज्जमान इव सादरं जगाद । हंसवेग कथमिव तादृशि महात्मनि महाभिजने पुण्यराशौ गुणिनां प्राग्रहरे परोक्षसुहृदि स्निह्यति मद्विधस्यान्यथा स्वप्नेपि प्रवर्त्तेत मनः । सकलजगदुत्तापनपटवोपि शिशिरायन्ते त्रिभुवननयनानन्दकरे कमलाकरे करास्तिग्मतेजसः । सबहुगुणगणक्रीताश्च के वयं सख्यस्य सज्जनमाधुर्याणामभूतदास्यो दश दिशः । एकान्तावदातोत्तानस्वभावसम्भूतसादृश्यस्य कुमुदस्य कृते केनाभिहितः शिशिररश्मिः । श्रेयांश्च सङ्कल्पः कुमारस्य स्वयं बाहुशाली मयि च समालम्बितशरासने सुहृदि हराहते कमन्यं नमस्यति । सम्वर्धिता च मे प्रीतिरमुना संङ्कल्पेन । अवलेपिनि पेशावपि केसरिणि बहुमानो हृदयस्य किं पुनः सुहृदि तत्तथा यतेथा यथा न चिरमियमस्मान्क्लेशयति कुमारदर्शनोत्कण्ठेति ॥

---

१. °सकलोपायनसंपादिपदार्थ्ये A. B. D. २. A. has the marginal gloss इन्द्रेण. ३. मित्री A. B. ४. तद्विमृश्य समाज्ञाप्यतां A. B. D. ५. तस्मिन्नवनिपालः A. B. D. ६. आरोपितः A. B. ७. मद्विधस्य नान्यथा A. B. T. ८ °स्वभाववृत्तस्य A. B. D. T. ९. नमस्यतु A. B. १०. संकल्पितेन A. B. D. T. ११. शशावपि A. शिशावपि B. १२. अस्मात् B.

हंसवेगस्तु[1] विज्ञापयाम्बभूव । देव किमपरमिदानीं क्लेशयत्यभिजातमभिहितं देवेन सेवाभीरवो हि सन्तः । तत्रापि विशेषेणायमहङ्कारधनो वैष्णवो वंशः । आस्तां तावदस्मत्स्वामिवंशः पश्यतु[2] देवः पुरुषस्य हि सेवां प्रति दुर्जनन्येवातिवृद्धया दुर्गत्या वाभिमुखीक्रियमाणस्य कुटुम्बिन्येवासन्तुष्टया तृष्णया वा प्रेर्यमाणस्य दुरपत्यैरिव यौवनजनितैर्नानाभिलाषिभिरसत्सङ्कल्पैर्व्याकुलीक्रियमाणस्य जरत्कुमारीमिव परमार्गणयोग्यामतिमहतीं वावस्थामापश्यतः स्वगृहे दुर्बन्धुभिरिव दुःस्थितैः समग्रैर्ग्रहैर्वा ग्राह्यमाणस्याभियोगं पुरातनैरतिदुस्त्यजैर्भृत्यैरिव मलिनैः कर्मभिर्वानुवर्त्यमानस्य[3] सकलशरीरसन्तापकरं कारीषाग्निमिव दुष्कृतिनः कृतचित्तस्य सम्प्रवेष्टुं[4] राजकुलं । उपहतसकलेन्द्रियशक्तेरिव[5] मिथ्यैव हृदयगतविषयग्रामग्रहणाभिलाषस्य प्रथममेव तोरणतले वन्दनमालाकिशलयस्येव शुष्यतो[6] द्वाररक्षिभिर्निरुद्धस्य पीडितस्य प्रविशतो द्वारे हरिणस्येवापरैर्हन्यमानस्य करिकर्मचर्मपुटस्येव मुहुर्मुहुः प्रतिहारमण्डलकरप्रहारैर्निरस्यमानस्य निधिपादपप्ररोहदारुमयदेहस्येव द्रविणाभिलाषादधोमुखीभवतो दूरममार्गणस्याप्यतिविप्रकृष्टविवृतविसर्जितस्योद्वेगं[7] व्रजतः । अकण्ठकस्यापि चरणतललग्नस्याकृष्य क्षेपीयः क्षिप्यमाणस्यार्मकरकेतोरप्यकालोपसर्पणाप्रकुपितेश्वरदृष्टिदग्धस्य प्रलयमुपगच्छतः कपेरिव[8] कोपनिर्भर्त्सितस्याप्यभिन्नमुखरागस्य ब्रह्मघ्न इव प्रतिदिवसवन्दनोद्घृष्टशिरःकपालस्य[9] स्पर्शरहितस्याशुभकर्माणि निर्वहतः । त्रिशामण्डलेन दौवारिकसमूहेन प्रतिसंहारेण वेष्टनेन मंडलं यस्य करस्य तत्प्रहारैश्च । निधिपादपप्ररोहो निधानपृष्ठजन्मा । वृक्षांकुरः स च सर्वो निधिप्रभावात् । अधोमुखीभावः प्रणामः । अमार्गणस्यायाचकस्य च । अतिविप्रकृष्टैः प्राकृतैः । पूर्वं विवृतस्ततश्च लब्धदर्शन एव विसर्जितस्यात एवोद्वेगं मन्युं व्रजतः । मार्गणः शरश्चातिविप्रकृष्टं कर्णान्ते । विवृतः सर्जित उद्गतवेगं याति । अमकरकेतोरशृंगारिणोपि । अकालेप्रस्तावे । उपसर्पणं यस्य सः । तथाप्रकुपितेश्वरस्य हर्षस्य दृष्ट्या दग्धस्ततो विशेषणसमासः । प्रलयः प्रकृष्टो लयो

१. च A. B. D. T. २. पश्यतु हि A. B. ३. अनुबन्ध्यमानस्य A. B. D. ४ कृतचिन्तस्य प्रवेष्टुं A. B. ५. 'शक्तैरिव B. ६. शुष्यतः B. ७. 'विवृत' A. B. D. ८. अपकरकेतोरिव A. B. D. ९. कलापस्य A. B.

**क्लोरिव चोभयलोकभ्रष्टस्य नक्तंदिनमर्वाक्शिरसस्तिष्ठतो वाजिन इव कवलवशेन सुखवाह्यमात्मानं विदधानस्यानशनशायिन इव हृदयस्थापितजीवनाशस्य शरीरं क्षपयतः शुन इव निजदारपराङ्मुखस्य जघन्यकर्मलग्नमात्मानं ताडयतः प्रेतस्येवानुचितभूमिदीयमानान्नपिण्डस्य बलिभुज इव जिह्वालौल्योपयुक्तपुरुषवर्चसो वृथा विहितायुषो जीवतः श्मशानपादपानिव पिशाचस्य दग्धभूत्या परुषीकृतान्राजवल्लभानुपसर्पतो विपरीतजिह्वाजनितमाधुर्यैरोष्ठमात्रप्रकटितरागै राजशुकालापैः शिशोरिव मुग्धविलोभ्यमानस्य वेतालस्येव नरेन्द्रप्रभावाविष्टस्य न किञ्चिन्नाचरतश्चित्रधनुष इवालीकगुणाध्यारोपणैकक्रियानित्यनम्रस्य निर्वाणतेजसः सम्मार्जनीसमुपार्जितरजसोवकरकूटस्येव निर्माल्यवा-**

भित्यादिश्लिष्टत्वं नाशश्च सदृशः कपेर्लोहितमुखत्वात् । प्रतिदिवसेत्यादि । ब्रह्मघ्नो हतब्राह्मणः कपालमहरहो वन्दते । त्रिशंकुर्नाम चण्डालभावमास्थितोपि याजयित्वा विश्वामित्रेण स्वर्गमारोपितः कुपितेनेन्द्रेण हुंकारतर्जितः स च निपित्सुरेव विश्वामित्रप्रभावाद्ध्रुवमनवाप्य तत्रैव पूर्वं लम्बमानोद्यापि स्थितः । कवलो ग्रासः । सुखेन वाह्यं बवयोरैक्यात् । सुखेभ्यो बहिर्भूतं कृच्छ्रेण व्याप्यं च । हृदये स्थापिता जीवने वृत्त्युपाय आशा येन । जीवस्य नाशो जिवनाशश्च । जघन्यं निकृष्टं जघने भवं जघन्यं च सुतम् । अनुचितायामयशस्यायां भूमौ । चितायाः पश्चादनुचितं । बलिभुजः काकस्य । लौल्यं चापलमभिलाषश्च । उपयुक्तं व्ययीकृतं भुक्तं च । वर्चस्तेजो विष्ठा च । वृथा विहितं कृतमायुर्यस्य विभ्यः पक्षिभ्यो हितमायुर्यस्य । वृथा निष्फलं जीवतः । पिशाचस्य मूर्खस्य । भूतिः संपद्भस्म च । राजानः शुका इव राजशुकाश्च राजशुकभेदाः । नरेन्द्रो राजा मंत्रविच्च । गुण उत्कर्षो ज्या च गुणः । निर्वाणं प्रशान्तं निर्गतबाणतेजश्च । अवकरकूटो मार्जनीक्षिप्तो रजस्तृणादिसंघातः । उक्तं च । संमार्जनी शोधनी स्यात्संकरोवकरस्तथा क्षिप्त इति ।

---

१. नक्तंदिवं A. B. २. सुखबाह्य A. B. ३. °लग्नस्यात्मानमुत्तापयतः A. B. D. ४. ओष्ठमात्र° D. ५. ब्रह्महा $C_1$. $C_2$. ६. वधयोरैक्यात् $C_2$.

हिनः कफविकारिण इव दिने दिने कटुकैरुद्वेज्यमानस्य सौगतस्येवार्थशून्यविज्ञप्तिजनितवैराग्यस्य काषायाण्यभिलषतो निशास्वपि मातृबलिपिण्डस्येव दिक्षु विक्षिप्यमाणस्याशौचगतस्येव कुशयनजनितसमधिकतरदुःखवृत्तेस्तुलायन्त्रस्येव पश्चात्कृतगौरवस्य तोयार्थमपि नमतोतिकृपणस्य शिरसा केवलेनासन्तुष्टस्य वचसापि पादौ स्पृशतो निर्दयवेत्रिवेत्रताडनत्रस्तयेव त्रपया त्यक्तस्य दैन्यसङ्कोचितहृदयदत्तावकाशयेवाहोपुरुषिकया परिवर्जितस्य कुत्सितकर्माङ्गीकरणकुपितयेवोन्नत्या वियुक्तस्य धनश्रद्धया क्लेशानुपार्जयतः स्वैवृद्धिबुद्ध्यावमानं संवर्धयतो मूढस्य सत्यपि विविधकुसुमाधिवाससुरभिणि वने तृष्णयाञ्जलिमुपरचयतः कुलपुत्रस्यापि कृतागस इव भीतभीतस्य समीपमुपसर्पतो दर्शनीयस्याप्यालेख्यकुसुमस्येव निष्फलजन्मनो विदुषोपि वैधेयस्येवापशब्दमुखस्य शक्तिमतोपि श्वित्रिण इव सङ्कोचितकरयुगलस्य समसमुत्कर्षेषु निरग्निपच्यमानस्य नीचसमीकरणेषु निरुच्छ्वासं म्रियमाणस्य परिभवैस्तृणीकृतस्य दुःखानिलेनानिर्वृतेर्ज्वलतो भक्तस्याप्यभक्तस्य निरूष्मणः सन्तापयतो बन्धून् विमानस्याप्यगतिकस्य

अमात्यवाहित्वेन निःश्रीकत्वमुच्यते । कटुकैः प्रतीहारैस्तीक्ष्णैश्च । अर्थशून्यया निष्फलया विज्ञप्त्या प्रार्थनया कृतेद्वेगस्य । बौद्धानामपि बाह्यवस्तुशून्यानि विज्ञानानि । अशौचं मृतकादि । कुँशयनं कुत्सितशय्या भूमिश्च कुः । पश्चात्कृतं वर्जितं पृष्ठतश्च कृतं । गौरवं महत्त्वं गुरुत्वं च । तोयशब्दो जलोपलक्षणार्थः । तोयं जलं च । पादस्पर्शनं पथोपि । त्रपया लज्जया । आहोपुरुषिकादर्पोद्या स्यात्संभावनात्मनि । स्वमात्मा धनं च । उक्तं च । स्वोज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोस्त्रियां धन इति । अधिवासः सौगंध्यं भावना च । वनं काननं जलं च । तृष्णा धनस्पृहा मृगतृष्णा च । विदुषो जानानस्य पंडितस्य च । वैधेयस्य मूर्खस्य । अपगतशब्दं मुखं यस्य लक्षहीनश्च । शब्दोपशब्दः । श्वित्रं कुष्टव्याधिभेदः । समास्तुल्यशीलाः । अनिर्वृतेरप्रतीतेः । अनिर्वृतेर्गमनत्यागाभावाच्च । भक्तस्य हितैषिणः । अभक्तस्याक-

१ स्तोकार्थमपि A. B. २. °पुरिषकया A, पुरीषकया B. ३. सुष्टद्धिबुद्ध्यापमानं A. B. D. ४. सोच्छ्वासं A. B. D. ५. दुःखानलेनानिर्वृतिज्वलितः A. B. T. ६. अत्र शून्यया $C_1$. ७. कुशयः $C_1$ $C_2$. ८. अपत्रपया $C_1$ ९. आहोपदर्पि° $C_2$.

च्युतगौरवस्याप्यधस्ताद्गच्छतो निःसत्त्वस्यापि महामांसविक्रयं कुर्वतो निर्मदस्याप्यस्वतन्त्रवृत्तेरयोगिनोऽपि ध्यानवशीकृतात्मनः शय्योत्थायं प्रणमतो दग्धमुण्डस्य गोत्रविदूषकस्य नक्तं दिनं नृत्यतो मनस्विजनं हासयतः कुलाङ्गारस्य वंशं दहतो नृपशोस्तृणेऽपि लब्धे कन्धरामवनमयतो जठरपरिपूरणमात्र[1]प्रयोजनजन्मनो मांसपिण्डस्य गर्भरोगस्य मातुरपुण्यानां कर्मणामाचरणाद्भूतकस्य किं प्रायश्चित्तं का प्रतिपत्तिक्रिया क्व गतस्य शान्तिः कीदृशं [2]जीवितं कः पुरुषाभिमानः किंनामानो विलासाः कीदृशी भोगश्रद्धा प्रबलपङ्क इव सर्वमधस्तान्नयति दारुणो दासशब्दो धिक्कुत्सितम्[3]उपयातु निधनं धनं । अभवनिर्भूतेरस्तु तस्या नमो भगवद्भ्यस्तेभ्यः सुखेभ्यस्तस्यायमञ्जलिरैश्वर्यस्य तिष्ठतु दूरत एव सा श्रीः शिवं स परिच्छदः करोतु यदर्थमुत्तमाङ्गं गां गमिष्यत्य[4]शापानुग्रहक्षमस्तपस्वी [5]मुखप्रियरतः क्लीबोपूतिमांसमयः क्रिमिरगण्यमानो [6]नरकः पादरजोधूसरोत्तमाङ्गो जङ्गमः पादपीठः

ब्धसंविभागस्य । विरोधः स्पष्टः सर्वत्र । ऊष्मा गर्वोऽपि । विमानस्य विगतमानस्य व्योमयानस्य च । गतिरुपायोऽपि । गौरवमादरोऽपि । महामांसं स्वकायोऽपि । मदो गर्वः क्षीबता च । अयोगिनो विपरीतदैववतो दरिद्रस्येत्यन्ये। अप्राप्तबलस्येत्यन्ये । चित्तवृत्तिनिरोधाभाववतश्च । दग्धमुण्डस्यातपहतशिरसो व्रतिभेदश्च दग्धमुण्डः । विदूषको नायकश्च नर्मसुहृच्च । वंशो वेणुः । दारुणो दुःसहः काष्ठस्य च सर्वमस्त्विति योजना । [7]मुग्धप्रियेत्यादावेवंविधः सेवकोऽपि यदि मर्त्यमध्ये गण्यते तद्राजिकोऽपि भोगी कथं न भवति पुलाको व्युप्तः कलमः कथं न स्यादिति सम्बन्धः । तपस्वी वराकोऽपि । [8]मुषिविपमानस्य सुखदायिनः । रतः सक्तः । मुख आरम्भे वदने च । प्रियं रतं मोहनं यस्य। क्लीबोऽशक्तः शरण्यश्च । पूति दुष्टगन्धं । अगण्यमानो न गणनार्हः । कुत्सितो नरो नरकः । अगण्यश्च मानो यस्य [9]सोऽगण्यमानो नरको भौमनामावीच्या-

---

१. प्रयोजनवतः A. B. D. २. सुखं A. B. ३ उपायातु तन्नियनं A. B. D. ४. K. $K_1$. $K_2$. Jambû ed. omit अशापानुग्रहक्षमस्तपस्वी. ५. असुखप्रियरतः A. B. D. T. ६. नरकपदे धूलिधूसरो° A. B. D. ७. असुखप्रियेत्यादौ $C_1$. अशापेत्यादौ $C_2$. ८. सुखे विद्यमानस्य $C_2$. ९. सो गणनाख्यः $C_2$.

पुंस्कोकिलः काकुकणितेषु शिखी सुखकरकेकासु स्थूलकूर्मः क्रोडकषणेषु श्वा नीचचाटुकरणेषु कृकलासः शिरोविडम्बनासु जाहक आत्मसङ्कोचनेषु वेणुर्मूर्च्छनासु वेश्याकायः करणबन्धक्लेशेषु पैलालं सत्त्वशालिषु प्रतिपादकः पादसंवाहनासु कन्दुकः करतलताडनेषु वीणादण्डः कोणाभिघातेषु वराकः सेवकोपि मर्त्यमध्ये राजिलोपि वा भोगी पुलाकोपि वा कलमो वरं क्षणमपि कृता मानवत्तां मानवता न मतो नमतस्त्रैलोक्याधिराज्योपभोगोपि मनस्विनस्तदेवमभिनन्दितास्मदीयप्रणयो देवोपि दिवसैः कतिपयैरेव परागतः प्राग्ज्योतिषेश्वर इति करोतु चेतसीत्युक्त्वा च तूष्णीमभूत् । अचिराच्च नमस्कृत्य निर्जगाम राजापि रजनीं तां कुमारदर्शनोत्सुकयस्त्रीकृतहृदयः समनैषीत् । आत्मार्पणं हि महताममूलमन्त्रमयं वशीकरणं प्रभाते च प्रभूतं प्रतिप्राभृतं प्रधानप्रतिदूताधिष्ठितं दत्त्वा हंसवेगं प्राहिणोत् । आत्मनापि ततः प्रभृति प्रयाणकैरनवरतैरभ्यमित्रं प्रावर्त्तत । कदाचित्तु राज्यवर्धनभुजबलोपार्जितमशेषं मालवराजसाधनमादायागतं समीप एवावासितं लेखहारकाद्भण्डिमशृणोत् । श्रुत्वा चाभिनवीभूतभ्रातृशोकहुताशनस्तद्दर्शनकातरहृदयो बभूव मूर्च्छान्धकारमिव विवेशातिष्ठच्च समुत्सृष्टसकलव्यापारः प्रतीहारनिवारणनिभृतानिःशब्दपरिजने निजमन्दिरे सराजकपरिवारस्तदागमनमुदीक्षमाणो मुहूर्त्तं ॥

दिर्वा । काकुकणितं मधुरवचनं भिन्नध्वनिर्वक्रत्वेकथनं निर्व्यापारत्वाच्छोकाद्वा । कृकलासोप्यनवरतं शिर उन्नमयन्नास्ते । जाहकः प्राणिभेदः । कूर्म इत्यन्ये । कोणो लगुडश्च । मूर्च्छना मोहः स्वराणां विशिष्टा स्थितिश्च । करणं शरीरं मंत्रो वा कामशास्त्रोदितकरणानि । यथा शालिषु पलालमप्रयोजनं तदसौ । राजिलो डुडुभाख्यो निर्विषः सर्पः । पुलाकः फलदरिद्रः । शालिः श्यामाकप्रायः । मानवतामहंकारिणां मानवस्य कर्म । मानवता पौरुषं । न मतः नेष्टः । नमतः प्रणामं कुर्वतः । मूकान्योषधयः । साधनं

---

१. काकुभणितेषु A. B. २. मधुरालापेषु स्थलकूर्मः A. B. D. ३. पलालराशिः A. B. D. T. ४. °संवाहनेषु A. B. ५. कण्डूकः B. ६. सुखभोगी A. B. ७. मानवत्तां मानवत्ता A. B. $C_1$. $C_2$. ८. कतिभिरेव A. B. D. ९. च A. B. १०. °कथनं $C_2$. ११. कृकिलासः $C_2$.

अथ भण्डिरेकेनैव वाजिना कतिपयकुलपुत्र[1]परिवृतो परिमलिन-सितवासा रिपुशरशल्यपूरितेन निखात[2]बहुलोहकीलकपरिकररक्षित-[3]स्फुटनेनेव हृदयेन हृदयलग्नैः स्वामि[4]सत्कृतैरिव श्मश्रुभिः शुचं समुप-दर्शयन्। दूरीकृतव्यायामशिथिल[5]भुजदण्डदोलायमानमङ्गलवलयैकशो-[6]षालंकृतिरनादरोपयुक्तताम्बूलविरलरागेण शोकदहनदह्यमानस्य हृद-यस्याङ्गारेणेव दीर्घनिःश्वासवेगनिर्गतेनाधरेण शुष्यता [7]स्वामिविरह-विधूतजीवितापराधवैलक्ष्यादिव बाष्पवारिपटलेन [8]पटेनेव प्रावृतव-दनो विशन्निव दुर्बलीभूतैः [9]स्वाङ्गमपत्रपयाङ्गैर्वमन्निव च व्यर्थीभूतभु-जोष्माणमायतैर्निःश्वसितैः पातकीवापराधीव द्रोहीव [10]मुषित इव छलित इव यूथपतिपतनविषण्ण इव वेगदण्डवारणः सूर्यास्तमय-निःश्रीक इव कमलाकरो [11]दुर्योधननिधनदुर्मना इव द्रौणि[12]रम्बुराशिरि-वापहृतरत्न इव सागरो राजद्वारमाजगाम। अवतीर्य च [13]तुरङ्गमादवन-तमुखो विवेश राजमन्दिरं दूरादेव च विमुक्ताक्रन्दः पपात [14]पादयोः। अवनिपतिरपि दृष्ट्वा तमुत्थाप्य प्रविरलैः पदैः प्रत्युद्गम्योत्थाय चाव-गाढमुपगूह्य [15]कण्ठे करुणमतिचिरं रुरोद शिथिलीभूतमन्युवेगश्च पुरेव पुनरागत्य निजासने निषसाद प्रथमप्रक्षालितमुखे च भण्डौ मुखं प्रक्षालयत् समतिक्रान्ते च कियत्यपि [16]कालकलाकलापे भ्रातृमरणवृ-त्तान्तमप्राक्षीद्यथाकथयच्च यथावृत्तमखिलं भण्डिः। अथ नरपतिःपुन-रपि तमुवाच राजश्रीव्यतिकरः क इति स पुनरवदीत्। देव देवभूयं गते देवे राज्यवर्धने [17]गुप्तनाम्ना च गृहीते कुशस्थले देवी राज्यश्रीः [18]परिभ्रश्य बन्धनाद्विन्ध्याटवीं [19]सपरिवारा प्रविष्टेति लोकतो वार्त्तामशृ-

हस्त्यादि। निभृतः सनयः। अथेत्यादि राजद्वारं भण्डिराजगामेति सम्बन्धः। श्मश्रुरिति शोकवशेन ततो विक्षिप्तत्वाद्वा। गवकं तादृशस्य। मधुनः क्षौद्र-

---

१. °परिवृतं A. B. २. °बहुलोदकील° A. B. D. ३ स्फुटितेनेव A. B. ४. °सुकृतैरिव A. B. D. T. ५. °भुजं A. ६. अलङ्कृतोनादरोपभुक्त° A. B. D. ७. स्वामिनि दिवं गते जीविता° A. B. D. ८. पटान्तेन प्रावृतवदेन A. B. ९. स्वाङ्गमेव त्रपयाङ्गैर्वमन्निव वदनेन प्रभूतभटोष्माणमायतैः श्वसितैः A. B. D. T. १०. मूर्च्छितं घूर्णित इव A. B. D. ११. दुर्योधनवधदुर्मना इव A. B. १२ द्रौणिरपहृत° K. $K_1$. Jambû ed. १३. तुरङ्गाद° A. B. १४ A. B. D. omit पादयोः १५. करं A. B. D. T. १६. काले K. Jambû ed. १७. गौडैर्गृहीते च A. B. D. T. १८. परिभ्रष्ट° A. B. १९. सपरिजना A. B.

णवम् । अन्वेष्टारस्तु तां प्रति प्रभुनाः प्रहिता जना नाद्यापि निवर्त्तन्त इति तच्चाकर्ण्य [1]भूपतिरब्रवीत् । [2]किमन्यैरनुपदिभिर्यत्र सा तत्र परित्यक्तान्यकृत्यः स्वयमेवाहं यास्यामि भवानपि कटकमादाय प्रवर्त्ततां गौडाधिपाभिमुखमित्युक्त्वा चोत्थाय स्नानभुवमगात् । कारितशोकश्मश्रुवपनकर्मणा च महाप्रतीहारभवनस्नातेन शारीरिकवसनकुसुमाङ्गरागालङ्कारप्रेषणप्रकटितप्रसादेन भण्डिना [3]सार्धमभुक्त निनाय च तेनैव सह वासरं । [4]अथापरेद्युरुपस्येव भण्डिर्भूपालमुपसृत्य व्यज्ञापयत् । पश्यतु देवः श्रीराज्यवर्धनभुजबलार्जितं साधनं सपरिवर्हं मालवराजस्येति नरपतिना स एवं [5]क्रियतामित्यभ्यनुज्ञातो दर्शयाम्बभूव । तद्यथानवरतगलितमदमदिरामोदमुखरमधुकरजूटाजटिलकरटपट्टपङ्किलगण्डान्गण्डशैलानिव जङ्गमान्गम्भीरगर्जितरवान् जलधरानिव महीमवतीर्णानुत्फुल्लसप्तच्छदवनामोदमुचः [6]शरद्दिवसानिव पुञ्जीभूताननेकसहस्रसंख्यान्करिणः चारुचामीकरचित्रचामर[7]मण्डलमनोहरांश्च हरिणरंहसो हरीन् बालातपविसरवर्षिणां च किरणैरनेकेन्द्रायुधीकृतदशदिशामलङ्काराणां विशेषान् विस्मयकृतः स्मरोन्मादितमालवी[8]कुचपरिमलदुर्ललितांश्च निज[9]ज्योत्स्नापूरप्लावितदिगन्तानपि तारान्हारानुडुपति[10]पादसञ्चयशुचीनि निजयशांसीव बालव्यजनानि [11]जातरूपमयनालं च निवासपुण्डरीकमिव श्रियः श्वेतमातपत्रमप्सरस इव बहुसमररससाहसानुरागावतीर्णा वारविलासिनीं [12]सिंहासनशयनासन्दीप्रभृतीनि राज्योपकरणानि कालायसनिगडनिश्चलीकृतचरणयुगलं च सकलं मालवराजलोकमशेषांश्च ससंख्यालेख्यपत्रान्[13]सालङ्कारपेडापीडान्कोशकलशान् । [14]अथालोच्य तत्सर्वमवनिपालः स्वीकर्त्तुं यथाधिकारमादिशदध्यक्षान् । अन्यस्मिंश्चाहनि हयैरेव [15]स्वसारमन्वेष्टुमुच्चचाल विन्ध्याटवीमवाप च परिमितैरेव प्रयाणकैस्तां । अथ प्रविशन्दूरादेव दह्यमानपष्टिकवुसविसरविसारिविभावसूनां [16]वन्यधान्यवीजधानीनां धूमेन धूसरिमाणमादधानैः शुष्कशाखा-

१. नरपतिः A. B. २. किमपरैः A. B. ३. सार्धमभुङ्क्त A. B. ४. अथानेद्युः पूरुनन्येव A. B. ५. भवत्वित्यनुमतः A. B. D. T. ६. शारदान् दिवसानिव पुञ्जीकृतान A. B. ७. °मण्डन° A. B. D. ८. °कुचमलनदुर° A. B. ९. ज्योत्स्नाकृतातपव्यतिकरान् हारान् A. B. D. T. १०. °करसंचयशुचीनि यशांसीव A. B. ११. जातरूपनालं A. जातरूपनीलं B. १२. °शयननान्दी° A. B. D. १३. अलङ्कारापीडपीडान् K., K.. Jambû ed. १४ अथावलोक्य A. B. १५. स्वभावं A. B. १६ धन्य° A. B.

सञ्चयरचितगोवाटवेष्टित[1]विकटवटैर्व्यापादित[2]वत्सरूपकरोषाविष्टगोपालककलिपतव्याघ्रयन्त्रैर्यन्त्रितवनपालहठाह्रियमाणपरग्रामीणकाष्ठिककुठारैर्गहन[3]तरुखण्डनिर्मितचामुण्डामण्डपैर्वनप्रदेशैः प्रकाश्यमानमटवीप्रायप्रान्ततया कुटुम्बभरणाकुलैः कुद्दालप्रायकृषिभिः [4]कृषीबलैरबलीवर्दैरवलद्भिरुच्छभागभाषितेन [5]भज्यमानभूरिखिलक्षेत्रखण्डलक्रमल्पावकाशैश्च काशिलैः कालायसैरिव कृष्णमृत्तिकाकठिनैः स्थानस्थानस्थापितस्थाणूत्थितस्थूलपल्लवै[6]र्दुरुपगमश्यामाकप्ररूढिभि[7]रलम्बुसबहुलैरविरहितकोकिलाक्षक्षुपैर्विरलविरलैः केदारैः कृच्छ्रात्कृष्यमाणैर्नाति[8]प्रभूतप्रवृत्तगतागतप्रहतभुवमुपक्षेत्रमुपरचितैरुच्चैर्मञ्चैश्च सूच्यमानश्वापदोपद्रवं दिशि दिशि च प्रतिमार्गद्रुम[9]कृतानां पथिकपादप्रस्फोटनधूलिधूसरै[10]र्वनपल्लवैर्लाञ्छितच्छायानामटवीसुलभसाल[11]कुसुमस्तबकाञ्चितनवखातकूपिकोपकण्ठप्रतिष्ठित[12]नागस्फुटानामच्छिद्रकटकालिपतकुटीरकाणां कुटिलकीटवेणीवेष्ट्यमान[13]सक्तुशारशरावश्रेणीश्रितानामध्वगजनजग्धजाम्बूफलास्थिशकलशबलसमीपभुवामुद्धूलितधूलीकदम्बकस्तबकप्रकरपुलकिनीनां कण्टकितकर्करीचक्राक्रान्तकाष्ठमञ्चिकामुषिततृषां तिम्यत्तलशीतलसिकतिलकलशीशमितश्रमाणामाश्यानशैवलश्यामलितालिञ्जरजायमानजलजाड्यमुदकुम्भाकृष्टपाटलशर्कराशकलशिशिरीकृतदिशां घटमुखघटित[14]कटहारपाटलापुष्पपुटानां शीकरपुलकितपल्लवपूलीपाल्यमानशोष्यसरसशिशुसहकारफल[15]जूटीजटिलस्थूणानां विश्राम्यत्कार्पटिकपेटकपरिपाटीपीयमानपयसामटवीप्रवेश[16]प्रपाणां शैत्येन त्याजयन्तमिव [17]ग्रैष्ममूष्माणं क्वचिदन्यत्र ग्राहयन्तमिवाङ्गारीयदारुसङ्ग्रहदाहिभिर्व्योकारैः सर्वतश्च प्रातिवेश्यविषयवासिना समासन्नग्रामगृहस्थगृहस्थापितस्थविरपरिपाल्यमानपाथेय[18]स्थै-

---

१. °निकट° A. .B. २. °वत्सरूपकरोपरचितव्याघ्रयन्त्रैर्यन्त्रित° K. $K_7$. Jambu ed. ३. °तरुषण्डानिर्दित° K. ४. कृषीबलैरवलद्भिरुच्चभाग° K., कृषीवलैरवलम्बद्भिरुच्चभाग° $K_2$. Jambú ed. ५. भज्यमानबहुखिल° A. B. D., भज्यमानभूरिशालिखलक्षेत्रजखण्डलकं $K_2$. Jambâ ed. ६ दुरुपशम° A. B. T. ७. अलम्बुसाबकुलैर्विरहित° A. B. D. ८. प्रभूतप्रहतभुवं A. B. K. ९. °दत्तानां A. B. १०. °नवपल्लवैः $K_2$. Jambû ed. ११. कुसुमार्चितनवखात° A. B. १२. नागस्फोटानां K., नागफणानां A. B. D. १३. सक्तुशरावश्रेणीनां A. B. D. T. १४. °करहाट° A. B. १५. °जूटकजटिल° A. B, °स्थाणूनां Jamb'i ed. १६. प्रायाणां A. B. १७. ग्रैष्ममूष्माणां A. B. D. १८. °स्थगिकेन A. B. T.

गितेन कृतदारुणदारुव्यायामयोग्याङ्गाभ्यङ्गेन स्कन्धाध्यासितकठोरकुठारकण्ठलम्बमानप्रातराशपुटेन पाटच्चरप्रत्यवायप्रतिपन्नपटच्चरेण [1]कालवेत्रकात्रिगुणव्रततिवलयपाशग्रथित[2]ग्रीवाग्रथितैः [3]पत्रवीटावृतमुखैः पीतकुं[4]टैरूढवारिणा पु[5]रःसरवलवद्बलीवर्दयुगसरेण नैकटिककुटुम्बिकलोकेन काष्ठसङ्ग्रहार्थमटवीं प्रविशता श्वापदव्य[6]धनव्यवधानबहलीसमारोपितकुं[7]टीकृतकूटपाशैश्च गृहीतमृगतन्तुतन्त्रीजालवलयवागुरैर्वहिर्व्याधैर्विचरद्भिरंसावसक्तवीतंसव्यालम्बमानबालपाशिकैश्च संगृहीतग्राहककक्करकपि[8]ञ्जलादिपिञ्जरकैः शाकुनिकैः सञ्चरद्भिश्चूतच्यं[9]ुत[10]लांसकलेशलिप्तलतावधूलद्वालम्पटानां च पेटकैः पाशिकाशिशूनामटद्भिस्तृणस्तं[11]म्बान्तरिततित्तिरितरलायमानकौलेयककुलचाटुकारैश्चलचलद्विहगमृगयां मृगयुयुवभिः क्रीडद्भिः परिणतचक्रवाककण्ठकषायरुचां शीधव्यानां वल्कलाना [12]कलापान्नातिचिरोद्धृतानां च धातुत्विषां धातकीकुसुमानां गौणी[13]रगुणिताः पिचव्यानां चातसीग[14]र्णपट्टमूलकानां पुष्कलान्सम्भारान्भारांश्च मधुनो माक्षिकस्य मयूराङ्गजस्याक्लिष्टमधूच्छिष्टच[15]क्रमालानां लम्बमानलां[16]मज्जकमुञ्जजूटकज[17]टानामपत्वचां खदिरकाष्ठानां कुष्ठस्य कठोरकेसरिसटाभारबभ्रुणश्च रोध्रस्य भूयसो भारकान् लोकेनादाय व्रजता प्रविचितविविधवनफलपूरितपिटकमस्तकाभिश्चाभ्य[18]र्णग्रामगत्वरीभिस्त्वरमाणाभिर्विक्रयचिन्ताव्यग्राभिर्ग्रामेयकाभिर्व्याप्तदिगन्तरामितस्ततश्च युक्तशूरशं[19]कुरशाकराणां

स्य । मयूराङ्गजस्य बर्हिपिच्छस्य । मधूच्छिष्टं सिक्थकं । लामज्जकमिति । [20]लामज्जकं सुनालं स्यादमृणालं लसं लघुरित्यमरः । उशीरभेद इत्यन्ये बभ्रुणः कपिलस्य रोध्रस्येति । रोध्रो लोध्रः शावरकः शिल्लकः शिल्कक्रस्तरस्तिरीटः कानहीरश्च शिल्लोशाबरपादपः । शकुरास्तरुणाः । शाक्करा बलीवर्दाः ।

---

१. कालवेत्रवात्रिगुणवृत्तविलयपाश° A. B. T. २. °ग्रीवागृहीतः A. B. D. ३. पत्रवीटकपिहितमुखैर्वार्टकुटैः A. B. D. T. ४. °कूटैः $K_1$. Jambû ed. ५. पुरःसरद्बली. A. B. ६ °व्यध्यन° A. B. D. ७. °कूटीकृत° A. B. ८. °पिङ्गलादि° A. B, °पञ्जरैः K° $K_1$. ९. °शुत° A. १०. °लसकालशालिप्तलतालग्नलद्वालम्पटानां A. B. D. ११. °तम्पा° A. B. १२. °कलापानति° A. B. D. १३. अगणिताः A. B. T. १४ °शणपूलकानां A. B. D. १५. चक्रिकामालानां A. B. १६. °लामञ्जक° A. B. D. १७. °जटालानां A. B. १८. अभ्यग्रग्राम° A. B. D. १९. °शर्कर° २०. लामज्जकं लघुलयमित्यमरः Jambû ed. A. B. T.

**पुराण[1]पांसूत्किरकरीषकूटवाहिनीनां धूर्गतधूलिधूसरसैरिकसरोषस्वर-सार्यमाणानां संक्रीडच्चटुलचक्रचीत्कारिणीनां शकटश्रेणीनां सम्पातैः सम्पाद्यमानदुर्बलोर्वीविरूक्षक्षेत्रसं[2]स्कारमारक्षाक्षिप्ताक्षिप्रदान्तवाहकद-ण्डोड्डीयमानहरिणहेलाला[3]ञ्छिततुङ्गवैणववृतिभिश्च निखात[4]गौरकरङ्कश-ङ्कुशङ्कितशशकशकालिततुङ्गशुङ्गैः [5]प्रयत्नप्रभृतविशङ्कटविटपैर्वाटैरैक्षवैः सुबहुभिः श्यामायमानोपकण्ठमतिविप्रकृष्टान्तरैश्च [6]मरकतस्निग्ध[7]स्नुहा-वाटवेष्टितैः कार्मुककर्मण्यवंशविटपसङ्कटैः [8]कण्ठकित[9]करञ्जराजिदुष्प्र-वेश्यैरुरुबूकवचा[10]वङ्ककवंशसुरससूरणशिग्रुग्रन्थिपर्णकगवे[11]धुकागर्मुद्-**

करीषं शुष्कगोमयं। उक्तं च। गोविड्गोमयमास्त्रियां। तत्तु शुष्कं करीषोऽस्त्रीति। सैरिको हालिकः। संक्रीडत् कूजत्। वृतिर्वाटोपान्ते लताकृतः प्राकारप्रायः। करङ्कः कङ्कालः। तदुपलक्षिताः शङ्कवः सरङ्कशङ्कवः। शुंगोऽग्रभागो वृतिरित्यन्ये। प्रभृताः पोषिताः। विशंकटा विस्तीर्णाः। विटपाः शाखाः। अतिविप्रकृष्टेत्यादि। अटवी कुटुम्बिनां गृहैरुपेतमिति वनग्रामविशेषणं। स्नुहा सुधावृक्षः। उक्तं च। स्नुक्स्नुहा च सुधावृक्षः शुम्भो निस्त्रिंशपत्रकः समन्तदुग्धी गण्डोरी सेहुण्डो वज्रकन्दक इति। कर्मणि साधुः कर्मण्यः। करञ्जो नक्तमालः। उक्तं च। करञ्जो नक्तमालः स्यात्प्रतीतश्चिरविल्वक इति। उरुबूक एरण्डः। उक्तं च। उरुबूकस्तथैरण्डो रुचको वातनाशनः। पञ्चाङ्गुलो वर्धमानश्चित्रो गन्धर्वपात्तथा। वचा उग्रगन्धा। उक्तं च। वचोग्रगन्धा गोलोमी जाटिला ग्रासलोमशेति। दङ्कको हरितकविशेषः। सुरसो भूतघ्नी। उक्तं च। सुरसस्तुलसी द्वःस्यादलसो बहुमञ्जरी। अपेती राक्षसी गौरी भूतघ्नी देवदुन्दुभिरिति। सूरणः कन्दविशेषः। शिग्रुः सौभाञ्जनः। उक्तं च। सौभाञ्जनः कृष्णगन्धा मुखभञ्जोऽथ शिग्रुक इति। ग्रन्थिपर्णं मुस्ताकारः सुगन्धिः कन्दविशेषः। उक्तं च। ग्रन्थिपर्णोऽशुकं वार्हिपुष्पं स्थाणेयकुन्दुरे इति। गवेधुका

१. °पांसूत्कर° A. B. २. संस्कारगारक्षिप्रक्षिप्ताक्षिप्रदण्डत्रासोड्डीयमान° A. B. D. T. ३. °विलम्बित° K. ४. °गोकरङ्क° A. B ५. प्रयत्नयन्त्रितविसङ्कट° A. B. ६. मकरकत° B. D. ७. °स्नुही A. B. ८. कण्टकिकरञ्जराजी° A. B. D. ९. °करट° K. K₁. १०. °वंश° A. B. D. T. ११. गवेधुकागण्डुत् A. B.

स्मगहनगृहवाटिकैर्निखातोच्चकाष्ठारोपितकाष्ठालुकलताप्रतानविहित-प्रच्छायैः परिमण्डलबदरीमण्डपकतलनिखातखादिरकीलकबद्धवत्स-रूपैः कथमपि कुकुटरटितानुमीयमानसन्निवेशै[1]रङ्गनागस्तिस्तम्बतल-विरचितक्षिप्रपाक्षिपूपिकावापिकैर्विकीर्णबदरपाटलपटलैर्वे[2]णुपोटपटल-नलकलितशरमयवृतिविहितभित्तिभिः किंशुकगोरो[3]चनारचितमण्डल-मण्डप[4]बल्वजबद्धाङ्गारराशिभिः [5]शाल्मलीफलतूलसञ्चयबहुलैः सन्निहि-तनलशालिशालूकखण्डकुमुदबीजवेणुतण्डुलैः [6]संगृहीततमालबीजैर्भ-स्ममलिनम्लानकाश्मर्यकूटव्याधूतक[7]टैराश्यानराजादनमदनफलस्फीतै-[9]र्मधूकासवमद्यप्रायैः [8]कुसुम्भकुम्भगण्डकुसूलैरविरहितराजमाषत्रपुस-तृणधान्यभेदः । गर्मुलुता गुल्मः । अप्रकाण्डे स्तम्बगुल्माविति । काष्ठालु-कलता अलाबुवल्ली । स्वरूपावत्सा वत्सरूपा । सन्निवेशो रचना । अगस्तिर्मु-नितरुः । पाक्षिपूपिका पक्षाणां वेत्रवलानिभाण्डभेदाः । पोटः शकलं । किंशु-कानि पलाशवृक्षपुष्पाणि । बल्वजास्तृणभेदा बन्धकाष्ठा इति प्रसिद्धाः । शाल्मली रक्तपुष्पा । उक्तं च । शाल्मली रक्तपुष्पा च कुकुटी स्थिरजी-विता । पिच्छिला तूलिनी मोचा कण्टकाढ्या सुपूरिणीति । तूलं कर्पासः । नलशालिः शालिभेदः । शालूकं पद्ममूलं । उक्तं च । पद्ममूलं तु शालूकं सलिलं तत्किरातकं । शालीनं पद्मकन्दं च जाकालूकं निगद्यत इति । काश्मर्यः कश्मीरीहीरः । काश्मीरी मधुमत्यापि । श्रीपर्णी सर्वतोभद्रा गाम्भीरी कृष्णमृत्तिकेति । कूटाः कुनाकानि । राजादनः कपीष्टः । उक्तं च । क्षीरो-दकस्तु राजयः क्षीरमृत्स्नः कपीनृपः । राजादनो दृढस्कन्धः कपीष्टः प्रियद-र्शन इति । मदनो रोधः । उक्तं च । मदनः शल्यको रोधो गालः पिण्डी-तकः फलं । भसरः करहाटश्च सुमनोतिसुपुष्पक इति । मधूको गुडपुष्पः । उक्तं च । गुडपुष्पो रोध्रपुष्पो मालप्रस्थोथ माधव इति । राजमाषो नि-

१. अङ्गणागस्तिस्तम्बतलविरचितपक्षिप्रपिकावापिकैः A. B. अङ्गनाशग्न्तिस्तम्भ° K. $K_1$. Jambû ed. २. पोटदलशर° K. $K_1$ Jambû ed. ३ °रोचनाविरचितमण्डनैः A. B. D. T. °रुचित° K. $K_1$. ४. °बिल्वण° K. ५. शाल्मलीचूलसंचय° A. B. D. ६. संगृहीतमाल्वीजैः K. $K_1$. Jambû ed. ७. °कटैराजनलराजादन° A. B. T. ८. कुसुम्भगर्भकुसूलैः A. B. ९. कण्डूका° Jambû ed.

**कर्कटिकाकूष्माण्डालाबुवीजैः पोष्यमाणवनबिडालमालुधाननकुलशालिजातजातकादिभिरटवीकुटुम्बिनां गृहैरुपेतं वनग्रामकं ददर्श तत्रैव च तं दिवसमत्यवाहयत् ॥**

**इति श्रीमहाकविचक्रचूडामणिश्रीबाणभट्टविरचिते श्रीहर्षचरिते महाकाव्ये छत्रलब्धिर्नाम सप्तम उच्छ्वासः सम्पूर्णः ॥ ७ ॥**

ष्पावः। त्रपुसं काङ्कुकः कर्कटिकादयः प्रसिद्धाः। मालुधाना मालुकावधाख्याः प्राणिभेदा नकुलादयश्च। इति श्रीशंकरकविवरविरचिते श्रीहर्षचरितसंकेते छत्रलब्धिर्नाम सप्तम उच्छ्वासः समाप्तः ॥ ७ ॥



१. जातकालिभिः. K K₁. २. चावसदिति K. K₁. Jambû ed. ३. छत्रलम्भो नाम A. B.

# ॥ अष्टम उच्छ्वासः प्रारभ्यते ॥

सहसा[1] सम्पादयता मनोरथप्रार्थितानि वस्तूनि ।
दैवेनापि[2] क्रियते भव्यानां पूर्वसेवैव[3] ॥ १ ॥
विद्वज्जनसम्पर्को नष्टेष्टज्ञातिदर्शनाभ्युदयः ।
कस्य न सुखाय भुवने[4] भवति महारत्नलाभश्च ॥ २ ॥

अथापरेद्युरुत्थाय पार्थिवस्तस्माद् ग्रामकान्निर्गत्य विवेश विन्ध्याटवीं । अटट[5] च तस्यामितश्चेतश्च सुबहून्दिवसान् । एकदा तु भूपतेर्भ्रमत एवाटविक[6]सामन्तस्य शरभकेतोः सूनुर्व्याघ्रकेतुर्नाम कुतोपि कज्जलश्यामलश्यामलतावलयेनाधिललाटमुच्चैः कृतमौलिबन्धमन्धकारिणीमकारणभुवा भ्रुकुटिभङ्गेन त्रिशाखेन[7] त्रियामामिव साहससहचारिणीं ललाटस्थलीं सदा समुद्वहन्तमवतंसितैकशुकपक्षकर्प[8]भाहरितायमानेन पिनद्धकाचरकाचमणिकर्णिकेन श्रवणेन शोभमानं किंचिच्चुल्लस्य प्रविरल[9]पक्ष्मणश्चक्षुषः सहजेन रागरोचिषा रसायनरसोपयुक्तं तारक्षवं क्षत-

सहसेत्यादि युगलकेन श्रीहर्षाभ्युदयशिवाकारमित्रराज्यश्रीप्राप्त्येकावकीलान्सूचयति । भव्यानां पूर्वसेवादैवेन शुभसंपादनेन शुभाभ्यासभाविताचिंता भूयोपि क्रियत इति प्रतिपाद्यते ॥ १।२ ॥

एकदा त्वित्यादौ व्याघ्रकेतुर्नाम कुतोपि शबरयुवानमादाय भूपतेरर्थात् समीपमाजगामेति सम्बन्धः । अटव्यां भव आटविकः । श्यामा गन्धप्रियंगुः । मौलयः केशाः । अन्धकारिणीं कृष्णां । त्रिशाखेन त्रिरेखेन । पिनद्धो बद्धः । काचरस्य कपिलस्य । काचमणेः कर्णिका यत्र तत्तेन । चुल्लश्चिल्लः । उक्तं च । स्युः क्लिन्नाक्षे चुल्लचिल्लपिल्लाः क्लिन्नेक्षिण चाप्यमीिति । तरक्षस्तु मृगादनः[9] । आरण्यश्वेत्यर्थः । तस्येदं तारक्षवं ।

---

१. All Mss prefix ॐ. २. देवेनापि A. B. D. ३. पूर्वसेवे च A. B. T. ४ भुवने A. ५. *Secunda manu* corrected to अटस्यामित A. ६. एवाटविकं सामन्तशरभकेतोः A. ७. त्रिशासिन° A. B. D. ८. °छचि° A. B. ९. किंचिच्चलस्य चक्षुषः प्रविरल° A. B. ९. मृगादनः $C_2$.

जमिव क्षरन्तमवनाटनासिकं चिपिटाधरं चिकिनचिबुकमहीनह- नूत्कटकपोलकूटास्थिपर्यतमीषदवाग्रग्रीवाबन्धं स्कन्नस्कन्धार्धभाग- मनवरतकठिन[1]कोदण्डकुण्डलीकरणकर्कशव्यायामविस्तारितेनांसले- नोरसा हसन्तमिव तटशिलाप्रथिमानं विन्ध्यगिरेरजगरगरीयसा च भुजयुगलेन लङ्घयन्तमिव तुहिनशैलसालद्रुमाणां द्राघिमानं वराहबाल- वलितवलय[2]बन्धनाभिर्नागदमनजूटिकावाटिकाभिर्जटिलीकृतपृष्ठे[3] प्र- कोष्ठे प्रतिष्ठां गतं गोदन्तमणिचित्रं त्रापुषं वलयं बिभ्राणमतुन्दिलमपि[4] तुण्डिभमहीरमणी[5]चर्मनिर्मितपट्टिकयोश्चित्रचित्रकत्वक्[6]चक्कारीकृतपरि- वारया संकुब्जाजिनजालकितया[7] शृङ्गमयमसृणमुष्टिभागभास्वरया पारतरसलेशलिप्तसमस्तमास्तिकया कृपाण्या करालितविशंकट[8]कटि- प्रदेशं प्रथमयौवनोल्लिख्यमानमध्यभागभ्रष्टमांसभरिताविव[9] स्थवीयां- सावूरुदण्डौ दधतम[10]च्छ[11]वलचर्ममयेन भल्लीप्रायप्रभूतशरभृतां[12] शबल- शार्दूलचर्मपट्टपीडितेनालिकुल[13]कालकस्बललोललोम्ना पृष्ठभागभाजा

तच्च क्वचिद्रसायनेनोपयुज्यते । अवनाटो निम्नः । चिपिटः स्थूल ईषल्लघ्वश्च । चिकिनं स्थूलेषद्ध्रस्वं । चिबुकमधराधः । उक्तं च । अधस्ताच्चिबुकं गण्डौ कपोलौ तत्परा हनुरिति । अवाग्रावनता । ग्रीवा कन्धरा । स्कन्नः शुष्को लम्ब- मानो वोन्नतो वा । स्कन्धो भुजाशिरोंसोस्त्री । अंसलेन बलवता । उरसा वक्षसा । अजगरः सर्पभेदः । द्राघिमाणं दीर्घत्वं । वराहः सूकरः । नागदमनो विषहर ओषधिभेदः । जूटिका लघुमूलं । वाटिकाः पूल्यः । गोदन्तः सर्पभेदः । त्रपुणा विकारस्त्रापुषं । त्रपुजतुनोः षुक् । अतुन्दिलं कृशोदरं । तुण्डिभं वृहन्नाभिकं । तुन्दिवल्लित्राटेर्भः । स हि व्यायामवशात् क्षाममध्य उन्नतनाभिस्तुण्डिभः । अही-

---

१. K. Jambû ed. omit कठिन. २. All the Kashmir Mss. omit वलय. ३. नागदमनजटिकाज्मटिकाभिर्जटाली° A. B. D. ४. तुन्दिलं A. B. ५. °हरिणी° A., अहीरिणी° B. ६. त्वक्कारकित K. $K_1$. $K_2$. ७. °जालिकया K. $K_2$. Jambû ed. ८. विसङ्कट° A. B., विशङ्कित° K. $K_3$. Jambû ed. ९. °भटिताविव A. B. १०. दधानं A. B. D. ११. अच्छभल्ल° A. B. D. T. १२. °भृता K. $K_1$. Jambû ed. १३. काललम्बलोल° A. B.

भस्त्राभरणेन पल्लवितमिव कार्श्यमुपदर्शयन्तमुत्तरत्रिभागोत्तंसितचाष-पिच्छचारुशिखरे खादिरजटानिर्माणे खरप्राणे प्रचुरमयूरपित्तपत्रलता-चित्रितत्वचि त्वचि सारगुणे[1] गुरुणि वामस्कन्धाध्यासितधनुषि[2] दोषि लम्बमानेनावाक्शिरसा शितशरकृत्तैकनलकविवरप्रवेशितेतरजङ्घाजनितस्वस्तिकबन्धेन[3] बन्धूकलोहितरुधिरराजिरञ्जितघ्राणवर्त्मना वपुर्वितति[4] व्यक्तविभाव्यमानकोमलक्रोड[5]रोमशुक्तिम्ना शशेन शितातटनीशि[6]खाग्रग्रथितग्रीवेण चापावृत[7]चञ्चूत्तानताम्रतालुना तित्तिरिणा वर्णकमुष्टिमिव मृगयाया दर्शयन्तं विषमविषदूषितवदनेन च विकर्णेन कृष्णाहिनेव मूलगृहीतेन व्यग्रदक्षिणकराग्रं जङ्गममिव गिरितटतमालपादपं यन्त्रोल्लिखित[8]मश्मसारस्तम्भमिव भ्रमन्तमञ्जनशिलाच्छेदमिव चलन्तमयःसार[9]मिव गिरेर्विन्ध्यस्य गलन्तं पालकं करिकुलानां कालपाशं कुरंगयूथानां धूमकेतुं मृगराजचक्राणां महानवमीमहं[10] महिषमण्डलानां हृदयमिव हिंसायाः फलमिव[11] पापस्य कारणमिव कलिकालस्य कामुकमिव कालरात्रेः[12] शबरयुवानमादायाजगाम। दूरे[13] च स्थापयित्वा विज्ञापयांबभूव देव सर्वस्यास्य[14] विन्ध्यस्य स्वामी सर्वपल्लीपतीनां प्राग्रहरः शबरसेनापतिर्भूकम्पो नाम तस्यायं निर्घातनामा स्वस्त्रीयः[15] सकलस्यास्य विन्ध्यकान्ताराराण्यस्य पर्णानामप्यभिज्ञः किमुत प्रदेशानामेनं पृच्छतु देवो योग्योयमाज्ञां कर्तुमिति कथिते च निर्घातस्तु क्षितितलनिहितमौलिः प्रणाममकरोत् । उपनिन्ये च तित्तिरिणा सह शशोपायनमवनिपतिस्तु संमानयन्स्वयमेव तमप्राक्षीत् । अंगाभिज्ञा यूयमस्य सर्वस्योद्देशस्य विहारशीलाश्च दिवसेष्वेतेषु भवन्तः[16] सेनापतेर्वान्यस्य वा तदनुजीविनः कस्यचिदुदाररूपा[17] नारीनगता[18] भवेद्दर्शनगोचरामिति । निर्घातस्तु भूपालालापनप्रसादेनात्मानं बहुमन्यमानः पुनरपि प्रणनाम दर्शितादरं[19] च व्यज्ञापयत् । देव प्रायेणात्र हरिण्योपि नापरिगताः संचरन्ति सेनापतेः कुत एव नार्यो

१. सारगुरुणि E. K₁ Jambû ed. २. °स्कन्धाध्यासिनि A. B. D. ३. °धर° A., °धूर° B. ४ विततिं विभाव्यमान° A. B. ५. °लोम° A. B. ६. शातादनीं A. B. D. ७ चपावृत A. B. ८. यन्त्रोल्लासित° A. B. D. ९. अधः सारमिव गलन्तं गिरेर्विन्ध्यस्य पालकं A B. T. १० A. has the marginal gloss उत्सव. ११. प.शक-मिव A. B. १२. कालरात्र्याः A. B. D. १३. सुदूरे A. B. १४. स वनस्यास्य A. B. १५. स्वयः B. १६. भवतः A. D. १७. उदाररूपेह A., उदाहरणरूपेह B. १८. नारी आगता K. K₁. Jambû ed १९. दर्शितादरश्च A. B.

[1]नोऽस्त्येवंरूपा काचिदबला । तथापि देवादेशादिदानीमन्वेषणं प्रति प्रतिदिनमनन्यकृत्यैः क्रियते यत्नः । इतश्चार्धगव्यूतिमात्र एव मुनिमहिते महति महीवर[2]मालामूलरुहि महीरुहां [3]षण्डेऽपि पिण्डपाती प्रभूतान्तेवासिपरिवृतः पाराशरी दिवाकरमित्रनामा गिरिनदीमा[4]श्रित्य प्रतिवसति स यदि विन्देद्वार्त्तामिति तच्छ्रुत्वा नरपतिरचिंतयत् । श्रूयते हि [5]तत्रभवतः सुगृहीतनाम्नः [6]स्वर्गतस्य [7]ग्रहवर्मणो बालमित्रं मैत्रायणीयस्त्रयीं [8]विहाय ब्राह्मणायनो विद्वानुत्पन्नसमाधिः सौगते मते युवैव काषायाणि गृहीतवानिति । प्राय[9]शश्च जनस्य जनयति सुहृदपि दृष्टो [10]भृशमाश्वासमभिगमनीयाश्च गुणाः सर्वस्य कस्य न प्रतीक्ष्यो मुनिभावो भगवती च वैधेयेऽपि धर्मगृहिणी गरिमाणमा[11]पादयति प्रव्रज्या किं पुनः सकलजनमनो[12]मुषि विदुषि जने यतो नः कुतूहलि हृदयमभूत्[13]सततमस्य दर्शनं प्रति प्रासङ्गिकमेवेदमापतितमतिकल्याणं पश्यामः प्रयत्नप्रार्थितदर्शनं जनमिति प्रकाशं चाब्रवीत् । अङ्ग समुपदिश तमुद्देश्यं यत्रास्ते स पिण्डपातीत्येवमुक्त्वा च तेनैवोपदिश्यमानवर्त्मा [14]प्रावर्त्तत गन्तुम् । अथ क्रमेण गच्छत [15]एवं तस्यानवकेशिनः कुड्मलितकर्णिकाराः प्रचुरचम्पकाः स्फीतफलेग्रहयः फलभर[16]भरितनमेरववो नीलदलनलद[17]नारिकेलनिकराः

रमणी नामा द्विवक्त्रः । चि[18]त्रकच्छायया गन्धतोऽप्यपरसर्पत्रासकः । पाराशरी भिक्षुः । विन्देल्लभेत । मैत्रायणीयशाखाया अध्येता ऋग्यजुःसामनामानस्त्रयो वेदास्त्रयी स्मृता । ब्राह्मणायनो द्विजवरिष्ठः । समाधिरेकाग्रता । अभिगमनार्हा अभिगमनीयाः । प्रतीक्ष्यः पूज्यः । वैधेये मूर्खे । उक्तं च । अज्ञे मूर्खे यथा जातमूढवैधेयबालिशा इति । अथ क्रमेण गच्छत एवास्यैवंविधास्तरवो दर्शनमवतेरुरिति संबन्धः अवकेशी निष्फलतरुः । उक्तं च । वन्ध्योफलोवकेशी च कर्णिकारो द्रुमोत्पलः । परिव्याध इति पर्यायः । स्यादबन्ध्यः फलेग्रहिः ।

१. नास्त्येवं A. B. D. २. °मेखला° A. B. D. ३ खण्डेपि. B. ४. आसृत्य A. B. D. ५. तत्रभगवतः A. B. T. ६ स्वर्गस्य तस्य A. ७ ब्रह्मवर्मणः K. $K_1$. ८. अपहाय A. B. D. ९. प्रेयसश्च A. B. T. १०. दृशामाश्वासं A. B. ११. आरोपयति A. B. D. १२. °मुखि A. १३. सततमद्य K. Jambû ed. १४. प्रवृत्ते A. B. D. १५. एवास्य A. B. T. १६. °नमित° A. B. D. १७. °नालिकेर° A. K., °नासिकेर° B. १८ चित्राकारश्चायया $C_1$. $C_2$.

हरि[1]केसरसरलपरिकराः कोरकनिकुरम्बरोमाञ्चितकुरबकराजयो रक्ताशोकपल्लवलावण्यलिप्यमानदशदिशः प्रविकसितकेसररजोवि-सरबध्यमानवा[2]सरधूसरिमाणः स्वरजःसिकतिलतिलकतालाः प्र[3]वि-चलितहिङ्गवः प्रचुरपूगफलाः प्रसवपूगपिङ्गलप्रियङ्गवः। परागपि[4]ञ्जरि-तमञ्जरीपुंज्यमानमधुपमञ्जु[5]शिञ्जाजनितजनमुदो मदमलमेचकितमुचुकु-न्दस्कन्धकाण्डकष्यमाणानिःशङ्ककरिकरटकण्डूतयो[6]ड्डीयमानानिःशङ्कच-टुलकृष्णशारशावसकलशाद्वलसुभगभूमयस्तमःकालतमतमालमाला-मीलितातपाः स्तबकदन्तुरितदेवदारवस्त[7]रलताम्बूलीस्तम्बजालाङ्कित-जम्बूर्ज[8]म्भीरवीथयः कुसुमरजोधवलधूलीकदम्बचक्रचुम्बितव्यो[9]मानो

नमेरुस्तरुभेदः। नलदः सल्लकी मांसी नारिकेलस्तु लाङ्गलीत्यमरः। हरिके-सरः । उक्तं च। चा[10]म्पेयः केसरो नागकेसरः कां[11]चनाह्वयः। सरला देवदारवः । कोरकः कलिका कुरबका ये योषितामालिंगनैः पुष्यन्ति। रक्ताशोका ये सालक्तककामिनीचरणाहताः फुल्लंति । केसरा बकुलाः। ये कान्तागंडूषशीधुसेकेन विकसन्ति। तिलकाः क्षुरकाः। ये प्रसादितकामिनी-दर्शनमात्रेण कुसुमिताः संपद्यंते। हिंगु रामठं। उक्तं च। सहस्रवेधि जतुकं वाल्हीकं हिंगु रामठमिति । पूगः क्रमुखवृक्षः। प्रसवपूगाः पूगफलसमूहाः। प्रियंगुः श्यामलता। श्यामा तु वनिताह्वया। लता गोव[12]र्न्धनी गुंद्रा प्रियंगुः फलिनी फली। विश्वक्सेना गन्धफली कारम्भः प्रियकश्च सः। पुंज्यमानः संह्रि-यमाणः। मुचुकुंदाः पुष्पतरुभेदाः। करटौ गण्डौ। तमालस्तापिछः। उक्तं च। शक्रपादयः पारिभद्रकः। भद्रदा[13]रु द्रुकिलिमं पीतहदारु च दारु च। पूतिकाष्ठं च सप्त स्युर्देवदारुणीति । तांबूली नागवल्ली। जम्बू वृक्षभेदः। जंभीरा दन्तशठाख्याः। उक्तं च। स्युर्जम्भीरे दन्तशठजम्भजम्भीरजम्भला इति। समीरणो मरुवकः प्रस्थपुष्पः फणिज्जकः जंभीरे इति। धूलीकदम्बाख्या प्रे-

---

१. करि° A. B. D. K. $K_1$. २. °चारु° K. $K_1$. ३. प्रगलित° A. B. D. ४. °पिञ्जर° A. B. D. ५. °सिञ्जित° A. ६. उड्डीयमानचटुलकृष्णसारशावशाद्वलसुभग° A. B. D. ७. तरुण° A. B. T. ८. °जम्बीर A. B. K. ९. °व्योमाभोगा A. B. १०. वास्येयः Jambû ed. ११. काञ्चनाकयः $C_1$. १२. गोवर्धनी $C_2$ १३. द्रुकिलिमं $C_2$

बहलमधुमोक्षोक्षिताक्षितयः परिमलघटितघनघ्राणतृप्तयः कतिपयदिवसप्रसूतकुक्कुटीकु[2]टीकृतकुटजकोटराश्चटकासञ्चार्यमाणवाचाटचाट[3]कैरक्रियमाणचाटवः सहचरीचारणचञ्चुरचकोरचञ्चवो निर्भयभूरिभुरुण्ड[4]भुज्यमानपाककपिलपीलवः सद्दा[5]फलकट्फलफलविशसननिःशूकशुकशकुन्तशातितशलाटवः शैलेयसुकुमारशिलातलसुख[6]शायितशशशिशवः शेफालिकाशिफाविवरविस्रब्धविवर्त्तमानगौधेरराशयो निरातङ्करङ्कवो निराकुलनकुलकुलकेलयः कलकोकिलकुलकवलितकलिकोद्गमाः सहकारारामरोमन्थायमानचमूरयूथा यथासुखनिषण्ण[12]नीलाण्डजमण्डला निर्विकारवृकविलोकयमानपोतपीतगवयधेनवः श्रवणहारिसनीडगिरिनितम्बनिर्झरनिनादनिद्रा[13]नन्दमन्दायमानकरिकुलकर्णतालदुन्दुभयः समासन्नकिन्नरीगीत[14]रवरसमानरुरवः प्रमुदिततरतरक्षवः

ष्मिका वृक्षभेदाः । कुटजो गिरिमल्लिका । उक्तं च । कुटजो गिरिमल्लिकेति । चटकाया अपत्यानि चाटकैराः । चारणं भोजनं । चंचुरा निपुणाः । भुरुण्डाः पक्षिभेदाः । पीलुफलं स्रंसीकं । कट्फलः श्रीपर्णाख्यो वृक्षः । उक्तं च । श्रीपर्णिका कुमुदिका कुंभी कैडर्य[15]कट्फलाविति । विशसनं भेदनं । निःशूको निर्दयः । शलाटून्यपक्वानि फलानि । उक्तं च । आमे फले फलाटुः स्यादिति । शिलासु भवं शैलेयं । शेफालिका लताभेदः । स्त्रियां गौधेरगौधारगौधेया गोधिकात्मजेति । रङ्कवो मृगभेदाः । सहकार आम्रः । उक्तं च । आम्रश्चूतो रसालोसौ स[16]हकारोतिसौरभ इति । रोमन्थायमाना उद्गीर्य चर्वन्तः । चमरा मृगविशेषाः । नीलाण्डजा मृगभेदाः । वृका आरण्यश्वानः । पोतः शिशुः । पोतः पाकोर्भको डिम्बः पृथुकः शावकः शिशुरिति । गवया गोसदृशाः प्राणिभेदाः । तरक्षुस्तु मृगादनः । हरिद्रा पीतद्रुः ।

---

१. °व्रण° $K_1$. Jambû ed. २. कुटीरकृत° A. B. ३. चटकाः D., °चाटकैर° A. B. ४. °भज्यमान° A. B. D. ५. °फलितक्तकल° A. B. ६. °शायितशरभशिशवः $K_1$. Jambû ed. ७. °महा° K., शफा° A. B. ८ °विष्टब्ध° B. ९. अनातङ्करङ्कवः A.B. १०. सहाकारामृगरोमन्थ्यायमान° A. ११. °चमूरु° K. Jambû ed. १२. °वीताण्डमृगमण्डलाः A. B. D. T. १३. निद्रामन्द° A. B. १४. °स्वररमाण° A. B. १५. कैटर्य° $C_1$. १६. सहाकारोधसौरमः $C_1$. $C_2$.

क्षतहरितहरिद्राद्रवरज्यमाननववराहपोतपोत्रवलयो गुञ्जाकुञ्जगुञ्ज-
ज्जाहका जातीफलकसुमशालिजातकवलयो दशनकुपितकपिपोतपेट-
कपाटितपाटलभुखकीटपुटकाः लकुचलम्पटगोलाङ्गूललङ्घ्यमानलवलयो
बद्धवालुकालवालवलयाः कुटिलकुटावलिवलितवेगगिरिनदिकास्रोत-
सो निबिडशाखाकाण्डलम्बमानकमण्डलवः सूत्रशिक्यासक्तरिक्तभिक्षा-
कपालपल्लवितलतामण्डपा निकटकुटीकृतपाटलमुद्राचैत्यकमूर्त्तयश्ची-
वराम्बररागकषायोदकदूषितोद्देशा मेघमया इव कृतशिखण्डिकुलको-
लाहला वेदमया इवापरिमितशाखाभेदगहना माणिक्यमया इव महा-
नीलतनवस्तिमिरमया इव सकलजननयनमुषो यामुना इवोर्ध्वीकृता
महाह्रदा मरकतमणिश्यामलाः क्रीडापर्वतका इव वसन्तस्याञ्जनाचल-
मया इव पल्लवितास्तनया इवाटवीजाता विन्ध्यस्याद्रेः पातालान्धकार-
राशय इव भित्वा भुवमुत्थिताः प्रतिप्रवेशका इव वर्षावासराणामशां-
वतारा इव कृष्णार्धरात्रीणामिन्द्रनीलमयाः प्रासादा इव वनदेवतानां
पुरस्ताद्दर्शनपथमवतेरुस्तरवः । ततो नरपतेरभवन्मनस्यदूरव-
र्तिना खलु भवितव्यं भदन्तेनेत्यवतीर्य च गिरिसरिति समुपस्पृश्य

उक्तं च । अथ पीतद्रुः कालेयकहरिद्रवो दार्वी पचंपचा दारु हरिद्रा पर्जनीत्यपि । वराहः सूकरः । पोत्रं सूकरमुखं । गुंजा रक्तिका । जाहकाः शालिजातकाश्च प्राणिभेदाः । पाटकाः कीटाः । पुटका आलयाः । लकुचो लिकुचो डुहुरित्यमरः । गोलांगूलाः कृष्णमुखवानराः । लवलयो लताभेदः । कमण्डलुर्मुनिजलभाण्डं । शिक्यं भिक्षाभाजनं जालिका । निकटकुटीषु कृता मुद्रया कृतानामल्पचैत्यानां मूर्त्तयो येषु । शाखा लताः कठाद्याश्च । महानीला अत्यन्तकृष्णा महानीलाश्च प्राणिभेदाः । नयनमुषो रम्यत्वात्प्रकाशनाच्च । प्रतिप्रसवकाः प्रतिच्छन्दकाः । भदन्त इति सौगतप्रतिमानां

---

१. °वनवराह° A. B. २. °वलयाः A. B. T. ३. जातीजालसुम° A. B. ४ जातयः A. B. ५ °पुटाः काल° A. ६. °लुण्ठ्यमान° B. ७ बद्धवालुकावालवलयाः A. B. ८. °वेगि° A. B. K. ९. मेघा इव A. B. १०. °मुखः A. ११ यामुनमहाह्रदा इवोर्ध्वीकृताः A. B. D. T.

युगपद्भिश्रामसमयसमुन्मुक्तहेषाघोषबधिरीकृताटवीगहनामस्मिन्नेव प्रदेशे स्थापयित्वा वाजिसेनामवलम्ब्य च तपस्विजनदर्शनोचितं विनयं हृदयेन दक्षिणेन च हस्तेन माधवगुप्तमंसे विरलैरेव राजभिरनुगम्यमानश्चरणाभ्यामेव प्रावर्त्तत गन्तुम् । अथ तेषां तरूणां मध्ये नानादेशीयैः स्थानस्थानेषु स्थाणूनाश्रितैः शिलातलेषूपविष्टैर्लताभवनान्यध्यावसद्भिररण्यानीनिकुञ्जेषु निलीनैर्विटपच्छायासु निषण्णैस्तरुमूलानि निषेवमाणैर्वीतरागैरार्हतैर्मस्करिभिः श्वेतपटैः पाण्डुरभिक्षुभिर्भागवतैर्वर्णिभिः केशलुञ्चकैः कापिलैर्लोकायतिकैर्जैनैः काणादैरौपनिषदैरैश्वरकारणिकैः कारन्धमिभिर्धर्मशास्त्रिभिः पौराणिकैः साप्ततन्तवैः शैवैः शाब्दिकैः पाञ्चरात्रिकैरन्यैश्च स्वान् स्वान्सिद्धान्ताञ्छृण्वद्भिरभियुक्तैश्चिन्तयद्भिश्च प्रत्युच्चरद्भिश्च संशयानैश्च निश्चिन्वद्भिश्च व्युत्पादयद्भिश्च विवदमानैश्चाभ्यस्यद्भिश्च व्याचक्षाणैश्च शिष्यतां प्रतिपन्नैर्दूरादेवावेद्यमानमतिविनीतैः कपिभिरपि चैत्यकर्म कुर्वाणैस्त्रिसरणपरैः परमोपासकैः शुकैरपि शाक्यशासनकुशलैः

पूजावचनं । उद्यानमित्यन्ये । अथेत्यादौ तरूणां मध्ये दिवाकरमद्राक्षीदिति संबन्धः। नानादेशीयैर्वीतरागैरिति चार्हतैरित्यादीनां सर्वेषां विशेषणं । स्थाणूनाश्रितैरित्यादि तु केषांचित् । स्थाणुरस्त्री ध्रुवः शंकुरित्यमरः । महारण्यमरण्यानी विस्तारो विटपोस्त्रियामित्यमरः । मूलं बुध्नोङ्घ्रिनामकः । अर्हन् देवतयेषा ते आर्हतास्तैर्नग्नक्षपणकैः । मस्करिभिः परिव्राजकैः । श्वेतपटैः श्वेतोर्णाकम्बलीवासोभिर्नग्नक्षपणभेदैः । पाटूरभिक्षुभिस्त्यक्तकाषायैः । भागवतैर्विष्णुभक्तैः । वर्णिभिर्ब्रह्मचारिभिः । केशलुंचनैर्यथार्थनामभिः । लोकायतिकैश्चार्वाकैः । जैनैर्बौद्धैः । कापिलैः सांख्यैः । काणादैर्वैशेषिकैस्तार्किकैः । औपनिषदैर्वेदान्तवादिभिः । ऐश्वरकारणिकैर्नैयायिकैः । कारन्धमिभिर्धातुवादिभिः । पाषांडभेदैरित्यन्ये । धर्मशास्त्रिभिः स्मृतिज्ञैः । शाब्दिकैर्वैयाकरणैः । पाचरात्रिकैर्वैष्णवभेदैः । सिद्धांतानागमान् । त्रिसरणेति । त्रयो बुद्धधर्मसंघाः।

---

१. °समन्मुक्त° B. २. °गहनं तस्मिन्नेव. A. B. ३. वाजिसैन्यं A. B. D. ४. माधवगुप्तमसौ A. B. T. ५. प्रावर्तयत A. B. ६. कैशलुञ्चकैः A. B. ७. औपनिषदिकैरीश्वरकारिणिकारन्धमिभिः A. B. D. ८. वैशेषतार्किकैः Jambû ed.

कोशं समुपदिशद्भिः [1]शिक्षापदोपदेशदोषोपशमशालिनीभिः शारिका-
भिरपि धर्म[2]देशनां दर्शयन्तीभिरनवरतश्रवण[3]गृहीतालोकैः कौशिकैरपि
बोधिसत्त्वजातकानि [4]जपद्भिर्जातसौगतशीलशीतलस्वभावैः शार्दू-
लैरप्यमांसाशिभिरुपास्यमानमासन्नोपान्तो[5]विष्टविस्रब्धानेककेसरि-
शावकता मुनिपरमेश्वरमकृत्रिम इव सिंहासने निषण्णमुप-
शममिव पिबद्भिर्वनहरिणैर्जिह्वालताभि[6]रुपलिह्यमानपादपल्लवं
वामकरतलनिविष्टेन नीवारमश्नता पारावतपोतकेन[7] कर्णोत्पलेनेव
प्रियां मैत्रीं प्रसा[8]दयन्तमितरकरकिसलयनखमयूखलेखाभिर्जनितजन[9]-
व्यामोहमुद्ग्रीवं मयूरं मरकतमणिकरकमिव वा[10]रिधाराभिः पूरयन्त-
मितस्ततः पिपील[11]कश्रेणीनां श्यामकतण्डुलकणान्स्वयमेव किरन्तमरु-
णेन चीव[12]रपटलेन [13]म्रदीयसा संवितं बहलबालातपानुलिप्तमिव पौरन्दरं
दिग्विभागमुल्लिखितपद्मरागप्रभाप्रतिमया रक्तावदातया देहप्रभया
पाटलीकृतानां काषायग्रहणमिव दिशामप्युपदिशन्तमनौद्धत्यादधो-
मुखेन मन्दमुत्कुलितकुमुदाकरेण स्निग्धधवलप्रसन्नेन चक्षुषा जनक्षुण्ण-
[14]क्षुद्रजन्तुजीवनार्थममृतमिव वर्षन्तं सर्वशास्त्राक्षरपरमाणुभिरिव नि-
र्मितं परमसौगतमप्यव[15]लोकितेश्वरमस्खलितमपि [16]तपसि लग्नमा-

शाक्यो बुद्धः । कोशो बौद्धसिद्धान्तो वसुबन्धुकृतः । देशना कथनं । बोधिः समाधिः । तत्प्रधानं सत्त्वं बुद्धभट्टारकः । तदीयानि जातकानि जीमूतवाहनादिजन्मकथाः । मुनिवरमीश्वरं । मुनीश्वरं बुद्धं । [17]अपकारिण्यभिप्रीतिर्मैत्री । पिपीलकः कीटभेदः । चीवरं मुनिवासः । संवीतमाच्छादितं । उल्लिखितश्चरणोल्लीढः । क्षुद्राः स्वल्पाः । अवलोकितेश्वरनामा बुद्धविशेषोपि । अस्खलितमपीति । स्खलितो ह्यन्यत्र लग्नो भवति । सत्त्वभ्रष्टशीलस्तपःस्थश्च ।

---

१. शिष्या° A. B. D. २. °देशिनां A., °दर्शितां B. ३. °गृहीतानि A. B. T. ४. जल्पद्भिः A. B. D. ५. अमांसाशिभिरुपास्यमानमानसोपान्तविश्रब्धा° A. B. ६ रूपलेलिह्यमान° A B. ७ पारापत° A. B. D. ८. प्रसाधयन्तं A. B. D. ९. °जल° A. B. D. १०. वार° A B. ११. पिपीलिका° A. B. १२ °पटेन A. B. १३ प्रथ्वीयसा A. प्रश्रीयसा. B. १४. °क्षुण्णाक्षुद्रक्षुद्र° A. B. D. १५. अनवलोकितेश्वरं A. B. T. १६. तमसि B. १७. अपकारिण्यपि प्रीतिः $C_1$.

लोकमिव यथावस्थितसकलपदार्थप्रकाशकं दर्शनार्थ्यीनां सुगतस्याप्यभिगमनीयमिव धर्मस्याप्याराधनीयमिव प्रसादस्यापि प्रसादनीयामव मानस्यापि माननीयमिव वन्द्यत्वस्यापि वन्दनीयमिवात्मनोपि स्पृहणीयमिव ध्यानस्यापि ध्येयमिव ज्ञानस्यापि ज्ञेयमिव जन्म जपस्य नेमिं नियमस्य तत्त्वं तपसः शरीरं शौचस्य कोशं कुशलस्य वश्मे विश्वास्य सर्वस्वं सद्वृत्ततायाः दाक्ष्यं दाक्षिण्यस्य पारं परानुकम्पाया निर्वृतिं सुखस्य मध्यमे वयसि वर्त्तमानं दिवाकरमित्रमद्राक्षीत् । अतिप्रशान्तगम्भीराकारारोपितबहुमानश्च सादरं दूरादेव समं शिरसा वचसा मनसा च ववन्दे ॥

दिवाकरमित्रस्तु मैत्रीमयः प्रकृत्या विशेषतस्तेनापरेणादृष्टपूर्वेणामानुषलोकोचितेन सर्वाभिभाविना महानुभावाभोगभाजा भ्राजिष्णुना भूपतेरप्राकृतेनाकारविशेषेण तेन चाभिजात्यप्रकाशकेन गरीयसा प्रश्रयेण चाल्हादितश्चक्षुषि च चेतसि च युगपद्गृहीत् । वीरस्वभावोपि च सम्पादितससंभ्रमाभ्युत्थानः संकलय्य किंचिदुद्गमनकेन विलोलं विलम्बमानं वामांसाच्चीवरपटान्तमुत्क्षिप्य चानेकाभयदानदीक्षादक्षिणो दक्षिणं महापुरुषलक्षणलेखाप्रशस्तं हस्तं स्निग्धमधुरया वाचा सगौरवमारोग्यदानेन राजानमन्वग्रहीत् । अभ्यनन्दच्च स्वागतगिरा गुरुमिवाभ्यागतं बहुमन्यमानः स्वेनासनेनोद्भूमत्रेति निमन्त्रयांचकार । पार्श्वे स्थितं च शिष्यमब्रवीत् । आयुष्मन्नुपानय कमण्डलुनपादोदकमिति । राजा त्वचिन्तयत् । अलोहः खलु संयमनपाशः सौजन्यमभिजातानां स्थाने खलु तत्रभवान् गुणानुरागी ग्रहवर्मा बहुशो वर्णितवानस्य गुणानिति । प्रकाशं चाबभाषे । भगवन्भवद्दर्शनपुण्यानुगृहीतस्य मम पुनरुक्त इवायमार्यप्रयुक्तः प्रतिभात्यनुग्रहश्चक्षुष्प्रमाणप्र-

दिवाकरमित्रस्तु तेन भूपतावाकारविशेषेण प्रश्रयेण च युगपच्चक्षुषि चेतासि चाल्हादित आनंन्दितः सन्नन्वग्रहीदिति संबंधः । महानुभावानामुत्तमानां । आभोगं टङ्कं भजत इत्याकारविशेषणं । संकलय्य संयम्य । उद्गमनमुत्थानं । आगमनमागतं सुखेनागतं स्वागतं । स्वागतप्रश्नार्थं गीस्तया अत्रोपविशत ।

---

१ मान्यस्यापि A. B. D. २. यमस्य K. K1. ३. सद्वृत्तं K. K2. ४. निवास A. B. D. ५. निवृत्तिं A. B. ६. °गम्भीरकोरा° A. B. D. ७ युगपदगृह्यत A. B. ८. धीर° A. B. D. ९. उद्गमनवेगविलोलं A. B. D. १०. °दक्षं दक्षिणं A. B. ११. आर्यः A. B. १२. °चक्रे A. B. १३. °प्रदान° A. B.

सादस्वीकृतस्य च परकरणमिवासनादिदानोपचारचेष्टितमतिभूमिर्भूमिरेवासनं भवादृशां पुरः संभाषणामृताभिषेकप्रक्षालितसकलवपुषश्च मे प्रदेशवृत्तिः पाद्यमर्घ्यपार्थकमासतां भवन्तो यथासुखमासीनोहमित्यभिधाय क्षितावेवोपाविशत् । अलङ्कारो हि परमार्थतः प्रभवतां प्रश्रयातिशयो रत्नादिकस्तु शिलाभार इत्याकलय्य पुनः पुनरभ्यर्थ्यमानोपि यदा न प्रत्यपद्येत पार्थिवो वचनं तदा स्वयमेवासनं पुनरपि भेजे भदन्तो भूपतिमुखनलिननिहितनिभृतनयनयुगलनिगडनिश्चलीकृतहृदयश्च स्थित्वा काञ्चित्[2]कालकक्ष्यां कलिकालकल्मषकालुष्यमिव क्षालयन्नमलाभिर्द[3]न्तमयूखमालाभिर्मू[4]लफलाभ्यवहारसंभवमुद्गमन्निव च परिमलसु[5]भगं विकचकुसुमपटलपाण्डुरं,लतावनमवादीत् । अद्यप्रभृति न केवलमयमं[6]निन्द्यो वन्द्योपि प्रकाशितसत्सारः संसारः किं नाम नालोक्यते जीवद्भिरद्भुतं येन रूपमचिन्तितोपनतमिदं दृक्पथमुपगतमेवंविधैरनुमीयन्ते जन्मान्तरावस्थितसु[7]कृतानि हृदयोत्सवैरिहापि जन्मनि दत्तमेवास्माकममुना तपःक्लेशेन फलमसुलभदर्शनं दर्शयता देवानां प्रियमा तृप्तेरापीतममृतमीक्षणाभ्यां जातं निरुत्कण्ठ मानसं निर्वृत्तिसुखस्य महद्भिः पुण्यैर्विना न विश्राम्यन्ति सज्जने त्वादृशि दृशः सुदिवसः स यस्मिञ्जातोसि सा सुजाता जननी या सकलजीवलोकजीवितजनकमजनयदायुष्मन्तं पुण्यवन्ति पुण्यान्यपि तानि येषामसि परिणामः सुकृततपसस्ते परमाणवो ये तं[10]व परिगृहीतसर्वावयवास्तत्सुभगं सौभाग्यमाश्रितोसि येन भव्यः स पुं[11]रुषभावोपि भवत्यवस्थितो यो यत्सत्यं मुमुक्षोरपि मे पुण्यभाजमालोक्य पुनः श्रद्धा जाता मानुजजन्मनि नेच्छद्भिरप्यस्माभिर्दृष्टः कुसुमायुधः कृतार्थमद्य चक्षुर्वनदेवतानामद्य सफलं जन्म वनपादपानां येषामसि गतो गोचरममृतमयस्य भवतो वचसां माधुर्यं

भूमिमतिक्रान्तातिभूमिः । स्वर्गादिस्थानरूपा प्रदेशवृत्तिरेकदेशो वा । नयनयुगकमेव निगडो बन्धनशृंखला । निवृत्तिश्चित्तविभ्रमः । अमृतमयस्येति । यतोमृतमयस्त्वमतो भवद्वचसां माधुर्यं कार्यं प्रयोज्यं कारण-

---

१. निषीदं तु भवन्तः A. B. D. २. °कालकलां A. B. ३ दशन° A. B. D. ४. °मूकफला° A. B. T. ५. सुभगविकचमिव A. B. ६. अभिन्द्योपि A. B. ७. अवस्थासुकृतानि A. B. ८. ° A. निर्वृत्ति B. ९ जननम° A. B. १० यैः परिगृहीतास्तवावयवास्तत्सुभाग्यं A. B.D. ११. मानुषं° A. B.

कार्यमेवास्य त्वीदृशि शैशवे विनयस्योपाध्यायं ध्यायन्नपि न संभावयामि भुवि सर्वथा शून्य आसीदजाते दीर्घायुषि गुणग्रामो धन्यः स भूभृद्यस्य वंशे मणिरिव मुक्तामयः संभूतोस्यैवंविधस्य च पुण्यवतः [1]कथंचित्प्राप्तस्य केन प्रियं समाचराम इति पारिप्लवं चेतो नः सकलवनचरसार्थासाधारणस्य कन्दमूलफलस्य गिरिसरिदम्भसो वा के वयम्। अपरोपकरणीकृतस्तु [2]कायकलिरयमस्माकं सर्वस्वमवशिष्टामिष्टातिथ्याय स्वायत्ताश्च विद्यन्ते [3]विद्याबिन्दवः कतिचिदुपयोगं तु न प्रीतिर्विचारयति यदि च नोपरुणाद्धि [4]कश्चित्कार्यलवमरक्षणीयाक्षरं वा कथनीयं तत्कथयतु भवान् स श्रोतुमभिलषति हृदयं सर्वमिदं [5]नः केन कृत्यातिभारेण भव्यो भूषितवान्भूमिमेतामभ्रमणयोग्यां कियद्वाधिर्वायं शून्याटवीपर्यटनक्लेशः कल्याणराशेः कस्माच्च संतप्तरूपेव ते तनुरियमसन्तापार्हा विभाव्यत इति। राजा तु [6]सादरतरमब्रवीत्। आर्य दर्शितसंभ्रमेणानेन मधुरसविसरं घृतमिव हृदय[7]धृतिकरमनवरतं वर्षता वचसैव ते सर्वमनुष्ठितं धन्योस्मि यदेवमभ्यर्हितमनुपचरणीयमपि मान्यो मन्यते मामस्य च महावनभ्रमणपरिक्लेशस्य कारणमवधारयतु मतिमान् मम हि विनष्टनिखिलेष्टबन्धोर्जीवितानुबन्धस्य निबन्धनमेकैव यवीयसी स्वसावशेषात् सापि भर्तुर्वियोगाद्वैरिपरिभवभयाद्भ्रमन्ती कथमपि विन्ध्यवनमिदम[9]शुभशबरबलबहुलमगणितगजकुलकलिलमपरिमितमृगपतिशरभभयमुरुमहिषमुषितपथिकगमनमतिनिशितशर[10]कुशपरुषमघटशतविषममविशदयोगादतस्तामन्वेष्टुं [11]वयमनिशं निशि निशि च सततमिमामटवीमटामो न चैनामासादयामः

सदृशेन कार्येण भवितव्यमित्युक्तेः। शून्या निराश्रयाः। वंशो वेणुरपि। मुक्तामयस्त्यक्तदोषो मौक्तिकरूपश्च। पारिप्लवं दोलाधिरूढमित्यर्थः। अनेकदुःखहेतुत्वात्काय एव कलिः। अरक्षणीयाक्षरमिति। यद्यस्मात्क्रमुपरि विश्वासोस्तीत्यर्थः। अतिशयेनाल्पा यवीयसी कनिष्ठा। अयोगाविरुद्धविधिवैधुर्यादिदं विन्ध्यवनमनिशं प्रविष्टेति पदयोजना। अनिशं सदा। अटवीमटामो गच्छामः

१. कथ्यमपि A. B. २. कामः A. B. T. ३. विषबिन्दवः A. B. D. ४. कश्चिदर्थ्यलवं A. B. ५. न केन A. B. ६. सादरं तमब्रवीत् A. B. D. T. ७. °व्यतिकर° A. B. ८ स्वासावशिष्टा K₂ Jambû ed., स्वसावशेषा K. ९. अशिवशबर A. B. १०. °कुशरकुशपुरुषं B. ११. वयमनिशि निशि A. B. D.

कथयतु च गुरुरपि यदि कदाचित्काचित्कुतश्चिद्वने चरतः श्रुतिपथमुपगता [1]तद्वार्त्तेति ॥

अथ तच्छ्रुत्वा जातोद्वेग इव भदंतः पुनरभ्यधात् । धीमन्न खलु कश्चिदेवंरूपो वृत्तान्तोस्मानुपागतवानभाजनं हि वयमीदृशानां प्रियाख्यानोपायनानां [2]भवतामित्येवं भाषमाण एव तस्मिन्नकस्मादागत्यापरः शामिनि वयसि वर्त्तमानः संभ्रांतरूप इव पुरस्तादुपरचिताञ्जलिर्जातकरुणः प्रक्षरितचक्षुर्भिक्षुरभाषत । भगवन्[8]भदन्त महत्करुणं वर्त्तते बालैव च बलवद्व्यसनाभिभूता [3]भूतपूर्वापि कल्याणरूपा स्त्री शोकवेगविवशा वैश्वानरं विशति संभावयतु तामप्रोषितप्राणां भगवानभ्युपपद्यतां समुचितैः समाश्वासनैरनुपरतपूर्वं कृमिकीटप्रायमपि दुःखितं दयाराशेरार्यस्य गोचरगतमिति । राजा तु जातानुजाशंकः [4]सोदर्यस्नेहाच्चान्तर्द्रुत इव दुःखेन दोदूयमानहृदयः कथमपि गद्गदिकागृहीतकण्ठो विकलवाग्बाष्पायमानदृष्टिः पप्रच्छ । पाराशरिन्कियद्दूरे सा योषिदेवंजातीया जीवेद्वा [5]कालमेतावन्तमिति पृष्टा वा त्वया भद्र कासि कस्यासि [6]कुतोसि किमर्थं वनमिदमभ्युपगतासि विशसि [7]च किंनिमित्तमनलमित्यादितश्च प्रभृति कार्त्स्न्येन कथ्यमानमिच्छामि श्रोतुं कथमार्यस्य गता दर्शनगोचरमाकारतो वा कीदृशीति । तथाभिहितस्तु भूभुजा भिक्षुराचचक्षे । महाभाग श्रूयतामहं हि प्रत्यूषस्यैवाद्य वन्दित्वा [8]भगवंतमनेनैव गिरिनदीरोधसा सैकतसुकुमारेण यदृच्छया विहृतवानातिदूरमेकस्मिंश्च वनलतागहने गिरिनदीसमीपभाजि भ्रमरीणामिव हिमहतकमलाकरकातराणां रसितं सार्यमाणानामातितारतानवर्त्तिनीनां वर्णातन्त्रीणामिव झांकारमेकतानं नारीणां [9]रुदितमधृतिकरमाति-

यदृच्छया स्वेच्छाया सार्यमाणानां श्रुतिरीत्यास्थाप्यमानानां स्वराणां विशिष्टमवस्थानमेकलोपे द्विलोपे वा ताना मूर्च्छना वा वर्णाः स्थायिसञ्चार्यारोह्यवरोहिणश्चत्वारस्तदुपलक्षिताः । तंत्र्यो वर्णतंत्र्यः । एकतानमेकरूपमनवरतं वा ।

१ तत्प्रवृत्तिरिति A. B. D. T. २. भवतां $K_2$. Jambû ed. ३. भूतपूर्वकल्याणा कापि कल्याणा या स्त्री A. B. D. ४. सोदर्य° B. ५. कालमेतवन्तमपि A. B. D. ६. कुतो वासि किमर्थं वा मनसि खेदमभ्युपगतासि A. B. D. ७. वा A. B. T. ८. भदन्तम° A. B. ९. रुदितरवमतिकरं $A_1$. °रवमहतिकरं B., रुदितमध्यविकरमतितरुण° K.

करुणमाकर्णितवानस्मि समुपजातकृपश्च[1] गतोस्मि तं प्रदेशं दृष्टवानस्मि च दृषत्खण्डखण्डिताङ्गुलिगलल्लोहितेन पार्ष्णिप्रविष्टशरशलाकाशल्यशूलसंकोचितेन[2] चक्षुषा चाध्वनीनश्रमश्वयथुनिश्चलचरणेन च स्थाणवव्रणव्यथितगुल्फबद्धभूर्जत्वचा च वातखुडखेदखञ्जजङ्घाजातज्वरेण च पांसुपाण्डुरपिण्डकेन च खर्जूरजूटजटाजर्जरित[3]जानुना च शतावरीविदारितोरुणा च[4] विदारीदारिततनुदुगूल[5]पल्लवेन चोत्कटवंशविटपकण्टकोटिपाटितकञ्चुक[6]कर्पटेन च फललोभावलम्बितानम्रबदरीलताजालकैरुत्कण्टकैरुल्लिखितसुकुमारकरोदरेण च कुरङ्गशृङ्गोत्खातैः कन्दमूलफलैः कदर्थितबाहुना ताम्बूलविरहविरसमुख[7]खण्डितकोमलामलकीफलेन च कुशकुसुमाहतिलोहितानां श्वयथु[8]मतामक्ष्णां लेपीकृतमनःशिलेन च [9]कष्टवकीवतालूनालकलेशेन च केनचित्किसलयोपपादितातपत्रकृत्येन केनचित्कदलीदलव्यजनवाहिना केनचित्कमलिनीपलाशपुटगृहीताम्भसा केनचित्पाथेयीकृतमृणालपूलिकेन केनचिच्चीनांशुकदशाशिक्यनिहितना[10]लिकेरकोशकलशीकलितसरलतैलेन कतिपयावशेषशोकविकलकलामूककुब्जवामनबधिरबर्बराविरलेनाबलानां चक्रवालेन परिवृतामापत्कालेपि कुलोद्गतेनेवामुच्यमानां प्रभा-

दृष्टवानित्यादावास्मि चैवंविधानामबलानां चक्रवालेन परिवृतां योषितं दृष्टवानिति संबन्धः। लोहितं रक्तं। पार्ष्णिः पादाधोदेशः। स्थाणुरस्त्री ध्रुवः शंकुः। स्थाणोरिमे स्थाणवाः। वातखुडो गतिप्रतिघातलक्षणो वातव्याधिः। पिच्छकं केशकलापः। शतावरी शतमूली। विदारी क्षीरशुक्ली। सरला देवदारवः। शोकेन विकला विक्षिप्ताः। कलामूकाः पंडकाः। एवमादयोन्तःपुररक्षिणः। बर्बरा एतद्देशजाः। सरसैः प्रत्यग्रैः सार्द्रैश्च। क्षतानि व्रणाः। अरबिन्दिनी पद्मिनी। छायातपप्रतिपक्षजातिच्छाया च कान्तिः। उक्तं च। छाया सूर्यप्रिया

---

१. °क्षपश्च A. B. २. संकोचिततया सुरखेद° A. B. ३. °जर्जुरित° A. B. ४. चादारी° A. B D. T. ५. °दुकूलेन A. B. ६. °कञ्चुककपाटकेन A. B. D. ७. °मण्डित° A. B. ८. श्वयतामक्ष्णां K. Jambû ed. ९. कष्टाकिलतालूना K. $K_{1}$., कण्टकितलूनालककेशक्लेशेन A. B. D. T. १०. °नारिकेल° $K_2$. Jambû ed.

लेपिना लावण्येन प्रतिबिम्बितैरासन्नवनलताकिसलयैः सरसैर्दुःखक्ष-
तैरिवान्तःपटलीक्रियमाणकायां[1] कठोरदर्भाङ्कुरक्षतक्षारिणा क्षतजे-
नानुसरणालक्तकेनेव[2] रक्तचरणामुत्तालेनान्यतरनारीधृतेनारविन्दिनी-
दलेन कृतच्छायमपि विच्छायं मुखमुद्वहन्तीमाकाशमपि शून्यत्या-
तिशयानां मृण्मयीमिव निश्चेतनतया[3] मरुन्मयीमिव निःश्वाससं-
पदा पावकमयीमिव संतापसंतानेन सलिलमयीमिवास्रुप्रस्रवणेन[4]
वियन्मयीमिव निरवलम्बनतया[5] तडिन्मयीमिव पारिप्लवतया
शब्दमयीमिव च परिदेवितवाणीबाहुल्येन मुक्तमुक्तांशुकरत्नकु-
सुमकनकपत्राभरणां कल्पलतामिव महावने पतितां परमेश्व-
रोत्तमाङ्गपातदुर्ललिताङ्गां गङ्गामिव गां गतां वनकुसुमधूलिधूसरित-
पादपल्लवानां प्रभातचन्द्रमूर्तिमिव लोकान्तरमभिलषन्तीं निजजलमोक्ष-
कदर्थितदर्शितधवलायितनेत्रशोभां मन्दाकिनीमृणालिनीमिव परिम्ला-[6]
यमानां दुःसहरविकिरणसंस्पर्शखेदनिमीलितकुमुदिनीमिव दुःखेन
दिवसं नयन्तीं दग्धदशाविसंवादितां प्रत्यूषप्रदीपशिखामिव क्षामक्षा-[7]
मां पाण्डुरवपुषं पार्श्ववर्तिवारणाभियोगरक्ष्यमाणां वनकरिणीमिव
महाह्रदे[8] निमग्नां प्रविष्टां वनगहने ध्याने च स्थितां तरुतले मरणे च प-

कान्तिः प्रतिबिम्बमनातप इति। शून्यतेन्द्रियरहितत्वमपि। सन्तापः सन्तानो दुःख-
विच्छेद औष्ण्यप्रबन्धश्च। मुक्ताढ्यमंशुकं मालवदेशजमुत्तरीयं। मुक्ता मौक्तिकं
च। अल्पेशवोऽशुकाश्च। महावनं विस्तीर्णारण्यं विपुलजलं च। परमेश्वरोत्तमाङ्ग-
पातो राजशिरश्छेदो हरमूर्ध्निगतश्च। इष्टानि[9] ललितानीप्सितानि येषु तान्यङ्गानि
यस्या दुर्ललितं च हेवाकः। गां गतामिति वाहनाभावाद्भूमिमवतीर्णां च।
वनकुसुमानि जलजातत्वात् कुमुदानि च पादा रश्मयोऽपि। लोकान्तरं परलोकं
मेरुद्वितीयपार्श्वं च। जलमस्रु च नेत्रमक्षिमूलं च। दग्धदशा दुरवस्थाः प्लुष्टदीपधा-
मानश्च। प्रत्यूषः कल्यं। वारणा निषेधो हस्ती च वारणः। महाह्रदे निमग्ना-
मनुसरणार्थं पुण्यजलाशयस्नातां विस्तीर्णसरस्यवसन्नां च। स्थितां कृतनिश्चयां च।

---

१. °पाटलीकृतकायां A. B. २. अनुमरणा° A. B. ३. नित्येतनतया A. ४. °प्रसरेण
A. B. D. ५. निरवलम्बत्वेन A. B. ६. म्लानां A. B. D. ७. क्षामपाण्डुर°
A. B. ८. महाह्रदयेन् मग्नां B. ९. दृष्टानि $C_1$. $C_2$

तितां धात्र्युत्सङ्गे महत्यनर्थे च दूरीकृतां भर्त्रा सुखेन च विरेचित भ्रमणेनायुषा चाकुलां केशकलापेन मरणोपायेन च विवर्णितामध्व-धूलिभिरङ्गवेदनाभिश्च दग्धां चण्डातपेन वैधव्येन च धृतमुखीं पाणिना मौनेन च गृहीतां प्रियसखीजनेन मन्युना च तथा च भ्रष्टैर्बन्धुभिर्विलासैश्च मुक्तेन श्रवणयुगलेनात्मना च परित्यक्तैर्भूषणैः सर्वारम्भैश्च भग्नैर्वलयैर्मनोरथैश्च चरणलग्नाभिः परिचारिकाभिर्दर्भाङ्कुरसूचीभिश्च हृदयविनिहितेन चक्षुषा प्रियेण च दीर्घैः शोकैश्च श्वसितैः केशैश्च क्षीणेन वपुषा पुण्येन च पादयोः पतन्तीभिर्वृद्धाभिरस्रुधाराभिश्च स्वल्पावशेषेण परिजनेन जीवितेन चालसामुन्मेषे दक्षामस्रुमोक्षे सन्ततां चिन्तासु विच्छिन्नामाशासु कृशां काये स्थूलां श्वसिते पूरितां दुःखेन रिक्तां सत्त्वेनाध्यासितामायासेन शून्यां हृदये निश्चलां निश्चयेन चलितां धैर्यादपि च वसतिं व्यसनानामाधानमाधीनामवस्थानमनवस्थानामाधारमधृतीनामावासमवसादानामास्पदमापदामभियोगमभाग्यानामुद्वेगमुद्वेगानां कारणं करुणायाः पदं परायत्तयत्नताया योषितं दृष्ट्वा चिन्तितवानस्मि च चित्रमीदृशीमप्याकृतिमुपतापाः स्पृशंतीति। सा तु समीपमुपगते मयि तदवस्थापि सबहुमानमानतमौलिः प्रणतवती। अहं तु प्रबलकरुणाप्रेर्यमाणस्तामालापितुकामः पुनः कृतवान्मनसि कथामिव महानुभावामेनामामन्त्रये वत्स इत्यतिप्रणयो मातरिति चाटुर्भगिनीत्यात्मसंभावना देवीति परिजनालापो राजपुत्रीत्यस्फुटमुपासिक इति मनोरथः स्वामिनीति भृत्यभावाभ्युपगमो भद्र

विगतो धवो यस्यास्तद्भावो वैधव्यं। धवो भर्त्ता। बन्धुभिरित्यादावित्थंभूतलक्षणे तृतीया। मुक्तेन निरलङ्कारेण। अलसां दक्षां चेत्यादौ विरोधो बोद्धव्यः। अनवस्थानां दुःखरूपक्रियाणां। अभियोगमुद्योगं। कथमिवेत्यादि समानः प्रश्न इत्यर्थः। महानुभावां मनस्विनीं। अतिप्रणयो महती प्रीतिः। अनाभि-

१. महानर्थे A. B. D., महामरणे K. K₁. २. निर्विण्णां भ्रमणेना° A. B. ३ विवर्णीकृतामध्वधूलिभिर्बहुवेदनाभिश्च A. B. D. ४. वृत्ति° A. B. D. ५. परिवारिकाभिर्दर्भाङ्कुरसूचीभिश्च A. B. ६. दीर्घैः श्वसितैरटकैश्च A. B. D. T. ७. श्वसितेन K₁ ८. धैर्येण A. B. ९. आपणमापदां A. B. D. १०. पारं धारयत्तताया: ११. K. योषितां A. B. १२. A. B. D. omit दृष्ट्वा. १३. सबहुमानमानमित° A. B. D.

इतीतरस्त्रीसमुचितमायुष्मतीत्यस्यामवस्थायामप्रियं कल्याणिनी[1]ति दे[2]शाविरुद्धं चन्द्रमुखीत्यमु[3]निमतं बाल इत्यगौरवोपेतमार्य इति जरारोपणं पुण्यवतीति फलविपरीतं भवतीति सर्वसाधारणमपि च कासीत्यनभिजातं किमर्थं रोदिषीति दुःखकारणस्मरणकारि मा रोदीरिति शोकहेतुमनपनीय न शोभते समाश्वसिहीति किमाश्रित्याश्वासयामि स्वागतमिति यातयामं सुखमास्यत इति मिथ्या। इत्येवं चिन्तयत्येव मयि तस्मात्स्त्रैणादुत्थायान्यतरा योषिदार्यरूपेव शोकविक्लवा समुपसृत्य कतिपयपलितशारितं शिरो नीत्वा महीतलमतुलहृदयसंतापसूचकैरस्रुबिन्दु[4]भिश्चरणयुगलं दहन्ती ममातिकृपणैरक्षरैश्च हृदयमभिहितवती। भगवन् सर्वसत्त्वानुकम्पिनी प्रायः प्रव्रज्या प्रतिपन्नपरदुःखक्षपणदीक्षादक्षाश्च भवन्ति सौगताः करुणाकुलगृहं च भगवतः शाक्यमुनेः शासनं सकलजनोपकारसज्जा सज्जनता जैनी परलोकसाधनं च[5] धर्मो मुनीनां प्राणपरिरक्षणाच्च न[6] परं पुण्यजातं जगति गीयते जनेनानुकम्पाभूमयश्च प्रकृत्यैव युवतयः किं पुनर्विपदभिभूताः साधुजनश्च सिद्धक्षेत्रै[7]मार्यवचसां यत इयं नः स्वामिनी म[8]रणेन च मातुः प्रवसनेन च पितुरभावेन च भर्तुः परलोकगमनेन च भ्रातुर्भ्रंशेन च शेषस्य बान्धववर्गस्यातिमृदुहृदयतया चानपत्यतया च निरवलम्बना प[9]रिभवेन च नीचारातिकृतेन प्रकृतिमनस्विन्यमुना च महाटवीपर्यटनक्लेशेन कदर्थितसौकुमार्या दग्धदैवदत्तैरेवंविधैर्बहुभि[10]रपराधपरिव्यसनैर्विक्लवीकृतहृदया दारुणं दुःखमपारयन्ती सोढुं निवारयन्तीमना[11]क्रान्तपूर्वं स्वप्रेष्ववगणय्य गुरुजनमनुनयन्तीरखण्डितप्रणया नर्मस्वपि स[12]मवधीर्य प्रियसखीर्विज्ञापयन्त-

जातमनुचितं। यातयामं जीर्णप्रायं। शासनं शास्त्रं। सज्जनता साधुजनस-

---

१. कल्याणीति $K_2$. Jambû ed. २. दशायां K. ३. अमुनिमयं A. B. D. ४. बिन्दुभिर्दहन्तीव मे चरणयुगलमतिकृपणैः A. B. D. T. ५. च घनं धर्मः $K_2$. Jambû ed. ६. न परं नामपरं A. B. D. ७. °क्षेत्रमाप्तवचसां A. B. T. ८. मरणेन पितुरभावेन भर्तुः प्रवासेन च भ्रातुर्भ्रंशेन च K. $K_1$, Jambû ed. ९. परिसचेतननीचारा° A. B. १०. बहुभिरुपर्युपरि A. B. K. ११. अनतिक्रान्त° A. B. K. १२. समवधूय A. B.

मशरणमनाथमश्रुव्याकुलनयनमपरिभूतपूर्वं मनसापि परिभूय भृत्यव-र्गमग्निं प्रविशति परित्रायतामार्योपि तावदसह्यशोकापनयनोपायो-पदेशनिपुणां व्यापारयतु वाणीमस्यामिति । चातिकृपणं व्याहरन्ती-महमुत्थाप्योद्विग्नतरः शनैरभिहितवान् । आर्ये यथा कथयसि तथास्म-द्गिरामगोचरोयमस्याः पुण्याशयायाः शोकः शक्यते पाये चेन्मुहूर्त-मात्रकमपि त्रातुमुपरिष्टान्न व्यर्थेयमभ्यर्थना भविष्यति मम हि गुरुरपर इव भगवान्सुगतः समीपगत एव सा कथिते मयास्मिन्वृदन्ते नियतमागमिष्यति परमदयालुर्दुःखान्धकारपटलभिदुरैश्च सौगतैः सुभाषितैः स्वकीयैश्च दर्शितनिदर्शनैश्च नानागमगुरुभिर्गिरां कौशलैः कुशलशीलामेनां प्रबोधपदवीमारोपयिष्यतीति । तच्च श्रुत्वा त्वरतामा-र्य इत्यभिदधाना सा पुनरपि मे पादयोः पतितवती सोहमुपगत्य त्वर-माणो व्यतिकरमिममधृतिकरमशरणं कृपणबद्धयुवतिमरणमतिकरुण-मत्रभवते गुरवे निवेदितवानिति ॥

अथ भूभृद्भिक्षवं समवधार्य तद्भाषितमस्रमिश्रितमश्रुतेपि स्वसुर्ना-म्नि निम्नीकृतमना मन्युना सर्वाकारसंवादिन्या दशयेव दूरीकृतसंदे-हो दग्ध इव सोदर्यावस्थाश्रवणेन श्रवणयोः श्रमणाचार्यमुवाच । आर्ये नियतं सैवेयमनार्यस्यास्य जनस्यातिकठिनहृदयस्यातिनृशंसस्य मन्दभाग्यस्य भगिनी भागधेयैरेतामवस्थां नीता निष्कारणवैरिभि-र्वराकी विदीर्यमाणं मे हृदयमेवं निवेदयतीत्युक्त्वा तमपि श्रमणमभ्य-धात् । आर्योत्तिष्ठ दर्शय क्वासौ यतस्व प्रभूतप्राणिपरित्राणपुण्योपार्ज-नाययामो यदि कथंचिज्जीवन्तीं संभावयाम इति भाषमाण एवोत्तस्थौ ।

मूहः । सिद्धक्षेत्रं सिद्धायतनं । यत इत्यादौ । यत इयं नः स्वामिन्याग्निं प्रवि-शति तदार्योपि तावदस्यां वाणीं व्यापारयत्विति सम्बन्धः । निदर्शनं दृष्टान्तः ।

१. अवतारयिष्यति A. B. २. आगत्य त्वरिततरः A. B. D. T. ३. व्यतिकरमसुम A.B. ४. अश्रुमिश्रमश्रुतेपि A. B. D. T. ५. अवादीत् A. B. D. ६. सैवेयमस्यानार्यस्य A. B. ७. भगिन्यभाग° $K_2$. Jambû ed. ८. विदीर्यमाणं हृदयमेवमेव A. B. ९. यतः स्वप्रभूत° A. B., यतः सुप्रभूत° K. १०. उपार्जने A. B.

अथ समग्रशिष्यवर्गानुगतेनाचार्येण तुरगेभ्यश्चावतीर्य [1]समस्तेन सामन्तलोकेन पश्चादाकृष्यमाणाश्वीयेनानुगम्यमानः पुरस्ताच्च तेन शाक्यपुत्रीयेण [2]प्रदिश्यमानवर्त्मा पद्भ्यामेव तं प्रदेशमविरलैः पदैः पिबन्निव प्रावर्त्तत । क्रमेण च समीपमुपगतः शुश्राव लतावनान्तरितस्य मुमूर्षोर्महतः स्त्रैणस्य तत्कालोचिताननेकप्रकारानालापान् । तथा हि भगवन्धर्म धाव शीघ्रं [3]क्वासि कुलदेवते देवि धरणि धीरयासि न [4]दुःखितां दुहितरं क नु खलु प्रोषिता पुष्यभूतिकुटुम्बिनी लक्ष्मीरनाथां नाथ मुखरवंशाय विविधाधिविधुरां वधूं विधवां विबोधयसि किमिति नेमां भगवन् [5]भक्तजने संज्वारिणि सुगत सुप्तोसि राजधर्म पुष्यभूतिभवनपक्षपातिन्नुदासीनीभूतोसि कथं त्वय्यपि विपद्बान्धव विन्ध्य वन्ध्योयमञ्जलिबन्धो मातर्महाटवि [6]रटन्तीं न [7]शृणोषि [8]मामापत्पतितां पतङ्ग प्रसीद पाहि पतिव्रतामश[9]रणां प्रयत्नरक्षित कृतघ्न चारित्रचण्डाल न रक्षसि राजपुत्रीं किमवधूतं लक्षणैर्हा देवि दुहितृस्नेहमयि [10]यशोवति मुषितासि दग्धदैवदस्युना देव दुहितरि दह्यमानायां नापतसि प्रतापशील शिथिलीभूतमपत्यप्रेम महाराजस्य राज्यवर्धन धावसि मन्दीभूता ते भगिनीप्रीतिरहो निष्ठुरः प्रेतभावो व्यपेहि पाप पावक स्त्रीघातनिर्घृण ज्वलन्न लज्जसे [11]भ्रातर्वात दासी तवास्मि संवादय द्रुतं देवीदाहं देवाय दुःखितजनार्तिहराय हर्षाय नितान्तनिःशूक शोकश्वपाक सकामोसि दुःखदायिन्वियोगराक्षस सन्तुष्टोसि विजने वने कमाक्रन्दामि कस्मै कथयामि कमुपयामि शरणं कां

निम्नं संकुचच्छक्ति । यतस्व यत्नं कुरु । अश्वीयमश्वसमूहः । शाक्यपुत्रीयेण दिवाकरमित्रशिष्येण । अविरलैर्दीर्घैः । पदैश्चरणक्रमैः । मुमूर्षोर्मरणोन्मुखस्य । स्त्रैणस्य स्त्रीसमूहस्यालापान् शुश्रावेत्यन्वयः । संज्वरिणि संतापवति । राजधर्मो बुद्धः ।

१. समस्त° A. B. २. प्रदर्श्यमान° A. B. ३. कासि A. B. ४. दुःखिनीं A B. D. ५. भक्ते जने A. B. D. ६. रटन्तं A. B. ७. शृणोषीमामापत् K. K₁. ८. मामान्यवतिनां A. ९. अशरणं A. B. १०. यशोमति K. K₁. ११. ततवात A. B. D.

दिशं प्रतिपद्ये करोमि किमभागधेया गांधारिके गृहीतोयं लतापाशः पिशाचि मोचनिके मुञ्च शाखाग्रहणकलहं कलहंसि हंसि किमपरमुत्तमाङ्गं मङ्गलिके मुक्तगलं किमद्यापि रुद्यते सुन्दरि दूरीभवति सखीसार्थः स्थास्यसि कथमिवाशिवे शवशिबिरे शबरिके सुतनु तनूनपाति पतिष्यसि त्वमपि मृणालकोमले मालावति म्लानासि मातर्मातङ्गिकेंगीकृतस्त्वयापि मृत्युर्वत्से वत्सिके वत्स्यसि कथमनभिप्रेते प्रेतनगरे नागरिके गरिमाणमागतास्यनया स्वामिभक्त्या विराजिके विराजितास्याननराजपुत्रीविपदि जीवितव्ययव्यवसायेन भृगुपतनाभ्युद्यमभागाभिज्ञे भृंगारधारिणि धन्यासि केर्लकि कुतः पुनरीदृशी स्वप्नेपि स्वस्वामिनी मेनके जन्मनि जन्मनि देवीदास्यमेव ददातु देवो देहं दहन्दहनो विजये विजय कृशाणुं सानुमति नमतीन्दीवारिका दिवं गंतुकामा कामदासि देहि दहनप्रदक्षिणावकाशं विचरिके विरचय वह्निं विकिर किरातिके कुसुमप्रकरं कुररिके कुरु कुरबककोरकाचितां चितां चामरं चामरग्राहिणि गृहाण पुनरपि कण्डिनं कण्ठे मर्षयितव्यानि नर्मदे नर्मनिर्मितानि निर्मर्यादहसितानि भद्रे सुभद्रे भद्रमस्तु ते परलोकगमनमाग्रामीणगुणानुरागिणि ग्रामेयिके गच्छ सुगतिं वसंतिकेन्तरं प्रयच्छापृच्छते छत्रधारी देवि देहि दृष्टिमिष्टां तव जहाति जीवितं विजयसेना सेयमतिमुक्तिका मुक्तकण्ठमारटति निकटे नाटकसूत्रधारी पादयोः पतति ते ताम्बूलवाहिनी बहुमता राजपुत्रि पत्रलता कलिङ्गसेनेयं पश्चिमः परिष्वङ्गः पीडय निर्भरमुरसा मुञ्च मामपहाय मानसा कासं ममासवः प्रवसन्ति वसन्तसेने मञ्जु-

गान्धारिके मोचनिके कलहंसीत्यादीनि सहगतसखीनां संबोधनानि। तनूनपाति वह्नौ। वत्स्यसि[17] स्थास्यसि। भृगुः प्रपातः। उक्तं च। प्रपातस्त्वतटो[18] भृगुरि-

---

१. सिन्दूरिके A. B. D. २. मातर्मालति म्लानामि मातङ्गिके A. B. D. ३. जीवितव्यव्ययव्यवसायेन A. B. ४. केरलिके A. B. D. T. ५. सुस्वामिनी A. B. ६. मेनिके A. B. ७. कुशलिके कुशानुपाग्निविकिर किरातिके कुरु A. B. ८. °कोरकार्चितं चिन्तां A. B. ९. चरमं A. B. D. १०. °गमने ग्रामेयिके गुणरागिणि गच्छ A. B. D. ११. °करी A. D. १२. त्यजति A. B. D. १३. पतिता ताम्बूल° A. B. १४. °पुत्र्याः A. B. D. १५. अयमपश्चिमः A. B. १६. उरसा मामसवः K. $K_1$. Jambû ed. १७. वत्सिष्यसि $C_2$. १८. स्वतट. $C_1$.

लिके मार्जयसि कतिकृत्वः सुदुःसहदुःखसहस्रास्रस्निदिग्धं दग्धचक्षुरिदं रोदिषि कियदाश्लिष्य च [2]मां निर्माणमीदृशं प्रायशो [3]यशोधने धीरयस्यद्यापि किं मां माधविके केयमवस्था संस्थापनानां गतः कालः कालिन्दि सखीजनानुनयाञ्जलीनामुन्मत्तिके [4]मत्तपालिके कृताः पृष्ठतः प्रणयिनीप्रणिपातानुरोधाः [5]शिथिलय चकोरवति चरणग्रहणं [6]ग्राहिणि कमलिनि किमनेन पुनः पुनर्दैवोपालम्भेन न प्राप्तं सुचिरं सखीजनसंगमं सुखमार्ये महत्तरिके तरङ्गसेने नमस्कारः सखि सौदामिनि दृष्टासि समुपनय हव्यवाहनार्चनकुसुमानि [7]कुमुदिके देहि चितारोहणाय रोहिणि हस्तावलम्बनमम्ब धात्रि धीरा भव भवन्त्येवंविधा एव [8]कर्मणां विपाकाः पापकारिणीनाम[9]ार्यचरणानामयमञ्जलिः परः परलोकप्रयाणप्रणामोयं [10]मातुर्मरणसमये [11]कस्माल्लवलिके हलहलको बलीयानानन्दमयो हृदयस्य मे हृष्यत्युच्चरोमाञ्चमुञ्चि किमङ्गीकृत्याङ्गानि वामनिके वामेन मे स्फुरितमक्ष्णा वृथा [12]विरमसि वयस्य वायस [13]प्लक्षवृक्षे क्षीरिणि क्षणे क्षीणपुण्यायाः पुरो हरिणि हेषितमिव हयानामुत्तरतः कस्येदमातपत्रम[14]ुच्चमत्र पादपांतरेण प्रभावति विभाव्यते कुरङ्गिके केन सुगृहीतनाम्नो नाम गृहीतममृतमयमार्यस्य देवि दिष्ट्या वर्धसे देवस्य हर्षस्या[15]गमनमहोत्सवेनेति ।

एतच्च श्रुत्वा सत्वरमुपससर्प ददर्श च मुह्यंतीमाग्निप्रवेशायोद्यतां राजा राज्यश्रियमालम्लबे च [16]मूर्च्छामीलितलोचनाया ललाटं हस्तेन [17]तस्याः ससंभ्रमम् ॥

त्यमरः । निर्माणं विधानं । अर्थात् संसारस्य । संस्थापनानां सांत्वनानां । ग्रहोभिनिवेशः। हलहलक उत्कण्ठा। एवमादिनानिमित्तेन हर्षागमनं सूच्यते ।

---

१. असुस्निग्धं चक्षुरिदं K. Jamb'ı ed. २. मम A. B. ३. यशोधरे A. B ४. मत्तवालिके A. B. ५. K. $K_1$. $K_2$. Jambû ed. have here the following interpolation ताडयसि किमपरमुत्तमांगं मांगलिके. ६. ग्राहिणि A. B. ७. कुसुमिके A, B. D. ८. कर्मविपाकाः A. B. ९. आर्यपादरजसामयमुदकाञ्जलिः परलोक° A. B. T. १०. मातः K. Jambû ed. ११. कस्मादकस्मात् A. B. १२. रसासि A. B. १३. वृक्षे K. Jambû ed. १४. उच्चपाद A. B. D. १५. आगमने A. B. १६. मूर्च्छानिमीलित° A. B. D. १७. तस्याः पस्पर्श ससंभ्रमं A. B.

अथ तेन भ्रातुः प्रेयसः प्रकोष्ठबद्धानामोषधीनां रसविसरमिव प्रत्युज्जीवनक्षमं क्षरता वमतेव पारिहार्यमणीनामचिन्त्यं प्रभावममृतमिव नखचन्द्ररश्मिभिरुद्गिरता बध्नतेव चंद्रोदयच्युतशिशिरशीकरं चन्द्रकान्तचूडामणिं मूर्धनि मृणालमयाङ्गुलिनेवातिशीतलेन निर्वापयता दह्यमानं हृदयं प्रत्यानयतेव कुतोपि जीवितं समाह्लादकेन हस्तसंस्पर्शेन सहसैव चक्षुः समुन्मिमील राज्यश्रीः। तथा चासंभावितागमनस्याचिन्तितदर्शनस्य सहसा प्राप्तस्य भ्रातुः स्वप्नदृष्टदर्शनस्येव कण्ठे समाश्लिष्य तत्कालाविर्भावनिर्भरेणाभिभूतसर्वात्मना दुःखसम्भारेण निर्दयं नदीमुखप्रणालाभ्यामिव मुक्ताभ्यां स्थूलप्रवाहमुत्सृजन्ती बाष्पवारि विलोचनाभ्यां हा तात हा अम्ब हा सख्य इति व्याहरन्ती मुहुर्मुहुरुच्चैस्तरां च समुद्भूतभगिनीस्नेहसद्भावभारभावितमन्युना मुक्तकण्ठमतिचिरं विक्रुश्य वत्से[3] भव त्विदानीमिति भ्रात्रा करस्थगितमुखी समाश्वास्यमानापि कल्याणिनि[4] कुरु वचनमग्रजस्य गुरोरित्याचार्येण याच्यमानापि देवि न पश्यसि देवस्यावस्थामलमतिरुदितेनेति राजलोकेनाभ्यर्थ्यमानापि स्वामिनि भ्रातरमवेक्षस्वेति परिजनेन विज्ञाप्यमानापि दुहितर्विश्रम्य पुनरारटितव्यमिति[5] निवार्यमाणापि बान्धववृद्धाभिः प्रियसखि कियद्रोदिषि तूष्णीमास्स्व दृढं दूयते देव इति सखीभिरनुनीयमानापि चिरं सम्भावितानेकदुःसहदुःखनिवहनिर्वहणबाष्पोत्पीडपीड्यमानकण्ठभागा[6] प्रभूतमन्युभारभरितान्तःकरणा करुणं काहलेन स्वरेण कालमतिदीर्घं रुरोद। विगते च मन्युवेगे वह्नेः समीपादाक्षिप्य[7] भ्रात्रा नीता निकटवर्त्तिनि तरुतले निषसाद। शनैराचार्यस्तु तथा[8] हर्ष इति विज्ञाय विवर्धितादरः सुतरां मुहूर्त्तमिवातिवाह्य निभृतसंज्ञाज्ञापितेन शिष्येणोपनीतं[9] नलिनीदलैः स्वमेवादाय

अथेत्यादौ भ्रातुर्हस्तसंस्पर्शेन राज्यश्रीः सहसैव समुन्मिमीलेति संबन्धः। पारिहार्यः कटकं। तथा चेत्यादौ साक्रोदिति संबन्धः। दुःखनिवहस्य निर्वहणं प्रकटनं यस्माद्बाष्पोत्पीडादिति समासः। काहलेन महता। उद्घातः प्रस्तावः।

---

१. अङ्गुलिनेव शीतलेन A. B. २. प्रत्युद्य A. B. ३. वत्सेव त्विदानीमिति K. $K_1$. Jambû ed. ४. कल्याणि A. B. T. ५. पुनराटिष्यसीति A. B. D. ६ निर्वरण A. B. D. ७. आकृष्य A. B. ८. तदा A. B. D. ९. उपनीतां B.

नम्रो मुख[1]प्रक्षालनायोदकमुपनिन्ये। नरेन्द्रोपि सादरं गृहीत्वा प्रथममनवरतरोदनाताम्रं चिरप्रवृत्ताम्बुजलजालं [2]रक्तपङ्कजमिव स्वसुश्चक्षुरक्षालयत्। पश्चादात्मनः प्रक्षालितमुखशशीनिति च महीपाले सर्वतो निःशब्दः [3]संबभूव सकलो लिखित इव लोकः । ततो नरेन्द्रो मन्दमन्दमब्रवीत्स्वसारम्। वत्से वन्दस्वात्रभवन्तं भदन्तमेष ते भर्त्तुर्हृदयं द्वितीयमस्माकं च गुरुरिति। राजवचनात्तु राजदुहितरि पतिपरिचयश्रवणोद्घातेन [4]पुनरानीतनेत्राम्भसि नमन्त्यामाचार्यः प्रयत्नरक्षितागमागतबाष्पांभःसंभारभज्यमानधैर्यार्द्रलोचनः किञ्चित्पराङ्वृत्त[5]नयनो दीर्घं निःश्वस्य स्थित्वा च क्षणमेकं प्रदर्शित[6]प्रश्रयो मृदुवादी मधुरया वाचा व्याजहार। कल्याणराशे रुदित्वा न चिर[7]मास्ते राजलोको [8]नाद्यापि रोदान्निवर्त्तते क्रियतामवश्यकरणीयः स्नानविधिः स्नात्वा च गम्यतां तामेव भूयो भुवमिति। अथ भूपतिर[9]नुवर्त्तमानो लौकिकमाचारमाचार्यवचनं चोत्थाय स्नात्वा च गिरिसरिति सह स्वस्रा तामेव भूमिमयासीत्। तस्यां च सपरिजनां प्रथममाहितावधानः पार्श्ववर्ती परवर्ती शुचा [10]प्रतितपिडप्रदर्शितप्र[11]यत्नप्रतिपन्नाभ्यवहारकारणां भगिनीमभोजयत्। अनन्तरं च स्वयमाहारस्थितिमकरोत्। भुक्तवांश्च बन्धनात्प्रभृति विस्तरतः स्वसुः कान्यकुब्जाद्गौडसंभ्र[12]मे गुप्तितो गुप्तनाम्ना कुलपुत्रेण निष्कासनं निर्गतायाश्च राज्यवर्धनमरणश्रवणं श्रुत्वा चाहारनिराकरण[13]मनाहारपराहतायाश्च विन्ध्याटवीपर्यटनखेदं जातनिर्वेदायाः पावकप्रवेशोपक्रमणं यावत्सर्वमशृणोद् व्यतिकरं परिजनतः। ततः सुखासीनमेकत्र तरुतले विविक्तभुवि भगिनीद्वितीयं दूरस्थितानुजीविजनं राजानमाचार्यः समुपसृत्य शनैरासांचक्रे स्थित्वा च कंचित्कालांशं लेशतो वक्तुमुपचक्रमे। श्रीमन्नाकर्ण्यतामाख्येयमस्ति नः

यतोयं राजकोकश्चिरं [14]रुदित्वा नाद्यापि रोदनान्निवर्त्तते तत्स्नानविधिः क्रियतामिति। परवर्ती परायत्तां। गुप्तितो बंधनात्। धिषणस्य बृहस्पतेः। पत्नीय-

---

१ प्रक्षालनार्थमुदकं. A. B. D. २. रत्नपङ्कजमिव $K_2$. Jambû ed. ३. स बभूव A. B D ४ पुनरानीतनयनपयसि A. B. D. T. ५. वदनः A. B. ६. °प्रश्रयं मृदुपदमधुरया A. B. ७. चिरमास्ते लोकः क्रियतां A. B. D. ८. नाम्यापि दनान्निवर्त्तते K. ९. अनुरुध्यमानः A. B. १०. पतिप्रपिण्ड $K_2$ Jambû ed. ११. प्रतिपन्नाभ्यवहरणां A. B. १२. °संभ्रमे A. B. १३. अनाहारायाश्च A. B. १४. रुदित्वा नास्ति $C_2$.

किंचिदयं हि यौवनोन्मादात्परिभूय भूयसीमार्यां यौवनावतारतं-रलतरास्ताराजो रजनीकर्णपूरः पुरा पुरुहूतपुरोधसो धिषणस्य पुरन्ध्रीं धर्मपत्नीं पत्नीयन्नतितरलस्ताराम् नामापजहार नाकतश्च पलायाञ्चक्रे चकितचकोरलोचनया च तया सहातिकामया सर्वाकाराभिरामया रममाणो रमणीयेषु देशेषु चचार। चिराच्च कथंचित्सर्वगीर्वाणवर्णीगौरवाद्गिरां पत्युः पुनरपि प्रत्यर्पयामास तां हृदये त्वनिन्धनमदह्यत विरहाद्दूरारोहायास्तस्याः सततम्। एकदा तु शैलावुदयादुदयमानो विमले वारिणि वरुणालयस्य संक्रान्तमात्मनः प्रतिबिम्बं विलोकितवान्। दृष्ट्वा च तत्तदा सस्मरः सस्मार स्मेरगण्डस्थलस्य ताराया मुखस्य मुमोच च मन्मथोन्मादमथ्यमानमानसः स्वः स्थोऽप्यस्वस्थः स्थवीयसः पीतसकलकुमुदवनप्रभाप्रवाहधवलताराभ्यामिव लोचनाभ्यां बाष्पवारिबिन्दून्। अथ पततस्तानुदन्वति समस्तानेवाचेमुर्मुक्ताशुक्तयस्तासां च कुक्षिकोशेषु मुक्ताफलीभूतानवाप तान्कथमपि रसातलनिवासी वासुकिर्नाम विषमुचामीशः। स च तैर्मुक्ताफलैः पातालतलेऽपि तारागणमिव दर्शयद्भिरेकावलीमकल्पयच्चकार च मंदाकिनी नाम तस्याः। सा च भगवतः सोमस्य सर्वासामोषधीनामधिपतेः प्रभावादत्यन्तविषघ्नी हिमामृतसंभवत्वाच्च स्पर्शेन सर्वसत्त्वानां संतापहारिणी बभूव। यतः स तां सर्वदा विषोष्मशान्तये वासुकिः पर्यधत्त समतिक्रामति च कियत्यपि काले कदाचिन्नामैकावलीं तस्मान्नागराजान्नागार्जुनो नाम नागैरेवानीतः पातालतलं भिक्षुरभिक्षत लेभे च। निर्गत्य च रसातलात्त्रिसमुद्राधिपतये सातवाहननाम्ने नरेन्द्राय सुहृदे स ददौ तां। सा चास्माकं कालेन शिष्यपरम्परया कथमपि हस्तमुपगता यद्यपि च परिभव इव भवति भवादृशां दत्रिम उपचारस्तथाप्योषधिबुद्ध्या बुद्धिमता सर्वसत्त्वराशिरक्षाप्रवृत्तेन रक्षणीयशरीरेणायुष्मता विषरक्षापेक्षया गृह्यतामित्य-

आत्मनः पत्नीमिच्छन्। आरोहो नितम्बः। उन्मादः खेदः। स्वःस्थः स्वर्गस्थः। अस्वस्थः पीडितः। अपिर्विरोधस्य सूचकः। दानेना निवृत्तो दत्रिमः।

१. °तारलतरस्तारास्ताराराजः A., °तरलतरुस्तारास्ताराराजः B. २. चानया A. ३. सहाभिकामया A. B. D. ४. °वचन° A. B. D. ५. विरहे A. B. ६. पतत एव तान् A. B. D. ७. त्रिः समुद्राधिपतये A. B.

भिधाय भिक्षोरभ्याशवर्तिनश्चीवरपटान्तसंयतां मुमोच तामेकावलीं मंदाकिनीं ॥

[1]उन्मुच्यमानाया एव यस्याः प्रभालेपिनी लब्धावकाशे विशद-महसि महीयसि विसर्पति रश्मिमण्डले युगपद्धवलायमानेषु दिङ्मुखेषु मुकुलितलतावधूत्कण्ठितैरामूलाद्विकसितमिव तरुभिर-भिनवमृणाललुब्धैर्धावितमिव धुतपक्षपुटपटलधवलितगगनं वनसर-सीहंसयूथैः स्फुटितमिव भरवशाविशीर्यमाण[2]धूलिधवलैर्गर्भभेदसूचि-तसूचीसंचयशुचिभिः केतकीवाटै[3]रुद्दलितदलदन्तुराभिः प्रबुद्धमिव कुमुदिनीभिर्विधुतसितसटाभारभरितदिक्चक्रैश्चलितमिव केसरिकुलैः प्रहसितमिव सितदशनांशुमालालोकलि[4]प्यमानवनं वनदेवताभि-र्विकसितमिव शिथिलितकुसुमकोशकेसराट्टहासनिरङ्कुशं काशका-ननैर्भ्रान्तमिव संभ्रमभ्रमितबालपल्लवप[5]रिवेषश्वेतायमानैश्चमरीकद-म्बकैः प्रसृतमिव स्फायमान[6]फेणिलतरलतरतरङ्गोद्गारिणा गिरिनदीपू-रेणापरतारागण[7]लोभमुदितेनोदितमिव विकचमरीचिचक्राक्रान्तककुभा पूर्णचन्द्रेण प्रक्षालित इव दावानल[8]धूलिधूसरितदिगन्तो दिवसः पुनरिव [9]धौतान्यश्रुजलक्लिष्टानि नारीणां मुखानि ॥

राजा तु मांसलैस्तस्याः संमुखैर्मयूखैराकुलीक्रियमाणं मुहुर्मुहुरुन्मी-लयन्निमीलयंश्च चक्षुः कथमपि [10]प्रयत्नेन ददर्श सर्वाशापूर्णां पंक्ती-कृतामिव दिङ्नागकरशीकरसंहतिं घनमुक्तां शारदीमिव लेखीकृतां ज्योत्स्नां प्रकटपदकचिह्नां [11]संचारवीथीमिव बालेन्दोर्निश्चलीभूतां

अभ्याशो निकटः । महत्सरः सरसी । केतक्यो वृक्षभेदाः । काशास्तृणभेदाः । परिवेषः परिवलनं । स्फायमाना वर्धमानाः । आशा आस्था दिशश्च । घन-मुक्तां निरन्तरमौक्तिकां मेघत्यक्तां च । पदकं मध्यमणिः पदमेव च पदकं ।

---

१. विमुच्यमानायाः A. B. २. °धूलीलवले A. ३. उद्दलित° $K_1$. $K_2$. ४. °लिप्य-मानवनदेवताभिः K. $K_1$. Jambû ed. ५. परिवेश° K. $K_2$. $C_2$ ६. °फेनिलतरलतर-ङ्गोद्गारिणां A. B. D. K. ७. °लाभमुदितेन° K, $K_1$, लोभादुदितमिव A. B. D. ८. °धूमधूसरितदिगन्तरः A. B. D. ९. धौतानि बाष्पपातक्लिष्टानि A B. D. T. १०. प्रयत्नात् A, B. ११. संचरण° A. B. D.

सप्तर्षिमालामिव हस्तमुक्तामभिभूतसकलभुवनं[1]भूषणभूतिप्रभात्वामिवैशानीं शशिकलां [2]धवलतागुणपरिगृहीतां [3]कान्तिमिव निर्गतां क्षीरराशेरनेकमहामहीभृत्परंपरागतां गङ्गामिव दुर्गतिहरामनवरतस्फुरिततरलांशुकां तां पुरःसरपताकामिव [4]महेश्वरभावागमस्य घनसारशुक्लां दन्तपङ्क्तिमिवा[5]भिमुखस्येश्वरस्य वरमनोरथपूरणसमर्थां स्वयंवरस्रजमिव भुवनश्रियो निजकरपल्लवावरणदुर्लक्ष्यां चक्षूरागवि[6]हसतिकामिव सुधाया मंत्रकोशसाधनप्रवृत्तस्याक्षमालामिव राजधर्मस्य समुद्रालङ्कारभूतां संख्यालेख्यपट्टिकामिव कुबेरकोशस्य पश्यंश्चैतां विस्मयमाजगाम मनसा सुचिरम् । आचार्यस्तु तामुद्धृत्य बबन्ध बन्धुरे स्कन्धभागे भूपतेः । अथ नरपतिरपि प्रतिप्रीतिमुपदर्शयन्प्रत्यवादीत् । आर्य रत्नानामीदृशानामनर्हा एव प्रायेण पुरुषास्तपःसिद्धिरियमार्यस्य दै[6]वताप्रसादो वा के च वयमिदानीमात्मनोपि किमुत ग्रहणस्य प्रत्याख्यानस्य वा दर्शनात्प्रभृति प्रभूतगुरुगुणगणहृतेन हृदयेन परवन्तो वयं संकल्पितमिदमाभरणादार्योपयोगाय शरीरमत्र कामचारो वः कर्त्तव्यानामिति । समतिक्रान्ते च कियत्यपि काले

हस्तमुक्तां परिवर्तुलत्वाद्धस्ते या स्थितिं न बध्नाति । हस्तो हस्तसंज्ञा वा नक्षत्रं च हस्तः । सकलभुवनभूषणं कौस्तुभादिर्हरश्च । भूतिः समृद्धिर्भस्म च । गुणो धर्मस्तन्तुश्च । महीभृतो राजानः पर्वताश्च । दुर्गतिर्दारिद्र्यं नरकादिगतिश्च । तरलो हारमध्यगतो मणिश्चञ्चलश्च । अंशुका रश्मय उत्तरीयं चांशुकं । घनसारवच्छुक्लां कर्पूरवच्छुभ्रां निरन्तरदृढधवलां च । अभिमुखस्य प्रतिमुखमागच्छतो दन्तपंक्तिश्च मुखस्याभितो भवति । वरः श्रेष्ठो जामाता च । निजाः कराः सहजा रश्मयः स्वकश्च हस्तो निजकरः । चक्षूरागः प्रीतिस्तया विहसतिका नर्महासः । मन्त्रः कर्त्तव्यावधारणं । कोशो गंजः । साधनं हस्त्याश्वादि । तेन प्रकृष्टाचरितस्य मंत्रसमूहाराधनप्रस्तुतस्य । समुद्रः सागरः सह मुद्रया च यो वर्त्तते । बन्धुरे हृद्ये । प्रत्याख्यानस्य प्रतिषेधस्य । परवन्तोन्यायत्ताः । उपांशु गुप्तं ।

---

१. °भवभूषणभूतिप्रभामैशानीमिव A. B. D. २. धवलगुण° A. B. T. ३. कीर्तिमिव A. B. D. ४. परमेश्वरपदागमस्य A. B. D. ५. अभिमुखैश्वर्यस्य A. B. ६. विहासितिकामिव A. B. ६. दक्षिता° K. $K_1$.

गते चैकावलीवर्णनालापे लोकस्यानन्तरं [1]लब्धविस्रम्भा राज्यश्रीस्ताम्बूलवाहिनीं पत्रलतामाहूयोपांशु किमपि कर्णमूले शनैरादिदेश दर्शितविनया च पत्रलता पार्थिवं व्यज्ञापयत्। देव देवी विज्ञपयति न स्मराम्यार्यस्य [2]पुरः कदाचिदुच्चै[3]र्वचनमपि कुतो विज्ञापनमियं हि [4]शुचामसह्यतां व्यापारयन्ती हतदैव[5]दत्ता च दशा शिथिलयति विनयमबलानां हि प्रायशः पतिरपत्यं वावलम्बनमुभयविकलानां तु दुःखानलेन्धनायमानं प्राणितमशालीनत्वमेव केवलमार्यागमनेन च कृतोपि प्रतिहतो मरणप्रयत्नो [6]यतः काषायग्रहणाभ्यनुज्ञयानुगृह्यतामयमपुण्यभाजनं जन इति। जनाधिपस्तु तदाकर्ण्य तूष्णीमेवावतिष्ठत्। अथाचार्यः सुधीरमभ्यधात्। आयुष्मति शोको हि नाम पर्यायः पिशाचस्य रूपान्तरमाक्षेपस्य तारुण्यं तमसो [7]विशेषणं विषस्यानन्तकः प्रेतनगरनायकोयम[8]निर्वृतिधर्मा दहनोयमक्षयो राजयक्ष्मायमलक्ष्मीनिवासो जनार्दनोयमपुण्यप्रवृत्तः क्षपणकोयमप्रतिबोधनिद्राप्रकारोयमनलसधर्मा संनिपातोयमशिवसहचरो विनायकोयमबुधसेवितो [9]ग्रहव-

प्राणितं जीवितं। अशालीनत्वं धाष्ट्र्यं। आक्षेपस्यापस्मारस्य। अनन्तान्कायति रावयतीत्यनन्तकः। अनिर्वृतिरस्वास्थ्यं निर्वाणाभावश्च। अक्षयश्चिरस्थायी क्षयरहितश्च। जनानर्दयति पीडयतीति जनार्दनः कृष्णश्च। अपुण्यप्रवृत्तः पापप्रवृत्तः। क्षपणको यः क्षपयति नग्नाटकश्च। प्रतिबोधो विवेकः स्वापादुत्थानं च। निद्रां [10]प्रकिरति हिनस्ति निद्राप्रकारः कर्मण्यण्। निद्राविशेषश्च मोहरूपः। अनलेनाग्निना सधर्मा सदृशः। अनलसलक्षणो धर्म आलस्यं यस्य सोनलसधर्मा। नालसधर्मा नलसधर्मा सम्यङ् निपातयति घातयति यस्त्रिदोषजो व्याधिश्च ससन्निपातः। शिवः श्रेयो हरश्च शिवः। विशेषेण नयति मारयतीति विनायकः। विनायको विघ्नो वा गणपतिश्च विनायकः। बुधाः पंडिता ग्रहभेदश्च बुधः।

---

१. लब्ध्वा विश्रब्धे भ्रातरि A. B. B. T. २. पुनरुच्चैः K. ३. व्याहृतमपि A. B. D. ४. शुचामसह्यता व्यापारयति A. B. ५. °दत्ता देशा K. $K_1$. Jambû ed. ६. अतः K. $K_1$. ७. विशेषः A. B. D. ८. अनिवृत्ति A. B. D. ९. ग्रहमार्गोयं A. B. D. T. १०. प्रकिरतीति $C_2$.

**गोयमयोगसमुत्थो ज्योतिष्प्रकारोयं स्नेहाद्वायुप्रकोपो मानसादग्निसंभव आर्द्रभावाद्रजःक्षोभो रसादतिशोषो रागात्कालपरिणामस्तद[1]स्याजस्रास्रस्राविणो हृदयमहाव्रणस्य [2]बहलदोषान्धकारलब्धप्रवेशप्रसरस्य प्राणतस्करस्य शून्यताहेतोर्महाभूतग्रामघातकस्य सकलविग्रहक्षपणदक्षस्य दोषचक्रवर्तिनः कार्श्यश्वासप्रलापोपद्रव[3]बहलस्य दीर्घरोगस्यासद्ग्रहस्य सकललोकक्षयधूमकेतोर्जीवितापहार[4]दक्षस्याक्षणरुचेरनभ्रवज्रपातस्य स्फुरदनवद्य[5]विद्याविद्युद्विद्योतमानानि गहनग्रन्थग्रन्थिगूढगर्भ-**
ग्रहो व्यसनं सूर्यादिश्च। अयोगोननुकूलं दैवं चित्तवृत्तिनिरोधाभावश्च। ज्योतिष्प्रकारोग्निभेदः परं ज्ञानं च। स्नेहः प्रीतिः पुष्टिहेतुश्च घृतादिः। वायुप्रकोप उन्मादोत्र। मानसं चेतो देवसरश्च। आर्द्रभावो वत्सलत्वं सरसत्वं च। रजोगुणविशेषो धूलिश्च। रसः प्रीती रसायनं च। रागोभिष्वङ्गो लौहित्यं च। कालोन्तकः कृष्णश्च। तदस्येत्यादौ तत्तस्मादस्य शोकस्य पारं विदुषामपि हृदयानि सोढुं नालं किं पुनरबलानां हृदयमिति संबन्धः। अजस्रं सदा। अस्रं बाष्पो रक्तं च। व्रणं च रक्तं स्रवति। एवमुत्तरत्रापि ज्ञेयं। बहलदोषा बहावोपगुणाः कृष्णपक्षरात्र्यश्च। अन्धकारो मोहस्तमश्च। शून्यता किंकर्त्तव्यतामूढता। महाभूतग्रामो जंतुसमूहस्तद्घातकस्य। अप्यं च महान्तो भूताः प्राणिनो यस्मिन् ग्रामे जनपदसमूहे तस्य यो घातकः स शून्यता या जनरहितत्वस्य हेतुर्भवति। विग्रहः शरीरं विरोधश्च। दोषचक्रे मुख्यतया वर्त्तते यः स दोषचक्रवर्त्ती चक्रवर्ती च सार्वभौमः। उपद्रवो बाधा व्याधेरुपर्यन्यो व्याधिश्च। उक्तं च। व्याधेरुपरि यो व्याधिर्भवत्युत्तरकालजः। उपक्रमविरोधित्वात्स ह्युपद्रव उच्यत इति। दीर्घरोगः क्षयादिः। असद्ग्रहोनर्थासक्तिः। धूमकेतुश्चाशोभनो मूढः। न विद्यमाना क्षणमपि रुचिर्भोजनाभिलाषस्तडिच्च। अस्फुरंत्याः प्रकाशमानायाः। अनवद्याया विद्याया विद्युता किंचिन्मात्रज्ञानेन विद्युदपि सकृदेव स्फुराति। तथा ग्रहणानां दुरवग्रहाणां ग्रन्थानां ये [6]विभ्रम-

---

१. तदस्यास्रजास्रस्राविणः A. B. D, तदस्याजस्रस्राविणः K. २. बहुलदोषां A. B. ३. °बहुलस्य A. B. D. ४. °दक्षक्षणरुचेः A. B. D. ५. °विद्युदुद्योतमानानि A. B. ६. विषमाः $C_1$.

ग्रहणगम्भीराणि भूरिकाव्यकथाकठोराणि बहुशास्त्रोद्वहन[1]बृहन्ति विदुषामपि हृदयानि नालं सोढुमापातं किमुत नव[2]मालिकाकुसुमकोमलानां सरसबिसतन्तुदु[3]र्बलकमबलानां हृदयकम्। एवं सति सत्यव्रते वद किमत्र क्रियते कं[4]तम उपालभ्यते कस्य पुर[5] उच्चैराक्रन्द्यते हृदयदाहि दुःखं वा ख्याप्यते सर्वमक्षिणी निमील्य सोढव्यममूढेन मर्त्यधर्मणा पुण्यवति पुरातन्यः स्थि[6]तय एताः केन शक्यन्तेऽन्यथाकर्तुं संस[7]रंत्यो नक्तंदिवं द्राघीयस्यो जन्मजरामरणघटनघटीयंत्रराजिरज्जवः सर्वपञ्चजनानां पञ्चमहाभूतपंचकुलाधिष्ठितान्तःकरणव्यवहारदर्शनपुणाः सर्वंकषा विषमा धर्मराजस्थितयः क्षणमपि क्ष[8]ममाणा गलंत्यायुष्कलाकलनकुशला निलये निलये कालनालिकाः। जगति सर्वजन्तुजी[9]वितोपहारपातिनी संचरति झटिति चंडिका यमाज्ञा रटंत्यनवरतमखिलप्राणिप्रयाणप्रकटनपटवः प्रेतपतिपटहाः प्रतिदिशं पर्यटन्ति पेटकैः प्रतिपुरं प्रतप्तलोहलोहिताक्षाः कालकूटकान्तिकालकायाः कालपाशपाणयः कालपुरुषाः प्रतिभवनं भ्रमन्ति भीषणकिंकरकरघट्टितयमघण्टापुटपटुटाङ्कारभयङ्कराः सं[10]र्वसत्त्वसंघसंहरणाय घोराघातघोषणा दिशि दिशि वहन्ति बहुचिताधूमधूसरितप्रे[11]तपतिपताकापटुपतितगृध्र[12]दृष्टयः शोककृ[13]तकोलाहलाकुलकुटुंबिनीविकीर्णकेशकलापशबलश[14]र्वशिबिकासहस्रसंकुलाः किलितमाः प्रदेशास्तेषां गु[15]प्तो यो गर्भस्तद्ग्रहणेन। गम्भीराणि। पुण्यवति पुरातन्य इत्यादौ ध्वनिच्छायाजन्मजरामरणघटनान्येव घटीयन्त्रराज्या रज्जवः। पञ्चजना मानुषाः। मनुष्या मानुषा मर्त्या मनुजा मानवा नराः। स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरा इति। पञ्चकुलोध्यक्षः। अन्तःकरणं मनः। कला भागाः। कलनं संख्यानं। नालिका होराः। चण्डिका भीषणा रौद्रदेवताभेदश्च। पेटकैः समूहैः। घोषणा राजाज्ञया पश्चाहिसं[16]बद्धैः पटहादिशब्दो दिशि दिश्येवंविधा रीतिर्विधेयेति। विशिखा वीथयो रथ्या मार्गा वहन्तीति संगतिः। कुटुम्बिन्योपहेलाः। शिबिका वाहनं। श्मशानमेव

१. बहुशासनोद्वहन° $K_2$. Jambû ed. २. नवनवमालिका° K. ३. दुर्बलानामबलानां A. B. D. ४. कः A. B ५. पुरस्तादाक्रन्द्यते A. B. ६. प्रवृत्तयः A. B. D. ७ संसरन्ति A. B. D. ८. अक्षयमाणाः A. B. ९ °जीवापहार° A. B. १०. सर्वसत्त्वसंहारकारिण्यो घोरा° A B. ११ प्रेतपताका° A. B. D. १२. °गह्य° B. १३. कष्टशोकाकुल° A. B. D. १४. °रथ्या° A. B. D. १५. गूढतः Jambû ed. १६. °सम्बन्धः $C_2$.

किलायमानश्मशानशिबिरशिवाशावकाः परलोकावसथपथिकसार्थप्रस्थानविशिखावीथयः सकललोककवलावलेहलंपटा वहला वहंलिहा लेढि लोहिताचिता चिताङ्गारकाली कालरात्रिजिह्वा जीवितानि जीविनां तृप्तिमशिक्षिता च भगवतः सर्वभूतभुजो बुभुक्षा मृत्योरतिद्रुतवाहिनी चानित्यता नदी क्षणिकाश्च महाभूतग्रामगोष्ठ्यो रात्रिषु भंगुराणि गात्रयन्त्रपञ्जरदारूणि देहिनामशुभशुभावेशाविवशा विशारवः शरीरनिर्माणपरमाणव श्छिदुरा जीवबन्धनपाशतन्त्रीतन्तवः सर्वमात्मनोनीश्वरं विश्वं नश्वरमेवमवधृत्य नात्यर्थमेवार्हसि मेधाविनि मृदुनि मनसि तमसः प्रसरं दातुमेकोपि हि प्रतिसंख्यानक्षण आधारीभवति धृतेरपि च दूरगतेपि हि शोके नन्विदानीमपेक्षणीय एवायं ज्येष्ठः पितृकल्पो भ्राता भवत्या गुरुरितरथा को नु बहु मन्येत कल्याणरूपमीदृशं संकल्पमन्त्रभवत्याः काषायग्रहणकृतमखिलमनोज्वरप्रशमनकारणं हि भगवती प्रव्रज्या ज्यायः खल्विदं पदमात्मवतां महाभागस्तु भिनत्ति मनोरथमधुना यदयमादिशति तदेवानुष्ठेयं यदि भ्रातेति यदि ज्येष्ठ इति यदि वत्स इति यदि गुणवानिति यदि राजेति सर्वथा स्थातव्यमस्य नियोग इत्युक्त्वा व्यरंसीत् ॥

उपरतवचसि च तस्मिन्निजगाद नरपतिः । आर्यमपहाय कोन्य एवमभिदध्यादनभ्यर्थितदैवनिर्मिता हि विषमविपदवलम्बनस्तम्भा भवन्तो लोकस्य स्नेहार्द्रमूर्तयो मोहान्धकारध्वंसिनश्च धर्मप्रदीपाः किंतु प्रणयप्रदानदुर्ललिता दुर्लभमपि मनोरथमपि प्रीतिरभिलषति धीरस्यापि धाष्टर्यमारोपयति हृदयलघिमलङ्घितमतिवल्लभत्वं युक्तायु-

शिबिरं येषां ते । बहला दीर्घा गौश्च । उक्तं च । बहलाः कृत्तिका गाव इति च । वहंलिहा छिद्रान्वेषिणी वहंलिहा च गौर्वत्सस्य भवति । देहिनां शरीरवतां जीवाः प्राणिन एव । बन्धनपाशतंत्रीतन्तवः । आत्मनोनीश्वरं न स्वायत्तं परतंत्रमित्यर्थः । प्रतिसंख्यानं विवेककुशला मतिः । दूरगते परधराविरूढे । ज्येष्ठो भ्रातेत्या-

१. सकललोककवला इव लोपनलम्पटा बहुला A. B. D. २. वाहिनी A. B. ३. °गोष्ठ्या गात्रिषु A. B. D. ४ विश्ववैनश्वरं A. B. T. ५. प्रतिसंख्यातिक्षणोधारी A. B. D. ६. °प्रशमनं हि कारणं A. B. D. ७. भनक्ति A. B. ८. कोन्य इच्छं वकुमलमनभ्यर्थित° A. B. D. T. ९. दुर्लभमार्थपमनोरथमतिप्रीतिरभिलष्यति A. B. १०. बहुलाः $C_1$. $C_2$ ११. बहुलाः $C_1$. $C_2$.

कविचारशून्यत्वाच्च शालीनमपि शिक्षयन्ति स्वार्थतृष्णाः प्रागल्भ्यम-भ्यर्थनाया[1] रक्षन्ति च जलनिधय इव मर्यादामार्या दत्तमेव च शरीर-मिदमनभ्यर्थितेन प्रथममेवातिथ्याय माननीयेन[2] भवता मह्यमतः किं-चिदभ्यर्थये भदन्त[3]मियं हि नः स्वसा बाला बहुदुःखखेदिता च सर्व-कार्यावधीरणोपरोधेनापि यावल्लालनीया नित्यमस्माभिश्च भ्रातृ-वधापकारिरिपुकुलप्रलयकरणोद्यतस्य बाहोर्विधेयैर्भूत्वा सकललोक-प्रत्यक्षं प्रतिज्ञा कृता पूर्वावमान[4]नाभिभवमसहमानैरर्पित आत्मा कोप-स्य यतो नियुक्तां कियन्तमपि कालमात्मानमार्योऽपि कार्ये मदीये दी-यतामातिथये शरीरमिदमद्य प्रभृति यावदयं जनो लघयति :प्रतिज्ञा-भारमाश्वासयति च तातविनाशदुःखविक्लवाः प्रजास्तावदिमामत्र-भवतः कथाभिश्च धर्म्याभिः कुशलप्रतिबोधविधायिनीभिरुपदेशैश्च[5] दूरापसारितरजोभिः शीलोपशमदायिनीभिश्च देशनाभिः क्लेशप्रहाण-हेतुभूतैश्च तथागतैर्दर्शनैरस्मत्पार्श्वोपयायिनीमेव प्रतिबोध्यमाना-मिच्छामि। इयं तु ग्रहीष्यति मयैव समं समाप्तकृत्येन काषायाण्य-र्थिजने[6] च किमिव नातिसृजन्ति महान्तः[7] सुरनाथमात्मास्थिभिरपि या-वत्कृतार्थमकरोद्दधीचो मुनिनाथोऽप्यनपेक्षितात्मस्थितिरनुक-म्पेति कृत्वा कृपावानात्मानं बठरसत्त्वेभ्यः कतिकृत्यो[8] न दत्तवानतः परं भवन्त एव बहुतरं[9] जानन्तीत्युक्त्वा तूष्णींबभूव भूपतिः। भूयस्तु

द्युत्तरोत्तरं साभिप्रायं व्याख्येयम्। अनभ्यर्थितेत्यादौ ध्वनिच्छायावगन्तव्या। धीरस्य गंभीरस्य। लंघितमाक्रान्तं। शालीनमधृष्टत्वम्। भदन्तेति बौद्धकर्मविशेष-पूजावचनं। अवधीरणमुपेक्षणं। विधेयैरायत्तैः। नियुक्तां स्वीकारोतु। देश-नाभिः शिक्षाभिः। क्लेशा अविद्यादयस्तेषां प्रहरणं। तथागतैर्बौद्धैरात्मा-स्थिभिरपि यावदित्यत्र यावच्छब्दोवधारणे। मुनिनाथः सुगतः। बठरसत्त्वा जडप्राणिनः सिंहाद्याः। एवं किल श्रूयते पुराकाचन सिंही प्रसवकाले बुभुक्षातुरा स्वशावकान्भक्षयितुं प्रवृत्ता सौगतेन च समालोक्यातिकारुण्यात्स्व-

१. अभ्यर्थनाय A. B. २. माननीयेनमतः A., माननीयेन मह्यमतः B. ३ भगवन्तं A. B. ४. पूर्वापमान° A. B. ५. उपदेशैश्चारजोभिः K. K₁. Jambû ed. ६. अर्थिते A. B. ७. सन्तः A. B. D, ८. कतिकृत्वः K. K₁. Jambû ed. ९. परं बहुतरं भवन्त एव A. B. D.

बभाषे भदंतः। भव्या न द्विरुच्चारयंति वाचं चेतसा प्रथममेव प्रतिग्राहिता गुणास्तावकाः [1]कायबलिमिमाममुना जनेनोपयोगस्तु [2]निरुपयोगस्यास्य लघुनि गुरूणि वा कृत्ये गुणवदायत्त इति। अथ तथा तस्मिन्नभिनन्दितप्रणये प्रीयमाणः पार्थिवस्तत्र तामुषित्वा विभावरीमुषसि च वसनालङ्कारादिप्रदानपरितोषितं विसर्ज्य निर्घातमाचार्येण सह स्वसारमादाय प्रयाणकैः कतिपयैरेव कटकमनुजाह्नवि निविष्टं प्रत्याजगाम। [3]तत्र च राज्यश्रीप्राप्तिव्यतिकरकथां कथयत एव प्रणयिभ्यो रविरपि ततार गगनतलम्। [4]बहलमधुपङ्कपिङ्गलः पङ्कजाकर इव संचुकोच चक्रवाकवल्लभो वासरः प्रकीर्णानि [5]नवरुधिररसारुणवर्णानि लोकालोकजूंषि यजूंषीव कुपितयाज्ञवल्क्यवक्त्रवान्तानि निजवपुषि पूषा पापमूंषि पुनरपि संजहार जालकानि रोचिषाम्। क्रमेण च [6]समुपोह्यमानमांसलरागरोचिष्णुरुष्णांशुरुष्णीषबन्धसहजचूडामणिरिव वृकोदरकरपुटोत्पाटितः प्रत्यग्रशोणितशोणाङ्गरागरौद्रो द्रौ-

मांसप्रदानेन तस्मान्निवारितेति। भव्या भाग्यवन्तः। काय एव बलिहे[7]तुत्वाद्बलिरिव कायबलिस्ताम्। पद्मषण्डोपि [8]चक्रवाकप्रियो मुकुलितो भवति। रुधिररसवत्तेन चारुणवर्णानीति। यजूंषीति वेदोपलक्षणार्थः। याज्ञवल्क्यः शाकल्यस्य मुनेर्वेदानधीत्याज्ञामकुर्वन्गुरुणोपालब्धो वेदान्परित्यजेति। ततस्तेन चत्वारोपि वेदा रक्तोपलिप्ता उद्वान्तास्ते च शाकल्यमुनिना स्वे वपुषि संक्रान्ता इति श्रुतिः। क्रमेणेत्यादावुष्णांशुर्मुहूर्तमेवंविधो दृश्यत इति संबन्धः। समुपोह्यमानो वर्धमान इत्यर्थः। उष्णीषो बध्यते यत्र स उष्णीषबन्धो मस्तकः। वृकोदरो भीमसेनः। द्रौणायनोऽश्वत्थामा। अत्र कथा। अश्वत्थामा सौप्तिके हतपुत्रया द्रौपद्या भीमसेनो[9]ऽभ्यधायि यद्यश्वत्थाम्नः शिरश्छित्त्वा नानीयते तदहं जीवितं त्यजामीति। ततोहमेवं करोमीति प्रतिज्ञायायान्तं भीमं दृष्ट्वा व्यासाश्रमस्थो रणश्रान्तो घृताभ्यक्तोऽश्वत्थामा शस्त्राभावादिषीकाः

---

१. कायकलिमिमं A. B. D. २. निरूप° A. B. ३. तत्रापि A. B. ४. बहुलमधु° A. B. D. ५ नवरुचिर° A. B. ६. समुपोहमान° A. B. ७. °हेतुत्वात्कलिरिव $C_2$. ८. चक्राह्वप्रियः $C_1$. $C_2$. ९. अभिधाय Jambū ed.

णायनस्य रुद्रभिक्षादानशौण्डपुरमथनमुक्तमुण्डसिरा[1]नाडिरुधिरपूरणशोणितकपिलः कपालकर्पर इव च पैतामहः पि[2]तृवधरुषितरामरा[3]गरचितः पृथुविकटकार्त्तवीर्यासिकूटकुट्टाककुठारतुंडतष्टदुष्टक्षा[4]त्रियकण्ठकुहररुधिरकुल्याप्रणालसहस्रपूरितो ह्रद इव दूररोधी रौधिरो भ[5]यनिगूढकरचरणमुण्डमण्डलाकृतिर्गुरुगरुडनखपञ्जरा[6]क्षेपक्षपणक्षिप्तक्षतजोक्षितो [7]वसुर्विभावसुकमठ इव च लो[8]ठ्यमानो नभस्यरुणगर्भमांसपिण्ड इव च ख[9]ण्डिमानमानीतो नि[10]यतकालातिपातदूयमानदाक्षायणीक्षिप्तो धा[11]तुतट इव च सुमेरोरसुरवधा[12]भिचारचरुपचनपिशुनः शोणितक्वाथकषायितकुक्षिरतिवि[13]संकटः कटाह इव च बार्हस्पत्यः सद्योगलितगजदानवदेहलोहितोपलेपभीषणो मुखमण्डलाभोग इव च महाभैरवस्य मुहूर्त्तमदृश्यत ज[14]लनिधिजलप्रतिबिम्बितरविबिम्बराजिभास्वराभ्रावलम्बिनी गृहीतार्द्रमांसभारेव चाबभासे वा[15]सरावसानवेला वेता[16]लनिभा ज्वलत्संध्यारागरज्यमानजलप्रवाहः पुनरिव पुराणपुरुषपीवरोरुसंपुटपिष्टमधुकैटभरुधिरपटलपाटलवपुरभवदधिपतिरर्णसंमंत्र्य ब्राह्ममस्त्रं भीमवधाय ददौ । एकाकिनश्च भ्रातुर्गमनाद्भीतेनार्जुनेन कृष्णसहितेन तमेवानुसरता ब्रह्मशिरोस्त्रं मुमुचे तदवसरागतैश्च नारदाद्यैर्मध्यस्थैर्भूत्वोक्तं द्रौणेरस्त्रमभिमंत्र्य प्रियाया गर्भे पतत्विति । अर्जुनेनाप्यात्मीयेस्त्रे संहृते भीमोश्वत्थाम्नः सहजं मूर्धमणिमुच्चीय ना[17]तिचिरेणाजगामेति । मुक्तं त्यक्तं । मुण्डं शिरः । सिरा नाड्यः । रुधिरवाहिन्यो नाड्यः । कुट्टाकश्छेदनशीलः । कुठारतुण्डं कुठारधारा । आक्षेपक्षपणमुत्क्षिप्य परित्यागः । क्षिप्तं निःसृतं । लोठ्यमानः परिभ्रमन् । नियतकालातिपातः प्रलयागमः । दाक्षायणी काली । पिशुनः सूचकः । वेतालोपि गृहीतार्द्रमांसभरो भवति । पटलं समूहः ॥

---

१. °शिरा° A. B. D. २. पितृबन्ध° A. B. D. ३. °रागरुचित° A., °रागे रचितः B. ४. °क्षत्रकण्ठ° A. B. ५. भयनिगड° A. B. D. ६ पञ्जरोक्षेपक्षणक्षिप्त° A. B. D. T. ७. वसुर्विष्वावसुकमठः A., वसुवसुकमठः B. ८. लोठ्यमाने K. $K_1$. Jambû ed. ९. चण्डिमानः A. B. D. १०. नियते B. ११. धातुतटेषु सुमेरोः A. B. D. T. १२. अभिचारकर्मपिशुनः A. B. १३ °विषङ्कट° K., विशङ्कट° $K_2$. Jambû ed. १४. जवनिधिजले प्रतिबिम्बितः । रविबिम्बराजिताम्बरपरीतावलम्बनी A. B. D. T. १५. वासरावसानावला A. B., वासरावसने वेला K. $K_1$. १६. वेताला निभा A., वेताली निभा B. १७. °उच्चीयानातिचिरेण° $C_1$. $C_2$.

साम्। समवसिते च संध्यासमये समनन्तरमपरिमितयशःपानतृषिताय मुक्ताशैलशिलाचषक इव निजकुलकीर्त्यां कृतयुगकरणोद्यतायादिराजराजतशासनमुद्रानिवेश इव राज्यश्रिया सकलद्वीपजिगीषाचालिताय श्वेतद्वीपदूत ईव चायत्या श्वेतभानुरुपानीयत निशया नेरन्द्रायेति ॥ भद्रमोम् ॥

इति श्रीचित्रभानुसूनुमहाकविचक्रचूडामणिश्रीबाणभट्टकृतौ श्रीहर्षचरिते महाकाव्ये विन्ध्याद्रिनिवेशनं नामाष्टम उच्छ्वासः सम्पूर्णः ॥ ८ ॥

॥ समाप्तमिदं श्रीहर्षचरितमहाकाव्यम् ॥

समवसिते निवृत्ते। संध्यासमये निशया नरेन्द्राय श्वेतभानुरुपानीयतोपायनीकृत इति संबन्धः। आदिराजस्य मनोर्वैन्यस्य वा। मुद्रानिवेशो राज्याधिकारमहामुद्रा। चलिताय निर्गताय। आयत्यागामिशुभदैवेनेति भद्रमों। दुर्बोधे हर्षचरिते संप्रदायानुरोधतः। गूढार्थोन्मुद्रणां चक्रे शंकरो विदुषां कृते ॥

इति श्रीमहाकविचूडामणिशंकरकविविरचिते हर्षचरितसंकेतेष्टम उच्छ्वासः सम्पूर्णः ॥ ८ ॥

॥ समाप्तोयं हर्षचरितसंकेतः ॥

---

१. स समवसिते B., अवसिते K. $K_1$. Jambû ed. २. आदिराजतशासनमुद्राविनिवेशः A. ३. जिगीषया चलितायाः A. B. D. T. ४. इव वा चायत्या A. B. D. ५. नरेन्द्रेणेति $K_2$. Jambû ed. ६. इति महाकविश्रीबाणभट्टविरचिते श्रीहर्षचरितेष्टम उच्छ्वासकः समाप्तः A. B. ७. °सुत° K. ८. ओं तत्सत् सम्पूर्ण. K. $K^6$.

# BOMBAY SANSKRIT & PRAKRIT SERIES.

*Edited under the superintendence of Prof. S. R. Bhandarkar, M. A., and Prof. V. S. Ghate, M. A.*

| | Rs. | a. | p. |
|---|---|---|---|
| Âpastambîya Dharmasûtra, Part I, with Critical Notes and Index and various Readings of the Hiraṇyakeśi-Dharmasûtra by Dr. G. Buhler (B. S. S. No. 43). ... ... ... | 1 | 6 | 0 |
| " " Part II, containing extracts from Haradatta's Commentrary called Ujjvalâ by Dr. G. Buhler (B. S. S. No. 50)... ... ... | 1 | 2 | 0 |
| Âtharvaṇa Upanishads and Commentaries, by Col. G. A. Jacob (B. S. S. No. 40) ... ... ... ... | 1 | 4 | 0 |
| Bhaṭṭi-Kâvya with Mallinâtha's Commentary, Vol. I., by K. P. Trivedi, B. A. (B. S. S. No. 56)... | 9 | 0 | 0 |
| " " Vol. II., by K. P. Trivedi, B. A. (B. S. S. No. 57) ... ... ... ... ... | 6 | 0 | 0 |
| Concordance to the Principal Upanishads and Bhagavadgîtâ by Col. G. A. Jacob (B. S. S. No. 39) ... ... | 4 | 0 | 0 |
| Daśakumâracharita of Daṇḍin, Part I., with Critical Notes, etc., by Dr. G. Buhler (B. S. S. No. 10)—*Under revision.* ... ... ... ... | ... | | |
| " " Part II., by Dr. P. Peterson (B. S. S. No. 42) ... | 0 | 8 | 0 |
| Deśînâmamâlâ Part I., Text and Critical Notes, by Prof. Pischel and Dr. G. Buhler (B. S. S. No. 17) ... ... | ... | | |
| Ekâvali of Vidyâdhara, with the Commentary, Tarala, of Mallinâtha, and Critical Notes, etc., by K. P. Trivedi, B. A. (B. S. S. No. 63) ... ... ... ... | 14 | 0 | 0 |
| Gaudavaho, by Vâkpati, by S. P. Pandit, M. A. (B. S. S. No. 34) ... ... ... ... ... ... | 3 | 0 | 0 |
| Hand-book to Ṛigveda, Part I., by Dr. P. Peterson (B. S. S. No. 41) ... ... ... | 1 | 8 | 0 |
| " " Part II., by Dr. P. Peterson (B. S. S. No. 43) ... ... ... ... ... ... | 2 | 8 | 0 |
| Harshacharita, by Dr. A. A. Führer (B. S. S. No. 66) ... | 2 | 0 | 0 |

| | Rs. | a. | p. |
|---|---|---|---|
| Hitopadeśa of Nârâyaṇa, by Dr. P. Peterson (B. S. S. No. 33). ... ... ... ... ... ... | 0 | 14 | 0 |
| Hymns from the Ṛigveda, 3rd edn., by Dr. P. Peterson and S. R. Bhandarkar, M. A. (B. S. S. No. 36) ... | 2 | 4 | 0 |
| Hymns from the Rigveda (Second Selection), by Dr. P. Peterson (B. S. S. No. 58) ... .. ... ... ... | 4 | 0 | 0 |
| Kâdambarî, Vol. I. (Text), by Dr. P. Peterson (B. S. S. No. 24) ... ... ... ... | 2 | 0 | 0 |
| ,, Vol. II. (Introduction and Notes), by Dr. P. Peterson (B. S. S. No. 24) ... ... ... ... | 4 | 8 | 0 |
| Kîrti-Kaumudî, by A. V. Kathavate, B. A. (B. S. S. No. 25)—*Copy-right restored to the Editor* ... ... | | | |
| Kumârapâla-Charita, by S.P. Pandit, M.A. (B.S.S.No. 60) | 8 | 8 | 0 |
| Mṛichchhakaṭika with two Commentaries and various Readings, by N. B. Godbole, B. A. (B. S. S. No. 52) ... | 3 | 8 | 0 |
| Mâlavikâgnimitra by S. P. Pandit, M. A. (B. S. S. No. 6), 2nd edition. ... ... ... ... ... ... | 2 | 2 | 0 |
| Mâlatî-Mâdhava, with Critical Notes, etc., by Dr. R. G. Bhandarkar (B. S. S. No. 15), 2nd edition ... ... | 4 | 4 | 0 |
| Mahâbhâshya of Patañjali, Vol. I., Parts I., II and III. (together), 2nd edition, by Dr. F. Kielhorn (B. S. S. Nos. 18-20) ... | 4 | 8 | 0 |
| ,, ,, ,, Part II., by Do. (B. S.S. No. 19)... | 1 | 0 | 0 |
| ,, ,, ,, Part III., by Do. (B. S.S. No. 20)... | 1 | 0 | 0 |
| ,, ,, Vol. II., Parts I., II. and III. (together), 2nd edition, by Dr. F. Kielhorn (B. S. S. Nos. 21, 22 and 26) ... ... | 9 | 0 | 0 |
| ,, ,, Vol. III, Parts I., II. and III. (together), 2nd edn., by Do. (B. S. S. Nos. 28–30). ... | 9 | 0 | 0 |
| Mudrârâkshasa, with the Commentary of Dhuṇḍirâja, by K. T. Telang, M. A. (B. S. S. No. 27)—*Copy-right restored to the Editor* ... ... ... ... ... | ... | | |
| Mahânârâyaṇa Upanishad, by Col. G. A. Jacob (B. S. S. No. 35) ... ... ... ... ... ... | 0 | 7 | 0 |
| Naishkarmyasiddhi, with the Chandrikâ of Jñânottama, by Col. G. A. Jacob (B. S. S. No. 38), 2nd Edn. ... | 2 | 8 | 0 |

| | Rs. | a. | p. |
|---|---|---|---|
| Navasâhasâṅkacharita, Part I., by Vamanashastri Islampurkar (B. S. S. No. 53)... ... ... ... ... | 1 | 10 | 0 |
| Nîti and Vairâgya S'atakas, with Notes and extracts from two Commentaries, by K. T. Telang, M. A. (B. S. S. No. 11)—*Copy-right restored to the Editor* ... ... | ... | | |
| Nyâyakośa by Mahâmahopâdhyâya Bhîmâchârya Zaḷkikar (B. S. S. No. 49)... ... ... ... ... | 6 | 0 | 0 |
| Pañchatantra, Book I., with Notes, by Dr. F. Kielhorn (B. S. S. No. 4) ... ... | 0 | 6 | 0 |
| " Books II. and III, with Notes, by Dr. G. Bühler (B. S. S. No. 3) ... | 0 | 4 | 0 |
| " Books IV. and V. with Notes, by Dr. G. Bühler (B. S. S. No. 1) ... | 0 | 4 | 0 |
| Parâśara-Smṛiti, Vol. I., Part I., by Vamanshastri Islampurkar (B. S. S. No. 47) ... ... | 2 | 2 | 0 |
| " " Vol. I., Part II., by Do. (B. S. S. No. 48) | 2 | 0 | 0 |
| " " Vol. II., Part I., by Do. (B. S. S. No. 59) | 4 | 0 | 0 |
| " " Vol. II., Part II., by Do. (B. S. S. No. 64) | 5 | 0 | 0 |
| Paribhâshenduśekhara, Part I., Text and various Readings, by Dr. F. Kielhorn (B. S. S. No. 2) ... ... ... ... | 0 | 8 | 0 |
| " Part II., Translation and Notes, by Do. (Paribhâshâs 1-37), (B. S. S. No. 7) ... ... | 0 | 8 | 0 |
| " Part II., Translation and Notes by Do. (Paribhâshâs 38 to 69) (B. S. S. No. 9)... ... ... | 0 | 8 | 0 |
| " Part II., Translation and Notes by Do. (Paribhâshâs 70 to 122), (B. S. S. No. 12) ... ... | 0 | 8 | 0 |
| Pâtañjala-Sûtrâṇi, with the Scholium of Vyâsa and Vâchaspati's Commentary, by Mahâmahopadhyâya Rajaram Shastri Bodas (B. S. S. No. 12) ... ... ... | 1 | 10 | 0 |
| Pratâparudrayaśobhûshaṇa of Vidyânâtha, by K. P. Trivedi, B. A. (B. S. S. No. 65) ... ... ... ... | 11 | 0 | 0 |
| Raghuvaṃśa, Part I. (Cantos i–vi), with Mallinâtha's Commentary and Notes, by S. P. Pandit, M. A. (B. S. S. No. 5) ... ... ... ... | 1 | 8 | 0 |

| | Rs. | a. | p. |
|---|---|---|---|
| Raghuvaṁśa, Part II. ( Cantos vii–xiii ), with Mallinâtha's Commentary and Notes, by S. P. Pandit, M. A. (B. S. S. No. 8) ... ... ... | 0 | 12 | 0 |
| „ Part III. ( Cantos xiv–xix, with Mallinâtha's Commentary and Notes, by Do. (B. S. S, No. 13) ... ... ... ... ... | 0 | 8 | 0 |
| Râjataraṅgiṇi, Vol. I., by Pandit Durgaprasad (B. S S. No. 45) ... ... ... ... ... | 1 | 8 | 0 |
| „ Vol. II., by Do. (B. S. S. No. 51) ... ... | 1 | 4 | 0 |
| „ Vol. III., by Dr. P. Peterson (B.S.S. No. 54) | 1 | 2 | 0 |
| Rekhâgaṇita, Vol. I., by H. H. Dhurva, B. A. and K. P. Trivedi, B. A. (B. S. S. No. 61) ... | 12 | 0 | 0 |
| Do. Vol. II., by Do. Do. (B. S. S. No. 62) ... | 9 | 0 | 0 |
| S'ârṅgadharapaddhati, Vol. I., by Dr. P. Peterson (B. S. S. No 37)... ... ... ... ... ... ... | 3 | 0 | 0 |
| Subhâshitâvali of Vallabhadeva, by Do. (B. S. S. No. 31) ... | 2 | 8 | 0 |
| Tarka-Kaumudî of Laugâkshi Bhâskar by M. N. Dvivedi, B. A. (B. S. S. No. 32)—*Copy-right restored to the Editor....* ... ... ... ... ... ... | ... | | |
| Tarka-Saṃgraha, with two Commentaries and Notes, by Y. V. Athalye, M. A. (B. S. S. 55) ... ... ... | ... | | |
| Vâsishṭha Dharmaśâtra, by Dr. A.A. Fuhrer (B.S.S. No. 23) | 0 | 8 | 0 |
| Vikramâṅkadevacharita, by Dr. G. Bühler (B. S. S. No. 14) —*Copy-right restored to the Editor* ... ... ... | | | |
| Vikramorvaśîya, with Notes, 3rd edn., by S.P. Pandit, M.A. and B. R. Arte, M. A. (B. S. S. No. 16) ... ... | 2 | 0 | 0 |

## SANSKRIT PUBLICATIONS NOT INCLUDED IN THE BOMBAY SANSKRIT AND PRAKRIT SERIES.

| | | | |
|---|---|---|---|
| *Amarakośa*, the Thesaurus of Sanskrit Words of Amara-Simha with the Commentary of Maheśvara. Edited by Raghunath Shastri Talekar with Index ... ... | 0 | 13 | 0 |
| *Atharvaveda-Saṃhitâ* with the Commentary of Sâyaṇâchârya. Edited by S. P. Pandit, M. A., Vols. I., II., III., and IV., each at ... ... ... ... ... | 10 | 0 | 0 |
| Kâvyaprakâśa (2nd edition). Edited by Vâmanâchârya Zalkikar ... ... ... ... ... ... | 5 | 5 | 0 |

## Pahlavi.

| | | | |
|---|---|---|---|
| Vendidad, complete in 2 Volumes ... ... ... ... | 10 | 0 | 0 |